भेदः । तदाहगार्ग्यः) प्रभवोविभवःशुक्लःप्रमोदोथप्रजापतिः ॥ अंगिराश्रीमुखो भावोयुवाधातेश्वरस्तथा॥बहुधान्यःप्रमाथीचविक्रमोऽथवृषस्तथा॥चित्रभानुः सुभानुश्चतारणःपार्थिवोव्ययः ॥ सर्वजित्सर्वधारीचविरोधीविकृतिःखरः ॥ नंदनोविजयश्चैवजयोमन्मथदुर्मुखौ॥हेमलंबोविलंबोथविकारीशार्वरीप्लवः ॥ शुभकृच्छोभनःक्रोधी विश्वावसुपराभवौ ॥ प्लवंगःकीलकःसौम्यःसाधारण विरोधकृत्॥ परिधावीप्रमादीच आनंदोराक्षसोनलः ॥ पिंगलःकालयुक्तश्च सिद्धार्थीरौद्रदुर्मती । दुंदुभीरुधिरोद्गारीरक्ताक्षीक्रोधनःक्षयइति (यद्यपि ज्योतिषेगुरोर्मध्यम * राशिभोगेनप्रभवादीनांमाघादौप्रवृत्तिरुक्तातथापिप्रभ वादीनांचांद्रत्वमप्यस्ति) चांद्राणांप्रभवादीनांपंचकेपंचकेयुगेइतिमाधवोक्तःते नचांद्रःप्रभवादिश्चचैत्रसितेप्रवर्ततेबार्हस्पत्यस्तुमाघादौ (तयोर्विनियोगोज्योति र्निबंधेब्रह्मसिद्धांते)व्यावहारिकसंज्ञोऽयंकालःस्मृत्यादिकर्मसु ॥ योज्यःसर्वत्र त्रापिजैवोवानर्मदोत्तरे ॥ आर्ष्टिषेणः ॥ स्मरेत्सर्वत्रकर्मादौचांद्रंसंवत्सरंसदा ॥ नान्यं यस्माद्वत्सरादौप्रवृत्तिस्तस्यकीर्तितेति (अयनंतुसौरंतुत्रयात्मकं) सौरर्तुत्रितयं प्रदिष्टमयनमितिदीपिकोक्तेः तच्चद्विविधंदक्षिणमुत्तरंचेतिकर्कसंक्रांति र्दक्षि णायनंमकरेत्यस्य (अनयोर्विनियोगमाहमदनरत्नेसत्यव्रतः) देवतारामवाप्यादि प्रतिष्ठोदङ्मुखेरवौ ॥ दक्षिणाशामुखेकुर्वन्नतत्फलमवाप्नुयात् ॥ वैखानसः ॥ मा तृभैरववाराहनरसिंहत्रिविक्रमाः ॥ महिषासुरहंत्र्यश्चस्थाप्यावैदक्षिणायने ॥ वैशब्दोप्यर्थेनतुदक्षिणायनएवेतिनियमः पूर्ववचनेदक्षिणायनेनिषिद्धायादेव प्रतिष्ठायादेवविषयेप्रतिप्रसवमात्रात् ॥ रत्नमालायाम् ॥ गृहप्रवेशत्रिदशप्रतिष्ठा विवाहचौलव्रतबंधपूर्वम् ॥ सौम्यायनेकर्मशुभंविधेयंयद्गर्हितंतत्खलुदक्षिणे चेति ॥ अस्यापवादः काशीखंडे ॥ सदाकृतयुगंचास्तुसदाचास्तूत्तरायणम् ॥ सदा महोदयश्चास्तुकाश्यांनिवसतांसतां ॥ इत्ययनं (ऋतुर्मासद्वयात्मा) मलमासेतुमा

---

* गोचागजारविर्गीतःशशिनीभगोश्वाः पंचागनयोथषडिलाब्धयउच्चभुक्तिः ॥ राहोस्त्वयंकुशशिनोसृज इंदुरामास्तर्काश्विनोच्चचलकेंद्रजयोर्थहित्वा ॥ लिप्ताजिनांविकलिका थगुरोः शराःखं शुक्राशुकेंद्रगतिरद्रि गुणाःशनेर्द्वे ॥



संद्वयात्मकस्त्वेकोमासस्तेन मासद्वयात्मकत्वमविरुद्धम् सद्वेधा चांद्रःसौरश्च
चैत्रारंभोवसंतादिश्चांद्रःमीनारंभोमेषारंभोवासौरः मीनमेषयोर्मेषवृषयोर्वाव
संतइतिबौधायनोक्तेः ॥ अनयोर्विनियोगमाहत्रिकांडमंडनः ॥ श्रौतस्मार्तक्रियाःसर्वाःकु
र्याच्चांद्रमसर्तुषु ॥ तदभावेतुसौरर्तुष्वितिज्योतिर्विदांमतम् ॥ सोऽद्विविधोपिषोढा
वसंतोग्रीष्मोवर्षाःशरद्धेमंतःशिशिरःइत्यृतुःमासश्चतुर्धासावनःसौरश्चांद्रोना
क्षत्रइतित्रिंशाहिनःसावनःअर्कसंक्रांतेःसंक्रांत्यवधिःसौरःयद्यपिहेमाद्रिमाधवका
लादर्शाद्यालोचनेनमेषसंक्रांत्यासमाप्तामावास्यकत्वं चैत्रत्वमितिलक्षणाच्चमेष
संक्रांतेश्चैत्रत्वंप्रतीयतेतथापिमेषसंक्रमेदर्शद्वयेसति वैशाखस्यैवाधिक्यात्तत्पूर्व
भावित्वेनमीनस्यैवचैत्रत्वंयुक्तंएवंमेषादयोवैशाखाःअतोमीनसंक्रान्त्यमध्यस्थ
पौर्णमासिकत्वमाद्यतिथिकत्वंवाचैत्रत्वमितिलक्षणात् मीनएवसौरश्चैत्रःवै
एवंवैशाखादयोपिमेषाद्याज्ञेयाः(सौरमासप्रसंगात्संक्रांतिनिर्णयउच्यते)तत्रपूर्व
तोपिपरतोपिसंक्रमात्पुण्यकालघटिकास्तुषोडशेतिसामान्यतःपुण्यकालःसर्वै
रुक्तःविशेषस्तूच्यतेऽत्रसामकाःसंग्रहश्लोकाः ॥ प्रागूर्ध्वंदशपंचतःषडथनिस्त
त्तत्पराःपूर्वतस्त्रिंशत्षोडशपूर्वतोथपरतःपूर्वाःपराःस्युर्दश । पूर्वाःषोडशचोत्त
राश्चतुर्भुवःपश्चात्खवेदाःपुनःपूर्वाःषोडशचोत्तराः पुनरयोपुण्यास्तुमेषादितः
अस्यार्थः॥मेषेप्रागूर्ध्वंचदशघटिकाःपुण्यकालःवृषेपूर्वाःषोडशमिथुनेपराःषो
डश कर्केपूर्वास्त्रिंशत्सिंहेपूर्वाःषोडशकन्यायांपराः षोडशतुलायांप्रागूर्ध्वंद
शवृश्चिकेपूर्वाः षोडशधनुषिपराःषोडशमकरेचत्वारिंशत्पराः इदंचहेमाद्रि
मतेनोक्तम् माधवमतेत्वत्रपराविंशतिःपुण्याः कुंभेपूर्वाः षोडश मीनेपराः षो
डशेति याप्युत्तरापुण्यतमामयोक्तासायंभवेत्सायदिसापिपूर्वा ॥ पूर्वातुयोक्ता
यदिसाविभाते साप्युत्तरारात्रिनिषेधतःस्यात् ॥ अर्वाङ्निशीथाद्यदिसंक्रमः
स्यात्पूर्वेऽह्निपुण्यंपरतःपरेऽह्नि॥ आसन्न*यामद्वयमेवपुण्यंनिशीथमध्येतुदिन
द्वयंस्यात्॥ कर्कझषेप्येवमितिह्युवाचहेमाद्रिसूरिश्चतथापरार्कः॥ झषःप्रदोषे
यदिवार्धरात्रेपरेऽह्निपुण्यंत्वथकर्कटश्चेत् ॥ प्रभातकालेयदिवानिशीथेपूर्वेऽह्नि

* आदौपुण्यंविजानीयाद्यत्राह्निभातिथिर्भवेदितिवाक्यैकवाक्यतयार्थोबोध्यःइदमप्ययनव्यतिरिक्तमेव ॥

पुण्यत्वमितिमाधवार्यः ॥ अत्रमूलवचनानिमाधवापरार्कहेमाद्र्यादिषुद्रष्टव्यानि (सर्वासुसंक्रांतिषुदानविशेषोहेमाद्रौदानकांडेउक्तः। विश्वामित्रः) मेषसंक्रमणेभानोर्मेषदानंमहाफलं। वृषसंक्रमणेदानंगवांप्रोक्तंतथैवच ॥ वस्त्रान्नपानदानानि मिथुनेविहितानितु ॥ घृतधेनुप्रदानंचकर्कटेपिविशिष्यते सुवर्णछत्रदानंसिंहेपिविहितंसदा ॥ कन्याप्रवेशेवस्त्राणांवेश्मनांदानमेवच ॥ तुलाप्रवेशेतिलानां गोरसानामपीष्टदम्॥ अन्नकीचलितेभानौदीपदानंमहाफलम् ॥ अन्नकीटप्रच कःधनुःप्रवेशेवस्त्राणांयानानांचमहाफलम् ॥ झषप्रवेशेदारूणांदानमग्नेस्तथैव च ॥ कुंभप्रवेशेदानंतुगवांबुतृणस्यच ॥ मीनप्रवेशेस्थानानांमालानामपिचोत्तममिति (अत्रोपवासमाहहेमाद्रावापस्तंब):अयनेविषुवेचैवत्रिरात्रोपोषितोनरः॥ स्नात्वायस्त्वर्चयेद्भानुंसर्वकामफलंलभेत् (अशक्तौतुवृद्धवशिष्ठः) अयनेसंक्रमेचैवग्रहणेचंद्रसूर्ययोः ॥ अहोरात्रोषितःस्नात्वासर्वपापैःप्रमुच्यते॥ अत्रोपवासः संक्रमदिनेदानादितुपुण्यकालदिनइत्याचार्यचूडामणिःविधिलाघवात्पुण्यकालदिनएवोभयमितिवृद्धाःइदंचपुत्रिगृहस्थातिरिक्तविषयम् ॥ आदित्येहनिसंक्रांतिग्रहणेचंद्रसूर्ययोः ॥ उपवासोनकर्तव्यःपुत्रिणागृहिणातथेतिजैमिनिवचनात् (अत्रश्राद्धमुक्तंहेमाद्रौविष्णुधर्मे) श्राद्धंसंक्रमणेभानोःप्रशस्तंपृथिवीपते अपरार्केपिविष्णुः ॥ आदित्यसंक्रमंचैवविषुवंचायनद्वयम् ॥ व्यतीपातोथजन्मर्क्षंचंद्रसूर्यग्रहस्तथा ॥ इतिकालादर्शेधिकं ॥ जन्मभ*मभ्युदयश्चएतांस्तुश्राद्धकालान्वैकाम्यानाहप्रजापतिरिति द्वादशादिदिनैरर्वाग्यनांशप्रवृत्तावपिपुण्यंवक्तुमयनग्रहणम् अन्यथासंक्रमणेसिद्धेरयनग्रहणांव्यर्थंस्यादित्यपरार्कः ॥ हेमाद्रावपिगालवः॥ अयनांशाकतुल्येनकालेनैवस्फुटंभवेत् ॥ मृगकर्कादिगेसूर्येयाम्योदगयनेसति ॥ तदासंक्रांतिकालेस्युरुक्ताविष्णुपदादयइति ॥ अयनांशच्युतिरूपेसंक्रांतिकालेपिविष्णुपदादयः प्रवर्ततेतेनततप्रयुक्तंपुण्यकालादितत्रापिज्ञेयमितिसएवव्याचख्यौ तच्चमेषायनंवृषायनमित्यादिसर्वत्रज्ञेयं ॥ माधवोयोपिजाबालिः॥

---

* अथनृभिःपुत्रीतरैःसंक्रमे ॥ प्राच्यनुहाचितयेथवोपवसनंकार्यमितिदोपिकातोयमुपवासःपूर्वमायाति ॥ २, अतएवाभ्युदयिकमित्यप्युच्यते ॥ ३ मकरः सर्वविष्णुपदाद्युक्तांविद्यादि हयथान्यथेति तत्रैवाधिकं ॥

संक्रांतिषुयथाकालस्तदीयेप्ययनेतथा ॥ अयनेविंशतिःपूर्वामकरेविंशतिः परेति ॥ मकरायणेपूर्वाः विंशतिर्घटिकाःपुण्याःमकरसंक्रांतौतुपश्चाद्विंशतिपुण्याः अत्रायनेतत्संक्रांतिवदित्यर्थः (विष्णुपदादिस्वरूपंचदीपिकायामुक्तम्)हर्यंघ्रिर्वृषसिंहवृश्चिकघटेष्वर्कस्ययःसंक्रमःकन्यामीनधनुर्नृयुक्षुषडशीत्याख्यंतुलामेषयोः॥ प्रोक्तंत्वह्नियुवंभयेयनमुदक्कर्कटकेदक्षिणमिति॥ हर्यंघ्रिर्विष्णुपदम् नृयुक्मिथुनंअत्रचपिंडरहितंश्राद्धंकुर्यात्(तथाचापरार्केमात्स्ये) अयनद्वितयेश्राद्धंविषुवद्वितयेतथा ॥ संक्रांतिषुचसर्वासुपिंडनिर्वपणादृतइति॥ श्राद्धंमूलपाणिस्त्वस्यानिर्मूलत्वात्समूलत्वेपि ॥ ततःप्रभृतिसंक्रांतावुपरागादिपर्वसु । त्रिपिंडमाचरेच्छ्राद्धमेकोद्दिष्टंमृताहनि॥ इतिमात्स्योक्तेर्ग्रहणाग्रहणविकल्पएवेत्याहतत्-न्न(अस्यपार्वणानुवादकत्वेनपिंडविधायकत्वात्पिंडोक्तिः) अन्यथैकपदेपिंडानुवादेवित्रविधौचषट्कर्तुःप्रथमपक्षवद्वैरूप्यापत्तेः(तथाचोभयसमूलत्वेपिंडरहितंपार्वणंकर्तव्यमित्युभयवचनयोरर्थः) त्रिपिंडशब्देनैकोद्दिष्टव्यावर्तनमात्रं (मंगलकृत्येषुविशेषमाहज्योतिर्निबंधेनारदः) त्याज्याःसूर्यस्यसंक्रांतेःपूर्वतःपरतस्तथा ॥ विवाहादिषुकार्येषुनाड्यःषोडशषोडशेति॥ एततपुण्यकालोपलक्षणं ॥ भानोःसंक्रांतिभोगश्चकुलिक*प्रचार्द्धयामकइति॥ ज्योतिःप्रकाशेवर्ज्येषुपरिगणनात् (अयनव्यतिरिक्तासुदशसुसंक्रांतिषुरात्रौस्नानश्राद्धादिनकार्यं) अर्हनिसंक्रमणेकृत्स्नमहःपुण्यंप्रकीर्तितम् ॥ रात्रौसंक्रमणेभानोर्दिनार्धंस्नानदानयोः ॥ अर्धरात्रादधस्तस्मिन्मध्याह्नस्योपरिक्रिया ॥ ऊर्ध्वंसंक्रमणेचोर्ध्वमुदयात्प्रहरद्वयम्॥ पूर्णेचेदर्धरात्रेतुयदासंक्रमतेरविः। प्राहुर्दिनद्वयंपुण्यंमुक्त्वामकरकर्कटौ ॥ इतिवृद्धवसिष्ठादिवचनैरहःपुण्यत्वोक्त्या रात्रौसंक्रमणेभानोर्दिवाकुर्यात्तुतत्क्रियाम्॥ पूर्वस्मात्परतोवापिप्रत्यासन्नस्यतत्फलमितिवसिष्ठवचनाच्चार्थाद्रात्रौस्नानादिनिषेधप्रतीतेःयानितु ॥ विवाहव्रतसंक्रांतिप्रतिष्ठाऋतुजन्मसु ॥ तथोपरागपातादौस्नानेदानेनिशाशुभेति ॥ राहुदर्शनसंक्रांतिविवाहात्ययवृद्धिषु ॥ स्नानदानादिकंकुर्युर्निशिकाम्यव्रतेषुचेत्यादीनिविष्णुगोभिलादिवचनानि

* कुलिकःकालवेलाचयमघंटश्चकण्टकः ॥ वारात् द्विघ्नेक्रमान्मंदेबुधेजीवेकुजेक्षणाः ॥

तानिमकरकर्कसंक्रांतिविषयाणिमुक्त्वा मकरकर्कटा वितितयोर्दिवानुष्ठानस्य पर्युदस्तत्वादितिहेमाद्रिमाधवादयः वस्तुतस्तुप्रागुक्तवचनेन तयोर्दिनद्वयपुण्य त्वादेरेवपर्युदासान्मकरकर्कटयोरपिस्नानंदानंपरेहनीत्यादिभिरह्नः पुण्यत्वो क्तेरह्नःपुण्यत्वानुपपत्त्याकल्परात्रिनिषेधस्यच प्रत्यक्षरात्रिविधिनाबाधात्सर्व संक्रांतिषुरात्रावनुष्ठानेविकल्पःसचदेशाचाराद्व्यवतिष्ठतइतियुक्तःपंथाः अयन योस्तुवक्तव्योविशेषःश्रावणेमाघेचवक्ष्यते (ज्योतिर्निबंधेगर्गः) यस्यजन्मर्क्षमा साद्यरविसंक्रमणंभवेत् ॥ तन्मासाभ्यंतरेतस्यवैरक्लेशधनक्षयाः ॥ तगरसरोरुह पत्रैरंजनीसिद्धार्थलोध्रसंयुक्तैः ॥ स्नानंजन्मर्क्षगतेरविसंक्रमणेनृणांशुभदम् ॥ हे माद्रौ ॥ अह्निचेद्रात्रियुग्मंस्याद्रात्रौचेद्वासरद्वयं ॥ संक्रांतिःपक्षिणीज्ञेयादाना ध्ययनकर्मसु ॥(यत्तुगौडाः) संक्रांत्यांपक्षयोरंतेद्वादश्यांश्राद्धवासरे ॥ सायंसंध्यां नकुर्वीतकुर्वंश्चपितृहाभवेदिति ॥ कर्मोपदेशिन्यांव्यासोक्तेः सायंपुण्यकाले संध्यानिषेधमाहुस्तन्निर्मूलम् अन्यच्चबहुवक्तव्यं विस्तरभीतेर्नोच्यते इतिसंक्रां तिनिर्णयः ॥ पक्षयुग्मजश्चांद्रोमासःसद्वेधाशुक्लादिरमांतःकृष्णादिःपूर्णिमांत श्चेति(तथा चत्रिकांडमंडनः) चांद्रोपिशुक्लपक्षादिःकृष्णादिर्वेतिचद्विधा ॥ इ त्युक्त्वादेशभेदेनतद्व्यवस्थामाह॥ कृष्णपक्षादिकंमासंनांगीकुर्वंतिकेचन॥ येपी च्छंतिनतेषामपीष्टोविंध्यस्यदक्षिणेइति॥ विंध्यस्यदक्षिणेकृष्णादिनिषेधादुत्तर तोद्वयोरभ्यनुज्ञागम्यतेतत्रापिशुक्लादिर्मुख्यःकृष्णादिर्गौणःशास्त्रे शुचैत्रशुक्ल प्रतिपदेवचांद्रसंवत्सरारंभोक्तेःतदुक्तं दीपिकायां ॥ चांद्रोब्दोमधुशुक्लगप्रतिप दारंभइतिनहियेकृष्णादिंमन्यंतेतेषांवत्सरारंभोभिद्यतेअतः शुक्लादिर्मुख्यःकृ ष्णादिनामलमासासंभवाच्चचंद्रस्यसर्वनक्षत्रभोगेननाक्षत्रोमासः सावनादीनांव्य वस्थोक्ताहेमाद्रौब्रह्मसिद्धांते ॥ अमावास्यापरिच्छिन्नोमासःस्याद्ब्राह्मणस्य तु ॥ संक्रांतिपौर्णमासीभ्यांतथैवनृपवैश्ययोः ( अत्रब्राह्मणादीनांयत्रकर्मवि शेषेवचनांतरेणावसंते ब्राह्मणोग्नीनादधीतेत्यादिवन्मासउक्तस्तत्रदर्शांतत्वमात्रं नियम्यते) नतुसर्वकर्मसुदर्शांतएवेतिवृद्धाद्यर्थसौभरेहीयादिनिधननियमवाद्व धिलाघवात् त्रैवर्णिकानांसर्वकर्मसुमासविशेषविधेःसावनादीनांशूद्रानुलोमा

दिपरत्वापत्तेश्चेतिगुरुचरणाः ज्योतिर्गर्गः ॥ सौरोमासोविवाहादौयज्ञादौसाव
नःस्मृतः ॥ आब्दिकेपितृकार्येचचांद्रोमासःप्रशस्यते ॥ ऋष्यशृंगः ॥ विवाहव्रत
यज्ञेषुसौरंमानंप्रशस्यते ॥ पार्वणेत्वष्टकाश्राद्धेचांद्रमिष्टंतथाब्दिके ॥ स्मृत्यंतरे ॥
एकोद्दिष्टविवाहादौक्षरणादौसौरसावनौ ॥ ज्योतिर्गर्गः ॥ आयुर्दायविभागश्च
प्रायश्चित्तक्रियातथा ॥ सावनेनैवकर्तव्याशत्रूणांचाप्युपासना ॥ विष्णुधर्मे ॥
नक्षत्रसत्रायणानिचेंदोर्मासिनकुर्याद्गणात्मकेनेति ॥ ब्राह्मे ॥ तिथिकृत्येचकृ
ष्णादिंव्रतेशुक्लादिमेवच ॥ विवाहादौचसौरादिंमासंकृत्येविनिर्दिशेत (अथम
लमासः) तत्रैकमात्रसंक्रांतिरहितःसितादिश्चांद्रोमासोमलमासः एकमात्रसंक्रां
तिराहित्यमसंक्रांतत्वेनसंक्रांतिद्वयत्वेनचभवतीतिमलमासोद्वेधाअधिमासः क्ष
यमासश्चेति ॥ तदुक्तंकाठकगृह्ये ॥ यस्मिन्मासेनसंक्रांतिःसंक्रांतिद्वयमेववा ॥ मलमा
सःसविज्ञेयोमासःस्यात्तुत्रयोदशइति ॥ सत्यव्रतोपिराशिद्वयंयत्रमासेसंक्रमतेदिवा
करः ॥ नाधिमासोभवेदेषमलमासस्तुकेवलमिति ॥ अधिकमासस्यकालनियममाहवशिष्ठः ॥
द्वा*त्रिंशद्भिर्मितैर्मासैर्दिनैःषोडशभिस्तथाघटिकानांचतुष्केणपतत्यधिकमास
कइति ॥ एतच्चसावनादिमानेनसंभवार्थंनतुनियमार्थमन्यथाषोडशदिनाधि
कद्वात्रिंशन्मासानंतरंक्षयापत्तेर्नियमेनशुक्लादित्वभंगापत्तेः तेनन्यूनाधिककाले
मलमासपातेपिनदोषः अतएवोक्तंमाधवीयेमासेत्रिंशत्तमेभवेदितिक्षयस्यापि
ज्योतिःशास्त्रे असंक्रांतिमासोधिमासः स्फुटंस्यात्द्विसंक्रांतिमासः क्षयाख्यः
कदाचित ॥ क्षयःकार्तिकादित्रयेनान्यतः स्यात्तदावर्षमध्येधिमासद्वयंच ॥ ए
कःक्षयात्पूर्वंपरतश्चैकइत्यधिमासद्वयंभवतीत्यर्थःअत्रविशेषमाह ॥ जाबालिः ॥
मासद्वयेब्दमध्येतुसंक्रांतिर्नयदाभवेत ॥ प्राकृतस्तत्रपूर्वःस्यादधिमासस्तथोत्तरइ
ति ॥ उत्तरएवकालाधिक्यंनपूर्वस्मिन्नित्यर्थः ॥ यत्तुब्रह्मसिद्धांते ॥ चैत्रादर्वाङ्
नाधिमासः परतस्त्वधिकोभवेदितितत्रचैत्रात्पूर्वमसंक्रांतद्वयेपूर्वोनाधिकःकिंतु

*सौरसंवत्सरस्यांते मानेनशशिजेनतु ॥ एकादशातिरिच्यंते दिनानिभृगुनंदनः ॥ मासद्वयेसार्द्धमासे तस्मान्मासोतिरिच्यते इतितुतत्त्वम् ॥ यदि द्वात्रिंशन्मासानंतरमधिकस्तदा एकस्मिन्नपिवर्षे द्वौमासावधिमासौ शुद्धःकर्मार्हः † वक्ष्यमाणरीत्याच चैत्रात्पूर्वमसंक्रांतमसद्वयेप्रथमोनाधिमासः किंतुपरइत्यर्थः ॥

परइत्यर्थः यच्च ॥ ज्योतिःसिद्धांते ॥ घटकन्यागतेसूर्येवृश्चिकेवाथधन्विनि ॥ मकरेवाथकुंभेवानाधिमासोविधीयतेइति ॥ तत्रवृश्चिकादिचतुष्टयेमलमासेसतिपूर्वस ॥ तुलाकन्यागतेसूर्येक्षयात्पूर्वंकालाधिकानिषेधार्थंनत्वधिकमात्रस्यदर्शानां फाल्गुनादीनांप्रायोमाघस्यचक्वचित ॥ नपुंसकत्वं*भवतीत्येषशास्त्रविनिश्चयइतिहेमाद्रौविष्णुधर्मविरोधात् मलमासेष्टकादिनिषेधानुपपत्तेश्चमकरेवाथकुंभेवेतिदृष्टांतार्थप्राप्त्यभावाच्च क्षयस्यागमनकालउक्तः ॥ सिद्धांतशिरोमणौ ॥ गातोब्ध्यद्रिनंदैर्मितेशाककालेतिथीशैर्भविष्यत्यथांगाक्षसूर्यैः ॥ गजाद्र्यग्निभूभिस्तथाप्रायशोयंकुवेदेंदुवर्षैः क्वचिद्गोकुभिश्चेति ॥ अब्धयश्चत्वारः अद्रयः सप्त नंदाःनववर्णानांप्रातिलोम्येनपाते ९ ७ ४ तैर्मितेवर्षेकश्चित्क्षयमासःपूर्वंजातइत्यर्थः तिथयःपंचदश १५ ईशाएकादश ११ १५ एवंमितेयातेकश्चिद्भविष्यतीत्यर्थः अंगा ६ क्ष ५ सूर्याः १२ एकत्र १२ ५६ गजाः ८ अद्रयः ७ अग्नयः ३ भूः १ एकत्र १३ ७८ कुः १ वेदाः ४ इंदुः १ एकत्र १४१ गावः ९ कुः १ एकत्र १९ एतैर्मितेवर्षेयातेकश्चिद्भविष्यतीत्यर्थः (अथमलमासेकार्याकार्यंनिरूप्यते। तत्रजाबालिः) नित्यनैमित्तिकेकुर्याच्छ्राद्धंकुर्यान्मलिम्लुचे ॥ तीर्थनक्षत्रवारोक्तंकाम्यं नैवकदाचन ॥ अयंचकाम्यनिषेधःआरंभसमाप्तिविषयः ॥ असूर्यानामयेमासानतेषुमससंमताः ॥ व्रतानांचैवयज्ञानामारंभश्चसमा‡पनमितितेनैवोक्तत्वात् असूर्याअधिकमासाइत्यर्थः तत्रमंडलंतपतेरविरितिवचनात्कारीर्यादेःकाम्यस्यत्वारंभसमाप्तीभवतएवेत्यादिरस्त्यन्यत्रविस्तरः काठकगृह्येपि मलेऽन्यद्गतिंकुर्यान्नित्यांनैमित्तिकींक्रियामितितानिनैमित्तिकानिदीपिकायामुक्ता † नित्यनैमित्ति

---

* पुंसःसूर्यस्याभावान्नपुंसकत्वं ॥ अरुणःसूर्योभानुस्तपनश्चंद्रोरविर्गभस्तिश्च ॥ अर्यमाहिरण्यरेता दिवाकरोमित्रविष्णुश्च ॥ एतेद्वादशसूर्यामाघाद्येषूदयंतिमासेषु ॥ निःसूर्योधिकमासोमलिम्लुचाख्यस्ततः पापः ॥ मासेषुद्वादशादित्यास्तपंतीहयथाक्रमं ॥ नपुंसकेधिकेमासिमंडलं तपतेरवेरित्युक्तेः ॥ ‡ यत्तु ॥ प्रवृत्तंमलमासात्प्राक्काम्यंकर्मसमापयेत् ॥ आगतेमलमासेपितत्समाप्तिर्नसंशयइतितत्सावनमासप्रवृत्तकृच्छ्रचांद्रायणादिपरमितिमाधवः † यद्यन्यमासेनुष्ठानेकालातिक्रमनिमित्तप्रायश्चित्तापत्तिर्विहितकालालाभेनलोपोवातदित्यर्थः ॥

कर्माग्निनष्ट्यनुगतान्याधानमथाग्निवा संस्कारादिविलोपनेष्वपि पुनःप्रोक्तंप्रवि
शादिकर्मिति गत्यंतरयुतंतुसोमादिकेयमेवतत्रकर्तव्यान्युक्तानि ॥ कालादर्शे ॥ द्वा
दशाहंसपिंडांतं कर्मग्रहणजन्मनोः ॥ सीमान्तेपुंसवेश्राद्धंहावेतौजातकर्मच ॥
रोगेशांतिरलभ्येच योगेश्राद्धव्रतानिच ॥ प्रायश्चित्तनिमित्तस्य वशात्पूर्वेप
रत्रच ॥ अन्वोदकुंभमन्वादिमहालययुगादिषु ॥ श्राद्धंदर्शेप्यहरहःश्राद्धमनादि
मासिकं ॥ मलिम्लुचान्यमासेषुमृतानांश्राद्धमाब्दिकं ॥ श्राद्धन्तुपूर्वदृष्टेषुतीर्थे
ष्वेवयुगादिषु ॥ मन्वादिषुचयद्दानं दानंदैनंदिनंचयत् ॥ तिलगोभूहिरण्या
नांसंध्योपासनयोःक्रिया ॥ पर्वहोमश्चाग्रयणांसाग्नेरिष्टिश्चपर्वणि ॥ नि
त्याग्निहोत्रहोमश्च देवतातिथिपूजनं ॥ स्नानंचस्नानविधिनाप्यभक्ष्यापेयव
र्जनं ॥ तर्पणंवानिमित्तस्य नित्यत्वादुभयत्रचेति ॥ एतौपुंसवनसीमंतौएतच्च
गर्भाधानाद्यन्नप्राशनांतसंस्कारोपलक्षणं ॥ तदुक्तंदीपिकायां ॥ गर्भाधानमुखंच
चौलविधितः प्राग्जातयागंविना कृच्छ्रेष्वाग्रयणं गजेंद्रपुरतच्छायामघान्त्य
योः ॥ तीर्थेन्दुक्षययोश्चपिण्ड्यमधिकेमास्येवमाद्याचरेदितिअलभ्ययोगेर्धोद
यपद्मकादौकाम्यान्यपि व्रतादीनिकार्याणीत्यर्थः पर्वपरत्रमलेशुद्धेचेत्यर्थः म
हालयशब्देनमघात्रयोदश्युच्यतइतिमाधवः दर्शश्राद्धंमलेपिकार्यं (यत्तुऋष्यशृ
ङ्गः) संवत्सरातिरेकेणमासोयःस्यान्मलिम्लुचः ॥ तस्मिंस्त्रयोदशेश्राद्धंनकुर्या
दिंदुसंक्षयइति ॥ तत्काम्यदर्शश्राद्धविषयं । काम्यंनैवकदाचनेतिवचनात् ।
दर्शेचकाम्यंश्राद्धंकन्यांकन्यावेदिनश्चेत्यादिनायाज्ञवल्क्येनोक्तं । नित्यंतुम
लेपिभवत्येव । दर्शेप्यहरहःश्राद्धंदानंचप्रतिवासरं ॥ गोभूतिलहिरण्यानांमासे
पिस्यान्मलिम्लुचे ॥ इतिमात्स्योक्तेरितिहेमाद्र्यादयः (दिवोदासीयेपि) अ
निंदुरिंदुपूर्णाचहरिवारोबुधाष्टमी ॥ नाधिमासेपरित्याज्याः सीमंतान्नाशनेशि
शोरिति ॥ अनिंदुर्दर्शः । द्विविधमप्यमाश्राद्धंनकार्यमित्यपरार्कः । अत्रयद्वि
हितंकर्मउत्तरेमासिकारयेदित्युक्तेः । षष्ट्यातुदिवसैर्मासैरितिशुक्लमासकरणे
पिशास्त्रार्थोपपत्तेर्दर्शश्राद्धं मलेनकार्यमितिप्राचीनगौडाः (शूलपाणिश्चसंव
त्सरप्रदीपेपि) एकराशिस्थितेसूर्येयदादर्शद्वयंभवेत् ॥ दर्शश्राद्धंतदादौस्यात्तत्पर

त्र*मलिम्लुचे॥ अत्रापिनित्यकाम्यभेदेनप्राबल्यव्यवस्था। यद्यपिकालादर्शेसर्ववा र्षिकंमासद्वयेकार्यमित्युक्तंतथापिहेमाद्रिमाधवापरार्कादिमतात्प्रथमाब्दिकं त्रयोदशेमलमासेद्वितीयाद्याब्दिकंतुशुद्धमासएवकार्यं। असंक्रांतेपिकर्तव्यमा ब्दिकंप्रथमंद्विजैः॥ तथैवमासिकंश्राद्धंसपिंडीकरणंतथेतिहारीतोक्तेः। आ ब्दिकंप्रथमंयत्स्यात्तत्कुर्वीतमलिम्लुचे॥ चतुर्दशेतुसंप्राप्तेकुर्वीतपुनराब्दिकमि तिस्मृत्यंतरोक्तेश्चपुनराब्दिकंद्वितीयादिवार्षिकंत्रयोदशेमासेऽतीतेचतुर्दशाद्य दिनेकुर्यादित्यर्थः (यत्तुसत्यव्रतः) वर्षेवर्षेतुयच्छ्राद्धंमातापित्रोर्मृतेहनि॥ मलमा सेनतत्कार्यंव्याघ्रस्यवचनंयथेतितद्द्वितीयादिवार्षिकविषयम्। आब्दिकंप्र थमंयत्स्यात्तत्कुर्वीतमलिम्लुचे॥ इतिपूर्वोक्तवचनात्। यत्रद्वादशमासिकंशुद्धमा सेभवतितत्रत्रयोदशेधिकएवाद्याब्दिकंकार्यं। यत्रत्वधिकमध्येद्वादशमासिकं तत्रतस्याद्विरावृत्तिंकृत्वाचतुर्दशेशुद्धएवप्रथमाब्दिकमितिनिष्कर्षः (तेनद्विती यादिशुद्धमासएवंपृथ्वीचंद्रोदयेदिवोदासीयेमदनपारिजातेचैवं) मलमासमृता नांतुयदासएवाधिकः स्यात्तदातत्रैवकार्यं (यथापैठीनसिः) मलमासमृतानांतुश्रा द्धंयत्प्रतिवत्सरम्॥ मलमासेपिकर्तव्यंनान्येषांतुकथंचनेति (हेमाद्रौव्यासो पि) मलमासमृतानांतुसौरंमानंसमाश्रयेत्॥ सएवदिवसस्तस्यश्राद्धपिंडोदका दिषु॥ अत्राधिकमृतस्यनद्वितीयाद्यब्दीयसौरविधिः द्वितीयादावन्याधिकेया पूर्वनियमविधिवैरूप्यात्किंतुप्रथमाब्दिकस्यमलेनियमात्। सत्यव्रतेनतद्भिन्न स्यसर्वस्याधिकेप्रतिप्रसवमात्रंलाघवात्। अतोनद्वितीयादौसौरमासप्रसंगः। चांद्रस्पष्टंतथाब्दिके मासपक्षतिथिस्पष्टेइत्यादिविरोधाच्च (यत्तुवृद्धवशिष्ठः) श्राद्धीयाहनिसंप्राप्तेअधिमासोभवेद्यदि॥ मासद्वयेपिकुर्वीतश्राद्धमेवंनमुह्यति (यच्चव्यासः) उत्तरेदेवकार्याणिपितृकार्याणिचोभयोरिति तन्मासिकादिवि षयं॥ यौगादिकंमासिकंचश्राद्धंचापरपाक्षिकं। मन्वादिकंतैर्थिकंचकुर्यान्मासद्व येपिचेतिस्मृतिचंद्रिकोक्तेः। तैर्थिकंतीर्थश्राद्धंतच्चमासद्वयेपिकार्यमितित्रिस्थ

---

* मेषादिस्थेसवितरियोयोमासःप्रपूर्यते॥ चांद्रश्चैत्राद्यःसंज्ञेयःपूर्तिद्वित्वेधिमासोंत्यइतिज्योतिःपितामहोक्तेर्मेषाद्यधिकरणदर्शांतत्वादिरूपस्यचैत्रत्वादेर्दर्शद्वयेसत्त्वेंत्योधिमासइतितदभिप्रायकमेतत्॥

लीसेतौभट्टः(केचित्तु)प्रतिमासंमृताहेचश्राद्धंयत्प्रतिवत्सरम् । मन्वादौचयुगादौ
चतन्मासोरुभयोरपीतिमरीचिवचनात् ॥ वर्षेवर्षेतुयच्छ्राद्धंमातापित्रोर्मृतेह
नि ॥ मासद्वयेपितत्कुर्याद्व्याघ्रस्यवचनंयथेतिगालवोक्तेश्च । प्रत्याब्दिकंमा
सद्वयेकार्यमित्याहुः । तत्तुच्छंप्रतिमासं मृताहेक्रियमाणंमासिकं । प्रतिसंवत्स
रंक्रियमाणं कल्पादि*श्राद्धमितिमरीचिवचसोमदनरत्नेनव्याख्यानात् । गा
लवीयस्यचमासद्वयात्मकेक्षयमासइतिमाधवेनव्याख्यानात् । यच्चकैश्चिदुक्त
म् । प्रथमाब्दिकंमासद्वयेकार्यं । आब्दिकंप्रथमंयत्स्यात्तत्कुर्वीतमलिम्लुचे । त्र
योदशेचसंप्राप्ते कुर्वीतपुनराब्दिकमितियमोक्तेःतदपिचिंत्यंपुनराब्दिकंद्विती
यादिवार्षिकंत्रयोदशे८तीतेचतुर्दशेकुर्यात् । अन्यथा । सांवत्सरंनवर्धेतश्राद्धंतत्र
मृतेहनीति पैठीनसिविरोधःस्यादिति (हेमाद्रौपृथ्वीचंद्रोदयेच) एतेननवर्धेतन
छिंद्याच्छुद्धेपिकुर्यादेवेत्यनंतभट्टव्याख्यानमानाभावादुक्तपरास्ता।पूर्वव्याख्यायां
तुहारीतीयेप्रथमग्रहणमवसानंयदपिनिर्णयामृतेपूर्वो कालादर्शवचनात् । म
लमासेश्राद्धदिनस्यवंध्यत्वनिरासार्थोपिद्दुष्टेशेनब्राह्मणान्भोजयित्वाशुद्धमासेस
पिंडकंश्राद्धंकुर्यात् । पिंडवर्जमसंक्रांतेसंक्रांतौपिंडसंयुतं ॥ प्रतिसंवत्सरंश्राद्धमे
वंमासद्वयेपिचेतिवृद्धपराशरोक्तेः । तदपिचिंत्यम् । पूर्वोक्तवचनस्यक्षयपूर्वभा
व्यधिकमासविषयत्वात् । तत्रहिमासद्वयेश्राद्धमुक्तं (तदाहसत्यतपाः) एकएवय
दामासःसंक्रांतिद्वयसंयुतः ॥ मासद्वयगतंश्राद्धंमलमासेपिशस्यतइति॥ मासद्वयग
तंपर्वसंक्रांतिगतंक्षयगतंच । मलमासेक्षयमासे (अपिशब्दात्पूर्वाधिमासेचेतिहे
माद्रिःदीपिकायामपि) ततप्राक्संग्रधिमासकोयदिभवेत्तत्रत्यसांवत्सरं तस्मिं
न्कुर्यात्तथाक्षयेचवचनात्कुर्याद्द्वयोःकोविदइति (कालादर्शेप्येतद्विषयएवेत्यलं
बहुना । मलमासेवर्ज्यान्युक्तानिकालादर्शे)अनित्यमनिमित्तंचदानंचमहदादिकं ॥
अग्न्याधानाध्वरापूर्वतीर्थयात्रामरेक्षणं ॥ देवारामतडागादिप्रतिष्ठामौंजिबंधन
म ॥ आश्रमस्वीकृतिःकाम्यवृषोत्सर्गश्चनिष्क्रमः॥राजाभिषेकःप्रथमश्चूडा

*स्युःपत्तद्वयगाःक्रमात्प्रतिपदाद्याश्चैत्रमासक्रमात् ॥ भूतौमाधवगौमधौतुमदनौज्येष्ठस्थितेपर्वणी ॥
श्राद्धेत्रिंशदमीशुभाःशुभतराःकल्पादयःशुक्लगाइतिदीपिका ॥

कर्मव्रतानिच ॥ अन्नप्राशनमारंभोगृहाणांचप्रवेशनं ॥ स्नानंविवाहोनामानितपन्न देवमहोत्सवः ॥ व्रतारंभसमाप्तीचकर्मकाम्यंचपाप्मनाम् ॥ प्रायश्चित्तन्तुसर्वं स्यमलमासेविवर्जयेत् ॥ उपाकर्मोत्सर्जनंच पवित्रदमनार्पणम् ॥ अवरोहश्चहेमंतःसर्पाणांबलिरष्टकाः ॥ ईशानस्यबलिर्विष्णोःशयनंपरिवर्तनं ॥ दुर्गेन्द्रस्थापनोत्थानेध्वजोत्थानंचवर्जिताः ॥ पूर्वत्रप्रतिषिद्धानिपरत्रान्यच्चदैविकमिति ॥ अत्रमलवचनानिहेमाद्रिमाधवादिभ्योज्ञेयानि (दिवोदासीयेपि) यात्रोत्सवंच देवादिशपथंदिव्यमेवच ॥ मलमासेनकुर्वीतव्यासस्यवचनंयथेति (अयंनिर्णयःक्षयमासेपिज्ञेयः) रविसंक्रमहीनेयोवर्ज्यविवर्ज्यविधिःस्मृतः ॥ सएवतुद्विसंक्रांते मलमासेप्युदीरितइति ॥ काठकगृह्योक्तेः (क्षयमासमृतानांप्रत्याब्दिकेविशेषोहेमाद्रौ) तिथ्यर्धे*प्रथमेपूर्वो द्वितीयेर्द्धेतथोत्तरः ॥ मासावितिबुधैश्चिंत्यौ क्षयमासस्यमध्यगौ ॥ आब्दिकवर्धापनेपिज्ञेयं । यन्मलमासेवर्ज्यमुक्तं तच्छुक्रगुर्वोरस्तादिष्वपिज्ञेयं (तदाबृहस्पतिः) बालेवायदिवावृद्धे शुक्रेवास्तंगतेगुरौ ॥ मलमासइवैतानि वर्जयेद्देवदर्शनमिति ॥ अनादिदेवतां दृष्ट्वा शुचःस्युर्नष्टभार्गवे ॥ मलमासेप्यनावृत्ततीर्थयात्रांविवर्जयेत् ॥ आवृत्ततीर्थदोषाभावमात्रं नतुफलमितिवाचस्पतिमिश्राः । तन्न । असतिबाधकेफलहेतुत्वात्क्षतेः (लल्लोपि) नीचस्थेवक्रसंस्थेप्यतिचरणगते बालवृद्धास्तगेवा संन्यासोदेवयात्राव्रतनियमविधिः कर्णवेधस्तुदीक्षा ॥ मौंजीबंधोंगनानांपरिणयनविधिर्वास्तुदेवप्रतिष्ठा वर्ज्याःसद्भिःप्रयत्नात्त्रिदशपतिगुरौसिंहराशिस्थिते चेति ॥ दीक्षायागदीक्षाआगमदीक्षाचतथा ॥ उद्यानचूडाव्रतबंधदीक्षा विवाहयात्राचवधूप्रवेशः ॥ तडागकूपत्रिदशप्रतिष्ठाबृहस्पतौसिंहगतेनकुर्यात् ॥ (दिवोदासीये) गुर्वादित्येगुरौसिंहे नष्टेशुक्रेमलिम्लुचे ॥ गृहकर्मव्रतंयात्रांमनसापिनचिंतयेत् (अस्यापवादस्तत्रैवब्राह्मे) मुंडनंचोपवासश्च गौतम्यांसिंहगे

---

* यत्तु ॥ मासःसंक्रांतिहीनोधिकइतिकथिताश्शीघ्रवक्रप्रचारैःसंसर्पोबृहस्पतिःस्यात्समविषमतयाचालनं तत्त्वयस्य ॥ पूर्वैश्चन्द्रार्कयोगैर्विरहितसंक्रांतितश्चालनंस्याद्वक्रस्यार्कस्यमासेयदिनचइतिवैमासयुग्मंविचिंत्यमितिवटेश्वरसिद्धांतात् स्थलनसंस्कारपक्षेबोध्यम् ॥





गुरौ ॥ कन्यागतेतुकृष्णायां नतुतत्तीरवासिनां (तथा) आद्यासौगौतमीगंगाद्वितीयाजाह्नवीस्मृता ॥ सर्वतीर्थफलंस्नानाद्गौतम्यांसिंहगेगुरौ (संहिताप्रदीपे) स्यात्सप्तरात्रंगुरुशुक्रयोश्चबालत्वमह्नांदशकंचवार्धके ॥ वृद्धौसितेज्यावशुभौशिशुत्वेशस्तौयतस्तावुपचीयमानौ (वशिष्ठः) अतिचारगतेजीवेवर्जयेत्तदनंतरम् ॥ व्रतोद्वाहादिकार्येषुअष्टाविंशतिवासरान् (बाल्यादिलक्षणमुक्तंब्रह्मसिद्धांते) रविणासतिरन्येषांग्रहाणामस्तउच्यते ॥ ततोऽर्वाग्वार्धकंप्रोक्तमूर्ध्वंबाल्यंप्रकीर्तितमिति (बाल्यादिपरिमाणंचरत्नशते) बालःशुक्रोदिवसदशकंपंचकंचैववृद्धः पश्चादह्नांत्रितयमुदितःपक्षमैंद्यांक्रमेण ॥ जीवोवृद्धःशुचिरपितथापक्षमन्यैःशिशुतौवृद्धौप्रोक्तौदिवसदशकंचापरैःसप्तरात्रम् ॥ पश्चिमतउदयेदशदिनानिबालः । अस्तेपंचदिनानिवृद्धः । पूर्वतोदिनत्रयंबालःपक्षंचवृद्धइत्यर्थः । जीवोगुरुः ( अन्यत्रत्वन्यथोक्तं) प्राक्यश्चादुदितःशुक्रःपंचसप्तदिनैःशिशुः ॥ विपरीतंतुवृद्धत्वंतद्वदेवगुरोरपीति ( सर्वांश्चपक्षाणांव्यवस्थामाहमिहिरः ) बहवोदर्शिताःकालायेबाल्येवार्द्धकेपिवा ॥ ग्राह्यास्तत्राधिकाःशेषादेशभेदाद्वापदीति (देशभेदश्चमदनरत्नेगार्ग्यः) शुक्रोगुरुःप्राक्परात्क्बालोविंध्येदशाऽवंतिषुसप्तरात्रम् ॥ वंगेषुहूणेषुचषट्चपंचशेषेचदेशेत्रिदिनंवदंतीति ॥ अस्तादेरपवादःकाशीखंडे–नग्रहास्तोदयकृतोदोषोविश्वेश्वरालये ॥ त्रिस्थलीसेतौवायवीये–गोदावर्यांगयायांचश्रीशैलेग्रहणाद्वये ॥ सुरासुरगुरूणांचमौढ्यदोषोनविद्यते ॥ ग्रहणद्वयेतन्निमित्तककुरुक्षेत्रयात्रादानादावित्यर्थः । तदाहत्रिस्थलीसेतौलल्लः— उपप्लवेशीतलभानुभान्वोरर्धोदयेवैकपिलाख्यषष्ठ्यां ॥ सुरासुरेज्यास्तम[illegible]पतीर्थयात्राविधिःसंक्रमणेचशस्तः ॥ नमूढदोषोनचराविदोषोनचाधिमासोनमृतिर्नसूतिः ॥ एवमप्युत्तरार्द्धपठंति ।इत्यलंबहुना। (मलमासेचव्रतविशेषउक्तोहेमाद्रौपाद्मे) अधिमासेतुसंप्राप्तेगुडसर्पिर्युतानिच ॥ त्रयस्त्रिंशदपूपानिदातव्यानिदिनेदिने॥ साज्यानिगुडमिश्राणिअधिमासेनृपोत्तम ॥ अधिमासेतुसंप्राप्तेत्रय * स्त्रिंशत्तुदेवताः ॥ उद्दिश्यापूपदानेनपृथ्वीदानफलंलभेत् ॥

*अष्टौवसवएकादशरुद्राद्वादशादित्याःप्रजापतिश्चवषट्कारश्च

त्रयस्त्रिंशदपूपान्नं कांस्यपात्रेनिधायच ॥ सघृतंसहिरण्यंचब्राह्मणायनिवेदयेत ॥ विष्णुरूपीसहस्रांशुःसर्वपापप्रणाशनः ॥ अपूपान्नप्रदानेनममपापंव्यपोहतु ॥ नारायणजगद्बीजभास्करप्रतिरूपक ॥ व्रतेनानेनपुत्रांश्चसंपदंचाभिवर्धय ॥ यस्यहस्तेगदाचक्रेगरुडोयस्यवाहनं ॥ शंखःकरतलेयस्यसमेविष्णुःप्रसीदतु ॥ कलाकाष्ठादिरूपेणनिमेषघटिकादिना ॥ योवंचयतिभूतानितस्मैकालात्मनेनमः ॥ कुरुक्षेत्रमयंदेशःकालःपर्वद्विजोहरिः ॥ पृथ्वीसममिदंदानंगृहाणपुरुषोत्तम ॥ मलानांचविशुद्ध्यर्थंपापप्रशमनायच ॥ पुत्रपौत्राभिवृद्ध्यर्थंतवदास्यामिभास्कर ॥ मंत्रेणानेनयोदद्यात्त्रयस्त्रिंशदपूपकान् ॥ प्राप्नोतिविपुलांलक्ष्मींपुत्रपौत्रादिसंपदइति ॥ इति निर्णयसिंधौमलमासनिर्णयः ।

(पक्षनिर्णयस्तु) दैवेमुख्यःशुक्लपक्षः कृष्णःपित्र्येविशिष्यतइतिमाधवेनोक्तः (अथतिथिनिर्णयः) तत्रतिथिर्द्वेधा । शुद्धाविद्धाच । दिनेतिथ्यंतरसंबंधरहिताशुद्धा । तद्रहिताविद्धा (तत्रशुद्धायामसंदेहाद्विद्धानिर्णीयते) तत्रसामान्यतोवेधमाहमाधवीयेपैठीनसिः । पक्षद्वयेपितिथयस्तिथिंपूर्वांतथोत्तराम् ॥ त्रिभिमुहूर्तैर्विध्यंतिसामान्योयंविधिःस्मृतइति ॥ हेमाद्रिमदनरत्नादौतुद्विमुहूर्तोप्युक्तः उदितेदैवतंभानौपित्र्यंचास्तमितेरवौ ॥ द्विमुहूर्तंत्रिरह्नश्च* प्रचसातिथिहव्यकव्ययोरितिविष्णुधर्मोक्तेः द्विमुहूर्तत्वंचानुकल्पः द्विमुहूर्तापिकर्तव्यायातिथिर्वृद्धिगामिनीतिदक्षेणापिशब्दोक्तेः (अयंवेधःप्रातरेव । सायंतुत्रिमुहूर्तोवेधएव) यांतिथिंसमनुप्राप्ययात्यस्तंपद्मिनीपतिः॥सातिथिस्तद्दिनेप्रोक्तात्रिमुहूर्तैवयाभवेदितिस्कांदोक्तेः दीपिकापि—त्रिमुहूर्तगातुसकलासायेति । यानितु—व्रतोपवासस्नानादौघटिकैकापियाभवेत् ॥ उदयेसातिथिर्ग्राह्याविपरीतातुपैतृका ॥ इत्यादीनिस्कांदादिवचनानितानिवैश्वानराधिकरणन्यायेनावयवस्तुत्यात्रिमुहूर्तप्रशंसापराणि । (तिथिविशेषेवेधविशेषःस्कांदे) । नागोद्वादशनाडीभिर्दिक्पंचदशभिस्तथा ॥ भूतोष्टादशनाडीभिर्दूषयत्युत्तरांतिथिमिति ॥ अयंचोपवासातिरिक्तविषयइतिवक्ष्यते । इतिवेधः (तत्रसर्वातिथिर्यदहःकर्म

* अस्तमितेरवौचद्व्यहस्त्रिमुहूर्तापित्र्यमित्यर्थः १ पंचमी

कालव्यापिनीसैवग्राह्या)कर्म*णोयस्ययःकालस्तत्कालव्यापिनीतिथिः॥ त
याकर्माणिकुर्वीतह्रासवृद्धीनकारणमितिविष्णुधर्मोक्तेः(दिनद्वयेतद्व्याप्तावेक
देशव्याप्तौवायुग्मवाक्यान्निर्णयः)तस्यपूर्वबाधेनोपपत्तेः।कर्मकालस्यप्रधानां
गत्वाच्च। युग्मवाक्यंतुनिगमः। युग्माग्नियुगभूतानांषण्मुन्योर्वसुरंध्रयोः॥ रुद्रे
णद्वादशीयुक्ताचतुर्दश्याचपूर्णिमा॥ प्रतिपद्यप्यमावास्यातिथ्योर्युग्मंमहा
फलं॥ एतद्व्यस्तंमहादोषंहंतिपुण्यंपुराकृतमिति॥ अत्ररंध्रांताःशब्दाः द्वितीया
दिनवम्यंततिथिवाचकाः रुद्रएकादशीद्वितीयातृतीयायुतासाचद्वितीयायुते
तिसप्तयुग्मानीत्यर्थः। इदंचशुक्लपक्षे। अमाप्रतिपद्युग्मस्यपूर्णिमायाप्रवृत्तत्वे
वसत्त्वादितिकेचित्। तत्त्वंवमावास्याप्रतिपद्युग्मात्कृष्णपक्षलिंगात्पक्षद्वयपर
मिदंतत्तद्विशेषवाक्यैःकृष्णेतिथिविशेषोपोह्यतइति। (दशमीतूक्तापुराणसमु-
च्चये)—संपूर्णादशमीकार्यामिश्रितापूर्वयाथवेति॥ (संपूर्णाशुक्लपक्षेत्रयोदशी
तत्सुमंतुनोक्ता—त्रयोदशीतुकर्तव्याद्वादशीसहितामुनेइति। (कृष्णपक्षेत्वाप
स्तंबः)प्रतिपत्सद्वितीयास्याद्द्वितीयाप्रतिपद्युता॥ चतुर्थीसंयुतायाचसातृतीया
फलप्रदा॥ पंचमीचप्रकर्त्तव्याषष्ठ्यायुक्तातुनारद॥ कृष्णपक्षेष्टमीचैवकृष्ण
पक्षेचतुर्दशी॥ पूर्वविद्धाप्रकर्त्तव्यापरविद्धानकुत्रचित्॥ दशमीचप्रकर्त्तव्या
सदुर्गाद्विजसत्तम॥ षष्ठ्यष्टमीअमावास्याकृष्णपक्षेत्रयोदशी॥ एताःपरयुताः
पूज्याःपराःपूर्वेणसंयुताइति॥(यत्तु व्याघ्रः)—खर्वोदर्पस्तथाहिंसात्रिविधंति
थिलक्षणम्॥ खर्वदर्पौपरौपूज्यौहिंसास्यात्पूर्वकालिकीति॥ खर्वःसाम्यम्।
दर्पोवृद्धिः। तयोःपराहिंसाक्षयस्तत्रपूर्वेत्यर्थः।एतच्चश्राद्धादिविषयम्। द्वितीया
दिषुयुग्मानांपूज्यतानियमादिषु॥ एकोद्दिष्टादिवृद्ध्यादौह्रासवृद्ध्यादिचोदनेति
व्यासोक्तेः॥नियमादिषुव्रतदानादिकर्मसु। एकोद्दिष्टादितिथेर्वृद्ध्यादावित्यर्थः।क
र्मकालव्याप्त्यभावेतुकर्मोपक्रमकालगैवग्राह्या-कर्मोपक्रमकालगातुकृतिभिर्ग्रा

---

* एवंच। दिवारात्रिव्रतंयच्चएकमेवंतिथौगतं॥ तस्यामुभयगामिन्यामारभेतव्रतंव्रतोव्यनु-वादः
तिथेःपरस्याघटिकाश्चयाम्युःर्यूनास्तथाचाभ्यधिकाश्चतासां। अर्द्धंवियोज्यंचतथाप्रयोज्यंह्रासेचवृद्धौ
प्रथमेदिनेस्यात्॥

ह्यानयुग्मादरइतिदीपिकोक्तेः।यत्तु--यांतिथिंसमनुप्राप्यउदयंयातिभास्करः॥ सातिथिःसकलाज्ञेयादानाध्ययनकर्मसु ॥ इत्यादीनितानित्रिमुहूर्त्तादिस्तुतिरितिनिर्णयशैली (अथैकभक्ततत्कालःपाद्मे) मध्याह्नव्यापिनीग्राह्याएकभक्तेसदातिथिरिति (मध्याह्नश्चपंचधाविभक्तदिनतृतीयांशः) तेनयद्यपिद्वादशदंडानंतरंप्राप्यतेतथापिदिनार्धसमयेतीतेभुज्यतेनियमेनयत् ॥ एकभक्तमितिप्रोक्तमतस्तस्याहिवैवहीतिस्कांदोक्तेः। षोडशसप्तदशादिदंडामुख्यःकालः (दीपिकायांतु)मध्याह्नांत्यदलेत्रिभागदिवसेस्यादेकभक्तमिति। ततःसूर्यास्तपर्यंतंगौणः। दिवैवहीत्यस्यवैयर्थ्यापत्येतत्परत्वात् अत्रपूर्वेद्युर्व्याप्तिःपरेद्युरुभयेद्युर्व्याप्तिस्तदभावोंशव्याप्तिस्तत्रापिसाम्यंवैषम्यंचेतिषट्पक्षाः। तत्राद्ययोरसंदेहएवतृतीयेतुपूर्वेह्निगौणमुख्यप्राप्तेःसत्वात्पूर्वेतिमाधवः। युग्मवाक्यान्निर्णयइतिहेमाद्रिः। चतुर्थपक्षेपूर्वैवगौणकालव्याप्तेःसत्वात्। वैषम्येणांशव्याप्तौयाधिकासाग्राह्या। साम्येपूर्वाश्रयंचस्वतंत्रैकभक्तनिर्णयः। अन्यांगेउपवासप्रतिषेधस्तदनुसारेणनिर्णयः (अथनक्तं) तच्चदिनानशनपूर्वरात्रिभोजनं। तत्रप्रदोषव्यापिनीग्राह्या। प्रदोषव्यापिनीग्राह्यातिथिर्नक्तव्रतेसदेतिवत्सोक्तेः (प्रदोषस्तु) त्रिमुहूर्तंप्रदोषःस्याद्भानावस्तंगतेसति ॥ नक्तंतत्रतुकर्त्तव्यमितिशास्त्रविनिश्चयइतिमदनरत्नेव्यासोक्तेः। तत्रापिदंडोत्तरंकार्यंसायंसंध्यात्रिघटिकास्तादुपरिभास्वतइति (स्कांदोक्तेर्दंडत्रयस्यसंध्यात्वात्तत्र) चत्वारिमानिकर्माणिसंध्यायांपरिवर्जयेत् आहारंमैथुनंनिद्रांस्वाध्यायंचचतुर्थकमिति॥ मार्कंडेयेनभोजननिषेधात्। मुहूर्त्तोनंदिनंनक्तं प्रवदंतिमनीषिणः॥ नक्षत्रदर्शनान्नक्तमहंमन्येगणाधिपेतिमाधवीयेभविष्योक्तेश्च॥ गौडास्तु॥ प्रदोषोस्तमयादूर्ध्वं घटिकाद्वयमिष्यते इतिवत्सोक्तःप्रदोषः (संध्याचदिनरात्र्योःसंधौमुहूर्त्तः) अर्धास्तमयात्संध्याव्यक्तीभूतानतारकायावत् ॥ तेजःपरिहानिवशाद्भानोरर्धोदयंयावदितिवराहोक्तेरित्याहुः॥ तन्नअस्यसंध्यावंदनानध्यायादिपरत्वात्। अतएवतत्रखंडमंडलस्यसंध्यात्वमुक्तं विज्ञानेश्वरेण। (यच्चमदनरत्ने)- नक्तस्यवैधत्वाद्रागप्राप्तभोजनगोचरोनिषेधइत्युक्तं। तन्न।(विधेर्निषेधाविरोधात्अन्यथा

कपिंजलानित्यत्रत्रिभ्योधिकानांहिंसनंस्यात्) सायंकालेनक्तन्तु दिनद्वयेप्रदो
षस्पर्शेज्ञेयं (अतथात्वेपरत्रस्यादस्तादर्वाग्यतोहिसेतिजाबालिवचनात्) प्रदो
षव्यापिनीनस्याद्दिवानक्तंविधीयते ॥ आत्मनोद्विगुणाछायामंदीभवतिभास्क
रे ॥ तन्नक्तनक्तमित्याहुर्ननक्तंनिशिभोजनमिति (स्कांदाच । यत्यादीनामपि
सायाह्ने) नक्तंनिशायांकुर्वीतगृहस्थोविधिसंयुतः ॥ यतिश्चविधवाचैवकुर्या
त्तत्सदिवाकरमितितत्रैवस्मृत्यंतरात् । इदमपुत्रविधुरोपलक्षणं । पुत्रवतस्तुरा
त्रावेव ॥ अनाश्रमीप्याश्रमीस्यादपत्नीकोपिपुत्रवानितिसंग्रहोक्तेः ॥ (सौरन
क्तन्तुदिवैव) त्रिमुहूर्त्तस्पृगेवाह्निर्निशिचैतावतीतिथिः ॥ तस्यांसौरंभवेन्नक्त
महन्येवतुभोजनमितिसुमंतूक्तेः (हरिनक्तेविशेषः कालादर्शेस्कांदे) उदयस्था
सदापूज्याहरिनक्तव्रतेतिथिरिति ॥ अन्यनक्तन्तुसंक्रात्यादावपिरात्रावेवनिषेध
स्यरागप्राप्तभोजनगोचरत्वेनवैधावाधकत्वात् । दिनद्वयव्याप्तौपरा । उभयोर्व्य
दिव्यातिष्ठ्योः प्रदोषव्यापिनीतिथिः ॥ तत्रोत्तरत्रनक्तंस्यादुभयत्रापिसायतइ
ति ॥ कालादर्शेजाबालिवचनात् । अन्यपक्षेषुएकभक्तवन्निर्णयः (अत्रविशेषो
मदनरत्नेगारुडे) हविष्यभोजनंस्नानंसत्यमाहारलाघवं ॥ अग्निकार्यमधःशय्यां
नक्तभोजीषडाचरेत् ॥ अग्निकार्यंव्याहृतिहोमः । इतिनक्तं (अयाचिते*तुवि
शेषवचनाभावात्पक्षेउपवासेप्राप्तेउपवासवन्निर्णयः । अथनक्षत्रव्रतकालनिर्ण
यः विष्णुधर्मे) उपोषितव्यंनक्षत्रंयस्मिन्नस्तमियाद्रविः ॥ युज्यतेयत्रवातारानि
शीथेशशिनासहेति (माधवीयेस्कांदे) तत्रैवोपवसेदृक्षेयन्निशीथादधोभवेत् ॥
उपवासेयदृक्षंस्यात्तद्दिनक्तैकभक्तयोः (अथव्रतपरिभाषातत्राधिकारिणो‡मद
नरत्नेभविष्ये) अनग्नयस्तुयेविप्रास्तेषांश्रेयोविधीयते ॥ व्रतोपवासनिय
मैर्नानादानैस्तथानृप (अनग्निग्रहणमुपवासविषयम् ॥ अतएवदेवलः) आहिता
ग्निरनड्वांश्चब्रह्मचारीचतेत्रयः ॥ अश्नंतएवसिद्ध्यंतिनैषांसिद्धिरनश्नताम् ॥

* एकभक्तायाचितयोर्यामित्रिंशद्घटिकावधिः ॥ सातिथिःसकलाज्ञेयानक्तेसायाह्नसंगतेतिविशेषवचनान्नि
र्णयइतिमयूखे ॥ भृत्यभार्यादिभ्योपिनयाचितव्यमित्यन्यत्रविस्तरः ‡ अयाचतश्चफलभोक्तृत्वसमानाधि
करणकर्तृत्वमधिकारः ॥

स्कादश्यादौतुवचनाद्भवतीतिवक्ष्यामः (शूद्रस्याप्यधिकारः) शूद्रोवर्णश्चतुर्थो
ऽपिवर्णत्वाद्धर्ममर्हति ॥ वेदमन्त्रस्वधास्वाहावषट्कारादिभिर्विनेतिव्यासोक्तेः ॥
प्राच्यास्तुवैश्यशूद्रयोस्त्रिरात्राधिकोपवासनिषेधः । वैश्याःशूद्राश्चयेमोहादुप
वासंप्रकुर्वते ॥ त्रिरात्रंपंचरात्रंवातेषांव्युष्टिर्नविद्यते ॥ चतुर्थभक्तक्षपणंवैश्येशूद्रेवि
धीयते ॥ त्रिरात्रंतुनधर्मज्ञैर्विहितंब्रह्मवादिभिरिति ॥ हेमाद्रौवचनादित्याहुः ।
यावदुक्तनिषेधइत्यन्ये । तत्त्वंतुनिर्मूलमितिप्रकरणान्महातपोविषयइतियुक्तम्
(सधवस्त्रीणामपियत्तुस्कांदे) नास्तिस्त्रीणांपृथग्यज्ञोनव्रतंनाप्युपोषणम् ॥ भर्तृ
शुश्रूषयैवैतालोकानिष्टान्व्रजंतिहि ॥ यद्देवेभ्योयच्चपित्रादिकेभ्यः कुर्याद्भर्ता
भ्यर्चनंसत्क्रियांच ॥ तस्यार्धंवैसाफलंनान्यचित्तानारीभुंक्तेभर्तृशुश्रूषयैव (आ
दित्यपुराणे) नारी*खल्वननुज्ञाताभर्त्रापित्रासुतेनवा ॥ विफलंतद्भवेत्तस्यायत्क
रोत्यौर्ध्वदेहिकमिति ॥ और्ध्वदेहिकंपारलौकिकंतद्भर्त्रननुज्ञाविषयम् । भार्या
पत्युर्मतेनैवव्रतादीनाचरेत्सदेतिकात्यायनोक्तेः (अत्रविशेषोहरिवंशे) स्नानंच
कार्यंशिरसस्ततःफलमवाप्नुयात् ॥ स्नात्वास्त्रीप्रातरुत्थायपतिंविज्ञापयेत्सती
(तथा) गृहीत्वौदुंबरंपात्रंसकुशंसाक्षतंतथा ॥ गोशृङ्गन्दक्षिणंसिंच्यप्रगृह्णीया
त्तज्जलम् ॥ औदुम्बरंताम्रमयम् ॥ ततोभर्तुःसतीदद्यात्स्नातस्यप्रयतस्यच ॥ आत्म
नश्चाभिषेक्तव्यंततःशिरसितज्जलम् ॥ उपवासेषुकर्त्तव्यमेतद्धिव्रतकेषुचेति ॥
(सर्वव्रतेषुसंकल्पविधिश्चभारते) गृहीत्वौदुंबरंपात्रं वारिपूर्णमुदङ्मुखः ॥ उ
पवासंतुगृह्णीयाद्यद्वासंकल्पयेद्बुधः ॥ हस्तेनैवेत्यर्थः (अत्रव्रतारंभकालः मदन
रत्नेगार्ग्यः) अस्तगेचगुरौशुक्रेबालेवृद्धेमलिम्लुचे ॥ उद्यापनमुपारंभंव्रतानांनैव
कारयेत् ॥ (रत्नमालायां) सोमसौम्यगुरुशुक्रवासराःसर्वकर्मसुभवंतिसिद्धिदाः ॥
भानुभौमशनिवासरेषुच प्रोक्तमेवखलुकर्मसिद्ध्यति (तथा) विरुद्धसंज्ञाइहये
चयोगास्तेषामनिष्टःखलुपादआद्यः ॥ सवैधृतिस्तुव्यतिपातनामासर्वोऽप्यरिष्टः
परिघस्यचार्धम् ॥ तिस्रस्तुयोगेप्रथमेसवज्रेव्याघातसंज्ञेनवपंचशूले ॥ गंडे८त्ति
गंडेचषडेवनाड्यः शुभेषुकार्येषुविवर्जनीयाः (संग्रहे) कृष्णोविर्नादिशयोरूर्ध्वंसप्त

*नारीकर्तृककर्मणोयथावैफल्यंअकरणयोग्यतावच्छेदकंसमायातितथैतस्यार्थेवर्ण्यतामितिभावः ॥

मीभूतयोरधः॥शुक्लेचेद्दशयोरूर्ध्वंभद्राप्राग्वसुपूर्णयोः(श्रीपतिः)नसिद्धिमाया
तिकृतंचविरुध्यांविषारिघातादिकमत्रसिद्धम(व्यवहारसमुच्चये) दशम्यामष्टम्यां
प्रथमघटिकापंचकपरंहरिद्युःसप्तम्यांद्विदशघटिकांतेत्रिघटिकं॥ तृतीयाराका
यांखयमघटिकाभ्यःपरभवंशुभंविष्टेःपुच्छंशिववतिथिचतुर्थ्योस्तुविरमे (तत्रैव)
सर्पिण्यांतुसितेपक्षेकृष्णेचैवतुवृश्चिकी ॥ सर्पिण्यास्तुमुखंत्याज्यंवृश्चिक्याः
पुच्छमेवच (माधवीये) विष्टिर्यदाहनितिथेरपरार्द्धजातापूर्वार्द्धजानिशितदाशु
भदाचपुच्छे (ब्रह्मयामले) दिनभद्रायदारात्रौरात्रिभद्रायदादिवा ॥ नत्याज्याशु
भकार्येषुप्राहुरेवंपुरातनाः (श्रीपतिः) षट्पौष्णतोद्वादशशांकराच्चपौरंदराह्ना
न्निनवक्रमेण ॥ पूर्वार्द्धमध्यापरभागयुंजिचरंतनंज्योतिषिकैःस्मृतानि (व्रतारंभे
चविशेषःमदनरत्नेसत्यव्रतेनोक्तः)उदयस्थातिथिर्याहिनभवेद्दिनमध्यभाक्॥सा
खंडान्व्रतानांस्यादारंभश्चसमापनमिति (देवलः) अभुक्त्वा*प्रातराहारंस्नात्वा
चम्यसमाहितः॥ सूर्यायदेवताभ्यश्चनिवेद्यव्रतमाचरेत्॥ (मदनरत्नेभविष्ये) क्ष
मासत्यंदयादानंशौचमिंद्रियनिग्रहः॥ देवपूजाग्निहवनंसंतोषःस्तेयवर्जनं॥ सर्व
व्रतेष्वयंधर्मःसामान्योदशधास्मृतः ॥ अग्निहोमस्तद्दैवत्यः । व्याहृतिहोमोवे
तिवर्द्धमानः।यत्तुतेनोक्तम् सर्वपदमेतत्पुराणोक्तप्रकृतव्रतपरम्। व्रतांतरेतुविध्यंत
रसत्वेहोमोऽन्यथान। अतएवैकादश्यांशिष्टानांहोमानाचरणमिति।तन्न। ज
पोहोमश्चेतिवक्ष्यमाणैकवाक्यत्वेनास्यकाम्यव्रतसमाप्तिपरत्वात्। तत्वंतुसाप्त
दश्यस्यपशुमित्रविंदादिप्रकरणस्थेनैवतत्तद्व्रतविशेषहोमविधिभिरस्योपसंहा
रयति(विष्णुधर्मे)तज्जप्यंजपनंध्यानंतत्कथाश्रवणादिकम्॥तदर्चनंचतन्नामकी
र्तनश्रवणादयः॥उपवास+कृतामेतेगुणाःप्रोक्तामनीषिभिः (कौर्मे)वर्हिग्रामांत्य
जान्सूतिंपतितंचरजस्वलाम्॥ नस्पृशेन्नाभिभाषेतनेक्षेतव्रतवासरे (पृथ्वीचंद्रोदये
अग्निपुराणे)स्नात्वाव्रतवतासर्वव्रतेषुव्रतमूर्त्तयः॥ पूज्याःसुवर्णमय्याद्याःशक्त्या
वैभूमिशायिना॥ जपोहोमश्चसामान्यंव्रतांतेदानमेवच ॥ चतुर्विंशद्द्वादशवा

* अशक्तस्यानुज्ञातेद्ध्वादिभक्षणनिषेधःप्रातरितिक्रियान्वयि ॥ + उपावृत्तस्यपापेभ्योयस्तुवासोगुणैः
सह ॥ उपवासःसविज्ञेयःसर्वभोगविवर्जितइति ॥

पंचवात्रयएवच ॥ विप्राभोज्यायथाशक्तितेभ्योदद्याच्चदक्षिणाम् ॥ अत्रविप्राइ
तिपुल्लिंगनिर्देशात्पुमांसएवभोज्याःनतुस्त्रियः(एवंसहस्रभोजनादावपि) विरू
पैकदेशस्यप्रमाणांतरंविनायुक्तत्वात् (अतएवद्वयोर्यजमानयोःप्रतिपदंकुर्यात्)
बहुभ्योयजमानेभ्यइत्यादौविरूपैकशेषायोगात् । पत्न्यभिप्रायंद्वित्वंबहुत्वंवा
नसंभवतीत्युक्तमाचार्यैः । पार्थसारथिनाच । एतेनैकस्यब्राह्मणस्यावृत्त्याभोज
नंपरास्तंबहुत्वस्यैकपदश्रुत्याब्राह्मणान्वितत्वेन भोजनान्वयाभावादित्यन्यत्र
विस्तरः शूद्रस्यतुप्रतिष्ठादिवद्विप्रद्वाराव्याहृतिहोमइतिवर्धमानः व्रतमूर्तयोव्रतदे
वताप्रतिमाः (प्रतिमास्वरूपंचमदनरत्नेभविष्ये) अनुक्तद्रव्यतत्संख्यादेवताप्रति
मानृप ॥ सौवर्णीराजतीताम्रीवृक्षजामार्तिकीतथा ॥ चित्रजापिष्टलेख्योत्थानि
जवित्तानुरूपतः ॥ आमाषात्पलपर्यंतं कर्त्तव्याशाठ्यवर्जितैः (तत्रैवब्राह्मे)
आज्यंद्रव्यमनादेशे जुहोतिषुविधीयते ॥ मंत्रस्यदेवतायाश्च प्रजापतिरिति
स्थितिः । मंत्रानुक्तौ समस्तव्याहृतिरूपोमंत्रः प्रजापतिश्चदेवतेतिकल्पतरुः ।
(वर्द्धमानधृतदेवीपुराणे) होमोग्रहादिपूजायांशतमष्टाधिकंभवेत् ॥ अष्टाविंशति
रष्टौवा यथाप्राप्तिविधीयते ( मदनरत्ने ) अनुक्तसंख्यायत्रस्याच्छतमष्टोत्तरं
स्मृतम् (वर्द्धमानधृतवृद्धशातातपः) उपवासंद्विजः कृत्वा ततोब्राह्मणभोजनम् ॥
कुर्यात्तेनास्यसगुणा उपवासोऽभिजायते (व्रतोद्यापनानुक्तौ पृथ्वीचंद्रोदयेनंदि
पुराणे) कुर्यादुद्यापनंतस्यसमाप्तौयदुदीरितम् ॥ उद्यापनंविनायत्तुतद्व्रतंनिष्फ
लंभवेत् ॥ यदिचोद्यापनंनोक्तंव्रतानुगुणतश्चरेत् ॥ वित्तानुसारतोदद्यादनुक्तो
द्यापनेव्रते ॥ गाश्चैवकांचनंदद्याद्व्रतस्यपरिपूर्त्तये (अशक्तौनारदीये) सर्वेषा
मप्यलाभेतुयथोक्तकरणंविना ॥ विप्रवाक्यंस्मृतंशुद्धंव्रतस्यपरिपूर्त्तये ॥ यथा
विप्रवचोयस्तुगृह्णातिमनुजःशुभम् ॥ अदत्वादक्षिणांपापःसयातिनरकंध्रुवम् ॥
(भारते) वेदोपनिषदेचैवसर्वकर्मसुदक्षिणा ॥ सर्वत्रतुमयोद्दिष्टा भूमिर्गावोथ
कांचनम् (वैजवापः) शिवनेत्रोद्भवंयस्माद्रजतंपितृवल्लभम् ॥ अमंगलंतद्यत्ने
नदेवकार्येषुवर्जयेत् (टोडरानंदेदेवीपुराणे) व्रतेचतीर्थेऽध्ययने श्राद्धेपिचविशे
षतः ॥ परान्नभोजनाद्देवियस्यान्नंतस्यतत्फलम् ॥ (पृथ्वीचंद्रोदयेऽग्निपुराणे)

नित्यस्नायीमिताहारोगुरुदेवद्विजार्चकः॥क्षारंक्षौरंचलवणंमधुमांसंचवर्जयेत्॥
(क्षारास्तुतत्रैवोक्ताः)। तिलमुद्गादृतेशैव्यं सस्येगोधूमकोद्रवौ ॥ धान्यकंदेव
धान्यंचशमीधान्यंतथैवच॥ स्विन्नधान्यंतथापुरायंमूलंक्षारगणाःस्मृतः॥(गो
धूमानांतुतत्रैवप्रतिप्रसवः)—व्रीहिषष्टिकमुद्गाश्चकलायःसतिलंपयः ॥ श्यामा
काश्चैवनीवारागोधूमाद्याव्रतेहिताः ॥ कूष्मांडालांबुवार्त्ताकपालंकीज्यो
त्स्निकास्त्यजेत् ॥ चतुर्भैक्षंसक्तुकणाःशाकंदधिघृतंमधु ॥ श्यामाकाःशालिनी
वारायावकंमूलतंदुलम्॥हविष्यव्रतनक्तादावग्निकार्यादिकेहितं॥मधुमांसविहा
यान्यव्रतेवाहितमीरितमिति ॥ शमीधान्यंमाषादि। पालंकीमध्यदेशेपोईइति
प्रसिद्धः। ज्योत्स्निकाकोशातकी ।(मिताक्षरायांगौतमः)। चतुर्भैक्षसक्तुकणा
यावकशाकपयोदधिघृतमूलफलोदकानिहवींष्युत्तरोत्तरं प्रशस्तानिपयोदधि
घृतंचगव्यमिति।(अन्येत्वविशेषास्त्वेकादशीचातुर्मास्यादिप्रकरणेवक्ष्यंते(गृही
तव्रतत्यागेतुमदनरत्नेछागलेयः) पूर्वंव्रतंगृहीत्वायोनचरेत्काममोहितः ॥ जी
वन्भवतिचांडालोमृतःश्वाचाभिजायते ( तत्रप्रायश्चित्तमुक्तंपृथ्वीचंद्रोदयेऽग्नि
रिनगारुडपुराणयोः) क्रोधात्प्रमादाल्लोभाद्वाव्रतभंगोभवेद्यदि ॥ दिनत्रयंनभुं
जीतमुंडनंशिरसोथवेति॥ प्रायश्चित्तान्नानादतिक्रांतव्रतानुष्ठानंनास्तीतिवाच्य
ते (यत्तु) प्रायश्चित्तंततःकृत्वापुनरेवव्रतीभवेदितिवचनात्। यच्चातिक्रांतमपि
व्रतंकार्यमेवेतिशूलपाणिः।तन्मध्येलोपेव्रतशेषसत्त्वेज्ञेयं। एतच्चशक्तविषयं(अ
शक्तौतुकालहेमाद्रौपुराणांतरे)उपवासासमर्थश्चेदेकंविप्रंतुभोजयेत्॥तावद्धना
दिवाद्याद्भुक्तस्याद्विगुणंतथा ॥ भुक्तःकृतभोजनः।ब्राह्मणभोजनंविनेतिशेषः।
सहस्रसंमितांदेवींजपेद्वाप्राणसंयमान् ॥ कुर्याद्द्वादशसंख्याकान्यथाशक्त्यात्तु
रोनरइति (शुद्धितत्त्वेमात्स्ये) उपवासेत्वशक्तानांनक्तंभोजनमिष्यते(मदनरत्ने
वायवीये)द्रव्यदातोपवासस्यफलंप्राप्नोत्यसंशयम्(तथापरार्केदेवलः)ब्रह्मचर्यं*

* स्त्रीणांतुप्रेक्षणात्स्पर्शात्ताभिस्संकथनादपि ॥ विपद्यतेब्रह्मचर्यंस्वदारेष्वृतुसंगमात् ॥ स्त्रीणांपुंश्च
लीनांइत्यादि ॥

तथाशौचंसत्यमा*मिषवर्जनम् ॥ व्रतेष्वेतानिचत्वारिवरिष्ठानीतिनिश्चयः ॥ (मात्स्ये) तस्मात्कृतोपवासेन स्नानमभ्यंगपूर्वकम् ॥ वर्जनीयंप्रयत्नेनरूपघ्नं तत्परंनृप ॥ अन्येऽपिचनियमास्तत्रतत्रान्वेषणीयाः (अथस्त्रीव्रतेषुविशेषउच्यते) तत्रहेमाद्रौव्रतकांडेगारुडे) गंधालंकारतांबूलपुष्पमालानुलेपनम् ॥ उपवासेनदुष्यंतिदन्तधावनमंजनमिति (इदंचसभर्तृकोपवासविषयम्) अंजनंचसतांबूलंकुंकुमंरक्तवाससी ॥ धारयेत्सोपवासापिअवैधव्यकरंयतः ॥ विधवायत्तिमागेणाकुमारीवायदृच्छयेतितत्रैवभविष्योक्तेः(तथाविष्णुधर्मे) सर्वेष्वुपवासेषुपुमान्वाथसुवासिनी ॥ धारयेद्रक्तवस्त्राणिकुसुमानिसितानिच॥ विधवाशुक्लवसनमेकमेवहिधारयेत्(मनुरपि) पुष्पालंकारवस्त्राणिगन्धधूपानुलेपनम् ॥ उपवासेनदुष्यंतिदन्तधावनमंजनम् (मदनरत्नेव्यासः) दन्तधावनपुष्पादिव्रतेष्वस्यान्नदुष्यतीति॥ यद्यपीदंसर्वोपवासविषयंप्रतीयतेतथापिशिष्टाचारात्सौभाग्याद्यर्थक्रियमाणानवरात्रशिवरात्र्याद्युपवासविषयमेव (नत्वेकादश्यादिविषयम्) असकृज्जलपानाच्चसकृत्तांबूलचर्वणात्॥ उपवासःप्रणश्येतदिवास्वापाच्चमैथुनादित्यपरार्केदेवलेनतन्निषेधात्। नचास्यपुंविषयत्वेनसावकाशत्वात्स्त्रीणांतांबूलादिप्राप्नोतीतिवाच्यम्।तांबूलादिप्रापकस्यैवैकादशीतरविषयत्वेनवैपरीत्यस्यापिसुवचत्वात्(यत्तुहरिवंशे) अंजनंरोचनंचैवगन्धांसुमनसस्तथा ॥ व्रतेचैवोपवासेचनित्यमेवविवर्जयेत्। शिरसोऽभ्यंजनंसौम्येनैवमेतत्प्रशस्यते॥ नपादयोर्नगात्रस्यस्नेहेनेतिस्थितिःस्मृतेतितत्तत्रैवोक्तपुण्यकव्रतविषयम् ॥ नतुसर्वत्र। पूर्वोक्तविरोधादिति ( मदनरत्नेउक्तं। तत्रैव ) अश्रुप्रपातोरोषश्चकलहस्यकृतिस्तथा ॥ उपवासाद्व्रताद्वापिसद्योभ्रंशयतिस्त्रियम् ॥ स्त्रियमित्युपलक्षणं ( मदनरत्नेशिवधर्मे ) दानव्रतानिनियमाज्ञानंध्यानंहुतंजपः ॥ यत्नेनापिकृतंसर्वंक्रोधितस्यवृथाभवेत् (अथ सूतकादौनिर्णयः) तत्रशावसूत्याशौचयोः सर्वस्मार्तकर्मनिवृत्तिनिबंधेषु

---

* आमिषंमांसं ॥आमिषंदूतिपानीयंगोवर्ज्यंक्षीरमामिषं ॥मसूरमामिषंसस्येफलेजंबीरमामिषं। आमिषंशुक्तिकाचूर्णमारनालंतथामिषमितिस्मृत्यंतरोक्तंच ‡ स्मरणंकीर्तनंकेलिःप्रेक्षणंगुह्यभाषणं ॥ संकल्पोऽध्यवसायश्चक्रियानिर्वृतिरेवच ॥ एतन्मैथुनमष्टांगंप्रवदंतिमनीषिणः ॥

स्पष्टैव (गौडास्तुशौचादावपिताहुः) जानूर्ध्वंक्षतजेजातेनित्यकर्मनचाचरेत्॥ नैमित्तिकंचतदधःस्रवद्रक्तोनवाचरेत् ॥ लौतकेचसमुत्पन्नेज्वरकर्मणिमैथुने ॥ धूमोद्गारेतथावांतौनित्यकर्माणिसंत्यजेत् ॥ द्रव्येभुक्तेत्वजीर्णेचनैवभुक्त्वापि किंचन ॥ कर्मकुर्यान्नरोनित्यंसूतकेमृतकेतथेतिकालिकापुराणात् ॥ वस्तुतस्तु पर्वदेवीपूजोपक्रमात्तन्मात्रविषयत्वमस्येतियुक्तंप्रतीमः ( तथाहेमाद्रौपाद्मे ) गर्भिणीसूतिकादिश्च कुमारीवाथरोहिणी ॥ यदाशुद्धातदान्येनकारयेत्प्रय तास्वयमिति ॥ पुंसोप्ययंविधिः । लिंगस्याविवक्षितत्वात् । तेनयस्मिन्व्रतेय त्पूजाद्युक्तंतदन्येनकारयेत् । शारीरनियमान्स्वयंकुर्यादितिहेमाद्रिव्याचख्यौ। नवृतिनांवृतेइतिविष्णूक्तेश्च । आरम्भस्तुनभवत्येव ( शुद्धितत्त्वेविष्णुः ) बहुका लिकसंकल्पोगृहीतश्चपुरायदि ॥ सूतकेमृतकेचैवव्रतंतन्नैवदुष्यति ॥ एतत्काम्य परंनित्यंत्वनारब्धमपिकार्यमितिगौडाः ( मदनरत्ने) पूर्वसंकल्पितंयच्चव्रतंसुनि यतव्रतैः ॥ तत्कर्तव्यंनरैःशुद्धंदानार्चनविवर्जितम् ( माधवीयेकौर्मे ) काम्यो पवासेप्रक्रांतेत्वंतरामृतसूतके ॥ तत्रकाम्यंव्रतंकुर्याद्दानार्चनविवर्जितमिति॥ एते नसांगेविकाराद्व्रतांगदेवपूजादिकार्यमितिवर्धमानोक्तिःपरास्ता। प्रारब्धंपूजा दिकार्यमेव । नवरात्रेतुतत्रैवविशेषंवक्ष्यामः । एवंरजस्वलापि (सत्यव्रतः) प्रारब्धदीर्घतपसांनारीणांयद्रजोभवेत् ॥ नतत्रापिव्रतस्यस्यादुपरोधःकथंच नेति ॥ तत्प्रतिनिधिनाकारयेदित्येतत्परं। ( तदुक्तंमदनरत्नेमात्स्ये ) अन्तरा तुरजोयोगेपूजामन्येनकारयेदिति ( प्रतिनिधयश्चनिर्णयामृते पैठीनसिः) भार्यापत्युर्व्रतंकुर्याद्भार्यायाश्चपतिर्व्रतम् ॥ असामर्थ्येपरस्ताभ्यांव्रतभंगोनजाय ते ( स्कांदेपि ) पुत्रंवाविनयोपेतंभगिनींभ्रातरंतथा ॥ एषामभावएवान्यंब्राह्मणं वानियोजयेत् ( कात्यायनः ) पितृमातृभ्रातृपतिगुर्वर्थेचविशेषतः ॥ उपवासं प्रकुर्वाणःपुण्यंशतगुणंलभेत् ॥ मातामहादीनुद्दिश्यएकादश्यामुपोषणे ॥ कृते तेतुफलंविप्राःसमग्रंसमवाप्नुयुः ( मदनरत्नेप्रभासखण्डे ) भर्तापुत्रःपुरोधाश्च भ्रातापत्नीसखापिच ॥ यात्रायांधर्मकार्येषुजायंतेप्रतिहस्तकाः ॥ एभिःकृतंमहा देविस्वयमेवकृतंभवेत्(तत्रैववायवीये ) स्वयंकर्तुमशक्तश्चेत्कारयीतपुरोधसा ॥

इदंचसर्ववर्णसाधारणं। अविशेषात् ( यत्तुकाश्रिचन्द्रमहोदयआह ) शूद्रस्यब्राह्म-
णादेरेवप्रतिनिधिर्युक्तोनशूद्रः। जपस्तपस्तीर्थसेवाप्रव्रज्यामन्त्रसाधनम्॥ विप्रैः
सम्पादितंयस्यसम्पन्नंतस्यतत्फलमिति॥मरीचिवचनादिति। तत्तुच्छम्। प्रव्र-
ज्यादीनांशूद्रेऽसम्भवाद्विषयेप्रायदर्शनादितिन्यायेनास्यब्राह्मणादिगोचरत्वा-
त्। यदपिउपवासोव्रतंहोमस्तीर्थस्नानजपादिकमितिपर्वार्द्धे पाठस्तदपिस्व
वदोषः। स्त्रीशूद्रपतनानिषडितिमानवीयेजपनिषेधात्। वस्तुतस्तु। सम्पूर्णता
वाचनमात्रमत्रोच्यतइतिप्रतिनिधेःकावार्त्तेत्यलम् ( अत्रविशेषमाहत्रिकांडमं
डनः ) काम्येप्रतिनिधिर्नास्तिनित्येनैमित्तिकेचसः॥ काम्येप्युपक्रमादूर्ध्वंके
चित्प्रतिनिधिंविदुः॥ नस्यात्प्रतिनिधिर्मन्त्रस्वामिदेवाग्निकर्मसु॥ नदेशका
लयोर्नास्तिनारणेरग्निरेवसा। नापिप्रतिनिधातव्यंनिषिद्धंवस्तुकर्हिचित् ( हि
रण्यकेशिसूत्रेपि) नस्वामित्वस्यभार्यायाःपुत्रस्यदेशस्यकालस्याग्नेर्देवतायाः
कर्मणःशब्दस्यचप्रतिनिधिर्विद्यतइति ( अथव्रतादिसन्निपातेनिर्णयः ) तत्र
तिथिद्वयसन्निपातेतन्त्रोक्तंदानंहेमाद्रिक्रमेणानुष्ठेयम्। अविरोधात्। इदंपूर्वार
ब्धेष्वेव। एकमध्येन्यकाम्यकर्मारंभस्तुभवत्येवगुणफलादृतेयस्ययज्ञेप्रततेंत
रायज्ञस्तायतेतंयज्ञंनिर्ऋतिर्गृह्णातीतिशाकवृतश्रुतेः। यत्रःव्रतादिकर्मसमा
प्तम्। अलंगेनव्यवधानदोषस्यसर्वत्रसाम्यात्। शिष्टास्तुमाघकार्त्तिकस्नाना
दिमध्येलक्षहोमतुलाभारतश्रवणाद्याचरंतितन्नित्यमध्येतु। काम्यमध्येतुचिंत्य
म्। यत्रतुनक्तैकभक्तादौविरोधस्तत्रप्राथम्यादेकभक्तंकार्यम्।नक्तंतुपरेद्युस्तत्ति
थौगौणकालेकार्यम्। समकालीनविरुद्धव्रतादौत्वेकंस्वयंकृत्वान्यद्भार्यादिना
कारयेदितिमाधवः। यत्तुशिवरात्र्यादौतिथिमध्येपारणायाऽह्निभोजनंप्राप्त
म्। भूताष्टम्योर्दिवाभुक्त्वारात्रौभुक्त्वाचपर्वणि॥ एकादश्यामहोरात्रंभुक्त्वा
चांद्रायणंचरेदितितन्निषेधपरंच॥ तत्रपारणायावैधत्वाद्दिवैवभोजनम्। निषेध
स्तुरागप्राप्तभोजनविषयः। एवमष्टम्यादिनक्तव्रतेसंक्रांत्यादौरवौसंकष्टचतुर्थ्यां
चरात्रौभोजनम्। यत्रत्वष्टम्यादौदिवाभुजिनिषेधःसंक्रमेचरात्रावितिनिषेधद्व
यंतत्रोपवासएवकार्यः। यद्यपिपुत्रिणाउपवासोनिषिद्धस्तथाप्युपवासनिषेधेतु

भक्ष्यंकिंचित्प्रकल्पयेदितिवचनात्किंचिद्भक्षयित्वोपवासःकार्यः । चांद्रायणमध्येएकादश्यादौतुभोजनंकार्यमेव। चांद्रायणस्यकाम्यत्वेननित्यबाधकत्वात् । अबाधेनगत्यसंभवाच्च । एकादश्यामेकांतरोपवासादिपारणायांजलपारणांकृत्वोपवसेत्।आपोवाअशितमनशितंचेतिश्रुतेः। एवंद्वादश्यांमासोपवासश्राद्धदोषादियुक्तेयम्।एवंकाम्यनैमित्तिकनित्यत्वादिकृतंबलाबलंस्वयमूह्यमितिदिक्।

इति कमलाकरभट्टकृते निर्णयसिंधौ परिभाषा समाप्ता ॥

(अथप्रतिपदादिनिर्णयः) शुक्लप्रतिपदपराह्णव्यापित्वेपूर्वाग्राह्या । युग्मवाक्यात् । प्रतिपत्संमुखीकार्यायाभवेदापराह्णिकीतिस्कांदोक्तेः ॥ शुक्लास्यात्प्रतिपत्तिथिःप्रथमतश्चेत्साऽपराह्णेभवेदिति दीपिकोक्तेश्च । अपराह्णश्चपंचधाभक्तेदिनेचतुर्थोभागः । तदभावेसायाह्नव्यापिनीग्राह्या । तदभावेतुसायाह्नव्यापिनींपरिगृह्यतामितिमाधवोक्तेः । कृष्णातुपरा । कृष्णातूत्तरतोऽखिलेतिदीपिकोक्तेः (कृष्णापिपूर्वैवेत्यनंतभट्टः सर्वतिथिषुवर्ज्यान्युक्तानिमुहूर्तदीपिकायां) कूष्मांडंबृहतीफलानिलवणंवर्ज्यंतिलाम्लंतथा तैलंचामलकंदिवंप्रवसतांशीर्षंकपालांत्रकम् ॥ निष्पावांश्चमसूरिकान्फलमथोवृन्ताकसंज्ञंमधुद्यूतंस्त्रीगमनंक्रमात्प्रतिपदादिष्वेवमाषोडश ॥ शीर्षंनारिकेलम् । कपालंअलाबु । अंत्रंपटोलकं (भूपालः) कूष्मांडंबृहतीक्षारंमूलकंपनसंफलम् ॥ धात्रीशिरःकपालांत्रंनखचर्मतिलानिच ॥ क्षुरकर्मांगनासेवांप्रतिपत्प्रभृत्यजेत् ॥ नखंशिंबी। चर्ममसूरिका । द्वितीयातुकृष्णापूर्वाशुक्लोत्तरेतिहेमाद्रिः । कृष्णाद्वितीयादिमापूर्वाह्णेयदिसासितातुपरतःसर्वेतिदीपिकोक्तेः । माधवानंतभट्टमतेतुसर्वापिद्वितीयापरा ( तथाचमाधवः ) पूर्वेद्युरसतीप्राप्तःपरेद्युस्त्रिमुहूर्तगा ॥ साद्वितीयापरोपोष्यापूर्वविद्धाततोन्यथेति ॥ तृतीयातुसर्वमतेरंभाव्यतिरिक्तापरैव ॥ तेनयुग्मवाक्यंरंभाव्रतविषयम् ॥ रंभाख्यांवर्जयित्वातुतृतीयांद्विजसत्तम ॥ अन्येषुसर्वकार्येषुगणयुक्ताप्रशस्यतइतिब्रह्मवैवर्तात् (गौरीव्रतेतुविशेषमाहमाधवः) मुहूर्तमात्रसत्वेपिदिनेगौरीव्रतंपरे ॥ शुद्धाधिकायामप्येवंगणयोगप्रशंसनादिति॥ चतुर्थ्यपिसर्वमतेगणेशव्रतातिरिक्तापरैव। युग्मवाक्यात्। एकादशी

तथाषष्ठीअमावास्याचतुर्थिका ॥ उपोष्याःपरसंयुक्तापराःपूर्वेणसंयुताइतिमाधवीये॥ बृहद्वशिष्ठोक्तेच। नागचतुर्थीतुमध्याह्नव्यापिनीपंचमीयुताचग्राह्येति निर्णयामृतेमाधवीये चोक्तं। युगंमध्यंदिनेयत्रतत्रोपोष्यफणीश्वरान्॥ क्षीरेणाप्याय्यपंचम्यांपूजयेत्प्रयतोनरः॥ विषाणितस्यनश्यंतिनतान्हिंसंतिपन्नगाः॥ इतिमाधवीयेदेवलोक्तेः। युगंचतुर्थीपूर्वत्रमध्याह्नव्याप्तौपूर्वा। अन्यपक्षेतुपरैव पंचम्यांपूजोक्तेः। गणेशव्रतेतृतीयायुतैवचतुर्थी। चतुर्थीतुतृतीयायांमहापुण्य फलप्रदा॥ कर्त्तव्याव्रतिभिर्वत्सगणनाथसुतोषिणीति॥ हेमाद्रौब्रह्मवैवर्तात्। माधवीयेतुगणेशव्रते। मध्याह्नव्यापिनीमुख्या। चतुर्थीगणनाथस्यमातृविद्धाप्रशस्यते॥मध्याह्नव्यापिनीचेत्स्यात्परतश्चेत्परेहनीति(बृहस्पतिवचनात्)प्रातःशुक्लतिलैःस्नात्वामध्याह्ने पूजयेन्नृपेतितत्कल्पेभिधानाच। तेनपरदिनेतद्व्याप्तौपरा (अन्यथापूर्वेत्युक्तम्। वस्तुतस्तु) यत्रभाद्रशुक्लचतुर्थ्यादौगणेशव्रतविशेषेमध्याह्नपूजोक्तातद्विषयाण्येवप्रागुक्तवचनानिनतुसार्वत्रिकाणि। संकष्टचतुर्थ्यादौबहूनांकर्मकालानांबाधापत्तेः।तेनसर्वत्रगणेशव्रतेपूर्वैवेतिसिद्धम्।संकष्टचतुर्थीतुचंद्रोदयव्यापिनीग्राह्या। दिनद्वयेतद्व्याप्तौमातृयोगस्यसत्त्वात्पूर्वेतिकेचित्। अन्येतुदिनेमुहूर्त्तत्रयादिरूपस्यतृतीयायोगस्याभावात्परदिने माधवोक्तमध्याह्नव्यापित्वात्संपूर्णत्वाच्च परेत्याचक्षते (दिनद्वयेतदभावेतुपरैव। गौरीव्रतेतुपूर्वैव) गणेशगौरीबहुलाव्यतिरिक्ताःप्रकीर्तिताः॥ चतुर्थ्यःपंचमीविद्धादेवतांतरयोगतइतिमदनरत्नेब्रह्मवैवर्तात् (पंचमीतुमाधवमतेसर्वापिपूर्वा) चतुर्थीसंयुताकार्यापंचमी परयान्तु॥ दैवेकर्मणिपित्र्येचशुक्लपक्षेतथासितेतिहारितोक्तेः (हेमाद्रिमतेतु कृष्णापूर्वासितापरा) कृष्णापूर्वयुतासितापरयुतास्यात्पंचमीतिदीपिकोक्तेः। (वस्तुतस्तुहारीतोक्तिरुपवासविषया)। प्रतिपत्पंचमीचैवसावित्रीभूतपूर्णिमा॥ नवमीदशमीचैव नोपोष्याःपरसंयुता इतिब्रह्मवैवर्तात् (यत्तु) पंचमीतुप्रकर्त्तव्या षष्ठ्यायुक्तातुनारदेत्यापस्तंबीयम् (तत्स्कंदव्रतपरम्) स्कंदोपवासेस्वीकार्यापंचमीपरसंयुतेतिवाक्यशेषादितिमाधवः। तन्नागपूजाविषयमित्यनंतभट्टनिर्णयामृतादयः (चमत्कारचिंतामणौच)पंचमीनागपूजायांकार्याषष्ठीसमन्विता

तस्यांतुतुष्टितानागाइतरासुचतुर्थिकेति॥ तेननागपूजादौपरैव (यत्तुमदनरत्न दिवोदासीययोः। श्रावणपंचम्यतिरिक्तापूर्वेत्युक्तम्) श्रावणेपंचमीशुक्लासंप्रोक्तानागपंचमी। तांपरित्यज्यपंचम्यश्चचतुर्थीसहिताहिताइतिसंग्रहोक्तेः गणेशस्कंदयोगाभ्यांक्रमान्नागःशुभाशुभः॥ मित्रामित्रेतयोःपत्रे नागानामाखुबर्हिणौ॥ इतिषट्त्रिंशन्मताच्चश्रावणपंचम्यतिरिक्तायाः नागपंचम्याश्चचतुर्थीयुतत्वमुक्तंतदुपवासादिविषयम्(पत्रेवाहने। षष्ठीसर्वमतेस्कंदव्रतातिरिक्तापरैव। युग्मवाक्यात्) नागविद्धानकर्त्तव्याषष्ठीचैवकदाचनेतिस्कांदाच्च (निर्णयामृते) षष्ठीचसप्तमीचैववारश्चेदंशुमालिनः॥ योगोयंपद्मकोनामसूर्यकोटिग्रहैःसमः (सप्तमीपूर्वैवयुग्मवाक्यात्) षष्ठ्यायुतासप्तमीचकर्तव्यातातसर्वदेतिस्कांदाच्च (अष्टमीतुसर्वमतेकृष्णापूर्वासितापरा) व्रतमात्रेष्टमीकृष्णापूर्वाशुक्लाष्टमीपरेति माधवोक्तेः॥ परयुक्शुक्लाष्टमीपूर्वयुक्कृष्णेतिदीपिकोक्तेश्च (शिवशक्त्युत्सवेचकृष्णाप्युत्तरापक्षद्वयेप्युत्तरैवशिवशक्तिमहोत्सवइतिमाधवोक्तेः (दिवोदासीयेभविष्ये)यदायदासिताष्टम्यांबुधवारोभवेत्क्वचित्॥ तदातदाहिसाग्राह्या एकभक्ताशनेनृप॥ संध्याकालेतथाचैत्रे प्रसुप्तेचजनार्दने॥ बुधाष्टमीनकर्त्तव्याहंतिपुण्यंपुरातनम्॥ अंत्यंपद्यंहेमाद्रौनधृतम्। नवमीतुसर्वमतेपूर्वा(युग्मवाक्यात्) नकुर्यान्नवमींतातदशम्यातुकदाचनेतिस्कांदाच्च(दशमीतुपूर्वापरावेतिहेमाद्रिः) कृष्णापूर्वोत्तराशुक्लादशम्येवंव्यवस्थितेतिमाधवः (वस्तुतस्तुमुख्यानवमीयुतैव ग्राह्या) दशमीतुप्रकर्त्तव्यासदुर्गाद्विजसत्तमेत्यापस्तंबोक्तेः (यत्तु) संपूर्णादशमीकार्यापूर्वयापरयाथवेत्यंगिरसोक्तम्॥ तन्नवमीयुक्तालाभेऔदयिकीग्राह्येत्येवंनेयम्(अथैकादशी। तत्रैकादश्युपवासोद्वेधा निषेधे परिपालनात्मको व्रतरूपश्च। तत्राद्यः) नशंखेनपिबेत्तोयंनखादेत्कूर्मसूकरौ॥ एकादश्यांनभुंजीतपक्षयोरुभयोरपीति कौर्मदेवलाद्युक्तेः (अग्निपुराणेपि) गृहस्थोब्रह्मचारीचआहिताग्निस्तथैवच॥ एकादश्यांनभुंजीतपक्षयोरुभयोरपीति॥ नचात्रपर्युदासेन*व्रतविधिः तद्धेतुव्रतादिशब्दाभावात् (व्रतरूपस्तुब्रह्मवैवर्ते) प्राप्तेह

* पर्युदासःसविज्ञेयोयत्रोत्तरपदेननञ्इत्युक्तेरेकादश्यामभोजनसंकल्परूपंव्रतमिति॥

रिदिनेसम्यग्विधायनियमंनिशि ॥ दशम्यामुपवासस्यप्रकुर्याद्वैष्णवंव्रतमिति
(इदंचशिवभक्तादिभिरपिकार्यम्) वैष्णवोवाथशैवोवाकुर्यादेकादशीव्रतमिति
शिवधर्मोक्तेः । वैष्णवोवाथशैवोवासौरोप्येतत्समाचरेदितिसौरपुराणाच्च (सो
पिहेमाद्रौनित्यःकाम्यश्च)उपोष्यैकादशींनित्यंपक्षयोरुभयोरपीतिगारुडोक्तेः।
पक्षेपक्षेचकर्त्तव्यमेकादश्यामुपोषणमिति नारदोक्तेश्चनित्यता ॥ यदीच्छेद्वि
ष्णुसायुज्यंश्रियंसंततिमात्मनः ॥ एकादश्यांनभुंजीतपक्षयोरुभयोरपि ॥ इति
कौर्मादिषुफलश्रुतेश्चकाम्यता । उभयैकादशीव्रतंगृहस्थातिरिक्तानामेवनित्य
म । गृहस्थस्यतुशुक्लायामेवव्रतंनित्यंनकृष्णायाम् । एकादश्यांनभुंजीतपक्षयोरु
भयोरपि ॥ वनस्थयतिधर्मोयंशुक्लामेवसदागृहीतिदेवलोक्तेः॥ नचानेननिषेध
पालनमेव वनस्थयतिविषयेउपसंह्रियतेनतुव्रतमितिवाच्यम् । अस्यपर्युदासेनव्र
तविधिपरत्वात् । अन्यथापूर्वोक्ताग्निपुराणवचने निषेधपालनेगृहस्थस्या
धिकारोक्त्याविरोधःस्यात् । निषेधस्यनिवृत्तिमात्रफलत्वेनविशेषानपेक्षणा
दुपसंहारायोगात् । अभावस्यधर्मत्वाभावाच्च । तस्मादनेनसर्वेषामेकादशीव्रतवि
धायिनांसामान्यवाक्यानांवनस्थयतिविषये उपसंहारान्नगृहस्थस्यकृष्णायांनि
त्यव्रतप्राप्तिः (कथंतर्हि) संक्रान्त्यामुपवासंचकृष्णैकादशीवासरे ॥ चन्द्रसूर्यग्रहे
चैवनकुर्यात्पुत्रवान्गृही (इतिनारदादिवचनेषुकृष्णानिषेधः प्राप्त्यभावादिति
चेच्छ्रू यताम् ॥ शयनीबोधिनीमध्ये याकृष्णैकादशीभवेत् ॥ सैवोपोष्यागृह
स्थेननान्याकृष्णाकदाचनेतिपाद्मे ॥ गृहस्थस्यआषाढीकार्त्तिकीमध्यस्थाया
कृष्णाविहितासापुत्रवतोनिषिध्यते । अन्यकृष्णायांतुनविधिः । सर्वविधीनांवन
स्थयतिषूपसंहारान्ननिषेधः प्राप्त्यभावात्शयन्यादिवाक्यंत्वपुत्रगृहिगोचरमि
त्यनंतभट्टहेमाद्र्यादिग्रन्थाः (दीपिकापि) असितातुशयनी बोधांतरस्थाप्युपोष्यान
स्यात्सात्मजिनोपीति (मदनरत्नेभविष्ये) यथाशुक्लातथाकृष्णाद्वादशीमेसदा
प्रिया ॥ शुक्लागृहस्थैःकर्त्तव्याभोगसंतानवर्धिनी ॥ मुमुक्षुभिस्तथाकृष्णानतेते
जोपदर्शितेति ॥ निषेधपालनंकाम्यव्रतंच सर्वकृष्णायांसर्वगृहिणांभवत्येव ।
पुत्रवांश्चसभार्यश्चबंधुयुक्तस्तथैवच । उभयोःपक्षयोःकाम्यव्रतंकुर्यात्तुवैष्णव

मिति ॥ नारदोक्तेः(एतच्चसर्वंकालादर्शेउक्तम्) विधवायावनस्थस्ययतेश्चैका
दश्यामिद्वये ॥ उपवासोगृहस्थस्यशुक्लायामेवपुत्रिणः ॥ भुजेर्निषेधःकृष्णायांसि
द्धस्तस्यततोव्रतेइति॥ प्राच्यास्तुवैष्णवगृहस्थानांकृष्णापिनित्या । नित्यंभक्ति
समायुक्तैर्नरैर्विष्णुपरायणैः ॥ पक्षेपक्षेचकर्त्तव्यमेकादश्यामुपोषणम् ॥ सपुत्र
श्चसभार्यश्चस्वजनोभक्तिसंयुतः ॥ एकादश्यामुपवसेत्पक्षयोरुभयोरपीतिनार
दोक्तेरित्याहुः॥ पुत्रशब्दश्चापत्यमात्रवचनः (नारायणवृत्तौ) पुमांसएवमेपुत्रा
जायेरन्नित्यत्रापत्यमात्रवाचित्वोक्तेः । जनयद्बहुपुत्राणीतिलिंगात् । पौत्री
मातामहस्तेनेतिमनूक्तेः । पुंस्यात्रपत्यमित्यर्थेतु स्त्रीभ्योढगितिपौत्रेयइत्या
पत्तेः । पुमान्पुत्रोजायतइतिच (उपवासनिषेधेविशेषोवायवीयेउक्तः) उप
वासनिषेधेतुभक्ष्यंकिंचित्प्रकल्पयेत् ॥ नदुष्यत्युपवासेनउपवासफलंलभेत्(भक्ष्यं
चतत्रैवोक्तम्) नक्तंहविष्यान्नमनोदनंवाफलंतिलाःक्षीरमथांबुचाज्यम् ॥ यत्पंच
गव्यंयदिवापिवायुःप्रशस्तमत्रोत्तरमुत्तरंचेत्यलम् ॥ तत्रदशमीवेधोद्वेधा अरु
णोदयवेधः सूर्योदयवेधश्चेति (आद्योगारुडे) दशमीशेषसंयुक्तो यदिस्याद
रुणोदयः ॥ नैवोपोष्यंवैष्णवेनतद्दिनैकादशीव्रतमिति (अरुणोदयस्वरूपंच
माधवीयेस्कांदे) उदयात्प्राक्चतस्रस्तुघटिकाअरुणोदयइति (यदपि) उदया
त्प्रागयदाविप्रमुहूर्त्तद्वयसंयुता ॥ संपूर्णैकादशीनामतत्रैवोपवसेद्गृहीतिगारुड
सौरधर्मादिवचनम्(यच्चभविष्ये)आदित्योदयवेलायाः प्राङ्मुहूर्तद्वयान्विता ॥
एकादशीतुसंपूर्णाविद्धान्यापरिकीर्तितेति ॥ तदप्युपसंहारन्यायेनदंडचतुष्टय
परमेव । हेमाद्रावप्येवं (यत्तुब्रह्मवैवर्ते) चतस्रोघटिकाः प्रातररुणोदयनिश्च
यः ॥ चतुष्टयविभागोत्रवेधादीनांकिलोदितः । अरुणोदयवेधः स्यात्सार्द्धंतु
घटिकात्रयम् ॥ अतिवेधोद्विघटिकःप्रभासंदर्शनाद्रवेः ॥ महावेधोपितत्रैवदृश्य
तेर्कोनदृश्यते ॥ तुरीयस्तत्रविहितोयोगःसूर्योदयेबुधैरिति ॥ तदप्यवयवद्वारा
रुणोदयवेधविशेषपरमेवेतिमाधवीयेमदनरत्नेच । अंत्यस्तूदयवेधः (तथा*न्ये

* एवंद्विविधमपिवेधंश्रवणस्याप्यत्रद्वैतेवक्ष्यमाणव्रतानांदूषणाय प्रथमतउपन्यासेप्रस्तुतेव्यवस्थापनी
यत्वात्परेषामहेतुत्वाच्चान्यान्यपिवेधवचांस्युपन्यसतितथेति ॥

पिवेधाः हेमाद्रौमाधवीयेचगारुडे) उदयात्प्राक्त्रिघटिका व्यापिन्येकादशी यदा ॥ संदिग्धैकादशीनामवर्ज्येयंधर्मकांक्षिभिः ॥ उदयात्प्राङ्मुहूर्त्ते नव्यापिन्येकादशीयदा॥ संयुक्तैकादशीनामवर्ज्येयंधर्मवृद्धये (हेमाद्रौ) रात्रेरंत्योष्टमो भागोप्यरुणोदयउक्तः। निशःप्रांतेतुयामार्द्धेदेववादित्रवादने ॥ सारस्वतानध्ययनेचारुणोदयउच्यतइतिस्मृतेः (अत्रैके) षण्णांसर्वपक्षाणांमुहूर्त्तद्वयेन क्रोडीकारान्निशःप्रांते इतिवचनाच्च रात्रिमानवशात्सार्द्धत्रिदंडादयोनेकेरुणोदयाः (तदाहहेमाद्रिः)सार्धघटिकात्रयोक्तिरष्टाविंशतिघटीमितरात्रिविषया । महत्तरास्तुरात्रीरपेक्ष्यचतस्रोघटिकाइत्युक्तमितीत्याहुः। तन्न । अरुणोदयशब्दस्यनेकार्थत्वापत्तेः। नचमुहूर्त्तद्वयमर्थः। दंडद्वयैकमुहूर्त्तादिवेधानांतथाप्यनुपपत्तेः। नहितेषांयामार्धत्वमरुणोदयत्वंचास्ति।मुहूर्तद्वयस्ययामार्द्धस्यच चतस्रोघटिकाइत्यनेनोपसंहाराच्चनतदर्थः। नचसार्द्धतुर्घटिकात्रयमित्यनेनापितदापत्तिःशंक्या। तेनचतुर्दंडवेधस्यैवोक्तेः। चतुर्दंडैर्धघटीदशमीसत्त्वेहिवेधस्तदर्थः ॥ द्विघटिकादौतदयोगाच्च। यत्तुमतम्। कियतारुणोदयवेधइत्यपेक्षायांसार्द्धघटिकात्रयनियमादरुणोदयेर्धघटिकातोन्यूनदशमीसत्त्वेनदोषइति। तत्तुच्छम्। द्विदण्डाद्यपितदापत्तेः। दशमीशेषसंयुक्तोयदिस्यादरुणोदयः।नैवोपोष्यंवैष्णवेनतद्दिनैकादशीव्रतमितिगारुडेभविष्येचयोगमात्रनिषेधात् (नारदीयेपि) लववेधेपिविप्रेंद्रदशम्यैकादशींत्यजेत् ॥ सुरायाबिन्दुनास्पृष्टंगंगांभइवनिर्मलम् (स्कांदेपि)कलाकाष्ठादिनाप्येवंदूषयतेदशमीविभो॥एकादश्यांनकर्तव्यंव्रतंराजन्कदाचनेतिमाधवोप्याह।सोऽयंकलादिवेधोऽरुणोदयवेधेसूर्योदयवेधेचसमान इति (निगमेपि) सर्वप्रकारोवेधोऽयमुपवासस्यदूषकइति॥ अतएवमाधवेनअरुणोदयाद्यदंडेऽल्पदशमीस्पर्शेसम्पूर्णाप्यत्वघटीयोगेसंदिग्धा। मुहूर्तव्याप्तौसंयुक्ता उदयेसंकीर्णेत्युक्ता। अरुणोदयवेलायांदशमीयदिसंगता॥ संपूर्णैकादशींतांतु मोहिन्यैदत्तवान्प्रभुरिति॥ गोभिलाद्युक्तेः। पूर्वोक्तगारुडादेश्च। सामान्यतो विशेषतश्चारुणोदयवेधोनिषिद्धः।यस्त्वष्टमभागोरुणोदयइतिहेमाद्रिणोक्तम्। यच्चमहत्तरारात्रीरितितत्परमतंस्वयमेवदूषितम्। अन्तेप्युक्तम्। वेधतारतम्यंच

दोषतारतम्यादुपपद्यतइति । दोषतारतम्यंचप्रायश्चित्ततारतम्यादवगम्यते (तच्चोक्तंहेमाद्रौस्मृत्यंतरे) अज्ञानाद्यदिवामोहात्कुर्वन्नेकादशींनरः॥ (दशमीशेषसंयुक्तांप्रायश्चित्तमिदंचरेत्॥ कृच्छ्रपादंनरश्चीर्त्वागांचदद्यात्सवत्सकाम्॥ सुवर्णस्यार्धकंदेयंतिलद्रोणसमन्वितम्( विधानांतरंतत्रैवब्राह्मणान्भोजयेत्त्रिंशद्गांचदद्यात्सवत्सकाम्।धरणा*स्यार्धकंदेयंतिलद्रोणमथापिवेति ॥अत्रवेधतारतम्याद्व्यवस्थेतिहेमाद्रिः।निशःप्रांतइत्यपिदोषाधिक्यार्थमेव।तस्माच्चतुर्घटिकात्मकस्त्वारुणोदयइतिसिद्धम्। तेनषट्पंचाशद्घटिकानंतरंदशमीप्रवेशेरुणोदयवेधउक्तोभवति(अंत्योपितत्रैवकण्वेनोक्तः)उदयोपरिविद्धातुदशम्येकादशीयदि ॥ दानवेभ्यःप्रीणनार्थंदत्तवान्पाकशासनइति(स्मृत्यंतरेपि) दशम्याःप्रांतमादायदोदेतिदिवाकरः ॥ तेनस्पृष्टंहरिदिनंदत्तंजंभासुरायतदिति ॥ तत्रारुणोदयवेधो वैष्णवविषयः । तद्वाक्येषुवैष्णवग्रहणात् (तत्स्वरूपंतुमाधवीयेस्कांदे) परमापदमापन्नोहर्षेवासमुपस्थिते ॥ नैकादशींत्यजेद्यस्तुतस्यदीक्षास्तिवैष्णवी ॥ विष्णावर्पिताखिलाचारःसहिवैष्णवउच्यतइति ॥ यद्यपियत्रादेरागमदीक्षायांतन्मात्रस्यवैष्णवत्वंनतुपुत्रादेस्तथापिस्व पारंपर्यप्रसिद्धमेववैष्णवत्वंस्मार्तत्वंचमन्यंतेवृद्धाः(तत्त्वसागरेभविष्ये) यथाशुक्लातथाकृष्णायथाकृष्णातथेतरा ॥ तुल्येतेमन्यतेयस्तुसवैवैष्णवउच्यते ॥ केचित्तुदशम्यांनवमीवेधमपित्यजंतितन्मूलंमृग्यम् । उदयवेधस्तुपरिशेषात्स्मार्तगोचरः (तदाहमाधवः) अरुणोदयवेधःसवेधःसूर्योदयेतथा ॥ उक्तौदशमीवेधौवैष्णवस्मार्तयोःक्रमात् (हेमाद्रिस्तुकेषांचिदर्धरात्रेपिदशमीवेधमाह) अर्धरात्रेतु केषांचिद्दशम्यावेधउच्यते ॥ कपालवेधइत्याहुराचार्यायेहरिप्रियाः ॥ नैतन्ममसंमतम् । यस्मात्त्रियामारात्रिरिष्यतइतिब्रह्मवैवर्तात् । अस्यार्थःअनद्यतनेलङ् । इत्यत्रातीतायाःरात्रेःपश्चिमयामद्वयमागामिन्याःरात्रेः पूर्वयामद्वयंदिवसश्च सकालएषोद्यतनः (सकाल इत्युक्तंमहाभाष्ये) सएषवर्तमानःकालएकादश्यहोरात्रउपोष्यः।तन्मध्येदशमी

* तुल्यायवाभ्यांकथितात्रगुञ्जावल्लस्त्रिगुञ्जोधरणंचतेष्टौ ॥ गद्याणकस्तत्द्वयमिन्द्रतुल्यैर्वल्लैस्तथैकोघटकःप्रदिष्टइतिलीलावती ॥ अतएवेत्यादिनामाधवसंमतेर्हेमाद्रिसंमतेश्चसत्वात् ॥

प्रवेशे विद्धा सा त्याज्या (अतएव हेमाद्रौ) दशम्याः संगदोषेण अर्द्धरात्रात्परेण तु॥ वर्जयेच्चतुरो यामान्संकल्पार्चनयोः सदेति दोष उक्तः। चतुरो यामान्दिवसस्येत्यर्थः। स्वमते तु रात्रेस्त्रियामत्वात्प्रहरत्रयं पूर्वशेषः। तेन चतुर्थप्रहर एव वेधो युक्तः। सोप्यरुणोदय एव। सूर्योदयं विनानैव स्नानदानादिकः क्रम इति॥ मार्कंडेयपुराणात्। प्रत्यूषोऽहर्मुखं कल्य इति कोशादरुणोदयमारभ्य सूर्यांशुप्रवृत्तेस्तत्रैव निषेधः। तेन मतभेदाद्व्यवस्थेति केचित्। कैमुतिकन्यायेनारुणोदयवेधस्यैवेयं स्तुतिरिति तु माधवः। यस्तु दिक्पंचदशभिस्तथेति वेधः स उपवासातिरिक्तविषय इति माधवः सर्वप्रकारवेधोयमुपवासस्य दूषकः॥ सार्द्धसप्तमुहूर्त्तस्तु योगोयं बाधते व्रतमिति निगमादित्यलम्। अत्र माधवमते वैष्णवैररुणोदयविद्धा त्याज्या। यदा त्वेकादश्येव शुद्धा सती वर्द्धते द्वादशी वा उभयं वा तदा परोपोष्या। एकादशी द्वादशी वाधिका चेत्स्यज्यतां दिनम्॥ पूर्वं ग्राह्यं तूत्तरं स्यादिति वैष्णव* निर्णयः। इति माधवोक्तेः (स्मार्त्तैस्तु) सूर्योदयविद्धा त्याज्या। यदा त्वेकादशी शुद्धा सती वर्धते द्वादशी च समा न्यूना वा तदा गृहस्थैः पूर्वा यतिभिरुत्तरा कार्या। प्रथमेहनि संपूर्णा व्याप्याहोरात्रसंयुता॥ द्वादश्यां च तथा तात दृश्यते पुनरेव च॥ पूर्वा कार्या गृहस्थैश्च यतिभिश्चोत्तरा विभो इति स्कांदोक्तेः (वर्धमानोप्येवमेवाह उभयवृद्धौ तु शुद्धा विद्धा वा सर्वेषां परैव) संपूर्णैकादशी यत्र प्रभाते पुनरेव सा॥ सर्वैरेवोत्तरा कार्या परतो द्वादशी यदीति नारदोक्तेः॥ द्वादशीमात्रवृद्धौ तु शुद्धायां÷ पूर्वैव। नचेदेकादशी विष्णौ द्वादशी परतः स्थिता॥ उपोष्यैकादशी तत्र यदीच्छेत्परमं पदमिति नारदोक्तेः। द्वादशीमात्रवृद्धौ तु शुद्धा विद्धव्यवस्थिते॥ शुद्धा पूर्वोत्तरा विद्धा स्मार्तनिर्णय ईदृश इति माधवोक्तेश्च (मदनरत्नेप्येवमयत्तु) विद्धाप्यविद्धा विज्ञेया परतो द्वादशी नचेत्। अविद्धापि च विद्धा स्यात्परतो द्वा

---

* शुद्धैकादशी द्विधा॥ आधिक्येन युक्ता रहिता च॥ आधिक्यं चैकादश्या द्वादश्या उभयस्य वा॥ तत्रारुणोदयमारभ्य प्रवृत्तां शुद्धामप्येकादशीं विद्धाय परेद्युरुपोषणभेदेषु पक्षेषु॥ यदिनाधिक्यं कस्यापि तदा शुद्धाया मेवोपोषणमसंदेहात्। ÷ अयं च पांचरात्राद्यागमदीक्षायुक्तवैष्णवानां तन्निर्णय इति माधवः शुद्धसमायां शुद्धन्यूनायां वा। तेनोत्तरग्रंथासंगतिः॥

दशीयदीतिहेमाद्रौपाद्मवचनंतदेकादश्यावृद्धौज्ञेयम् (तदुक्तंमाधवेन) एका
दशीद्वादशीचेत्युभयंवर्द्धतेयदा ॥ तदापूर्वदिनंत्याज्यंस्मार्तैर्ग्राह्यंपरंदिनमिति ॥
विद्धेकादश्यांद्वादशीमात्रवृद्धौचसर्वेषांपरैवतत्रैवैकादशीमात्रवृद्धौगृहिणःपूर्वा
यतेरुत्तरा । पूर्वोक्तपाद्मोक्तेः । एकादशीविवृद्धौचेच्छुक्लेकृष्णेविशेषतः ॥
उत्तरांतुयतिःकुर्यात् पूर्वामुपवसेद्गृहीतिप्रचेतसोक्तेः । एतच्छुद्धाविद्धातुल्य
मितिमाधवः । त्रयोदश्यांनलभ्येतद्वादशीयदिकिंचन ॥ उपोष्यैकादशीतत्रदश
मीमिश्रितापिचेतिस्कांदात्तु ॥ अविद्धानिनिषिद्धैश्चनलभ्यंतेदिनानितु ॥ मुहू
र्तैःपंचभिर्विद्धाग्राह्यैवैकादशीतिथिरित्यृष्यशृङ्गोक्तेश्च ॥ मुहूर्तपंचकमरुणो
दयमारभ्यज्ञेयम् । अन्यथोत्तरेऽह्निएकादश्यभावासंभवात् (यदपिहेमाद्रिणा)
शुद्धसमाशुद्धन्यूनावाअधिकद्वादशिकाचेत्सर्वेषांपरैवेत्युक्तं तदपिवैष्णवविष
यम् । स्मार्तानांतु पूर्वैवेत्यविरोधः (हेमाद्रिमतेतूच्यतेतत्र) शुद्धाविद्धाद्वयनिं
दावेधान्यूनसमाधिकैः ॥ षट्प्रकाराःपुनस्त्रेधाद्वादश्यूनसमाधिकैरित्यष्टादशैका
दशीभेदाः ॥ तत्रशुद्धाधिकन्यूनद्वादशिकाशुद्धाधिकसमद्वादशिकाचसकामैःपू
र्वानिष्कामैरुत्तराकार्या । प्रथमेऽहनिसंपूर्णेतिपूर्वोक्तस्कांदात् । ऊनद्वादशिका
यांतुविष्णुप्रीतिकामैरुपवासद्वयंकार्यम् । संपूर्णैकादशीयत्रप्रभातेपुनरेवसा ॥
लुप्यतेद्वादशीतस्मिन्नुपवासःकथंभवेत् ॥ उपोष्येद्वेतिथीतत्रविष्णुप्रीणनतत्परैरि
तिवृद्धवशिष्ठोक्तेः ॥ शुद्धन्यूनाशुद्धाधिकाशुद्धसमाविद्धन्यूनाविद्धसमावाधि
कद्वादशिकाचेत्सर्वेषांपरैवेतिहेमाद्रिः । मदनरत्नेतुशुद्धाधिकापरा । संपूर्णै
कादशीयत्रेतिपूर्वोक्तः । अन्यापूर्वा । शुद्धायदासमाहीनासमाहीनाधिकोत्तरा ॥
एकादशीमुपवसेन्नशुद्धांवैष्णवीमपीतिस्कांदात् ॥ शुद्धाएकादशीउत्तराद्वादशी
नचेदेकादशीविष्णोरितिनारदोक्तेश्च (यत्तु) अविद्धापिचविद्धास्यादितिपाद्मं
तच्छुद्धाधिकापरम् (यत्तु) संपूर्णैकादशीत्याज्यापरतोद्वादशीयदि ॥ उपोष्या
द्वादशीशुद्धाद्वादश्यामेवपारणमित्यादितद्वैष्णवपरम् । स्मार्तानांतुपूर्वैवेत्युक्तं
विद्धन्यूनासमद्वादशिकातुमुमुक्षूणांपुत्रवतांचपरा । अन्येषांपूर्वा (पुत्रवतोऽपि
पूर्वेतिमदनरत्ने) विद्धन्यूनान्यूनद्वादशिकासैवसर्वैःकार्येतिहेमाद्रिः (मुमुक्षूणां

परान्येषांपूर्वेतिमदनरत्ने) विद्धसमासमद्वादशिकोनद्वादशिकाचमुमुक्षुभिःपरा ऽन्यैःपूर्वाकार्या । दशमीमिश्रितापूर्वा द्वादशीयदिलुप्यते ॥ शुद्धवद्द्वादशीरा जन्नोपोष्यामोक्षकांक्षिभिरितिव्यासोक्तेः । मोक्षकांक्षिग्रहणादन्येषांपूर्वैव । सर्वत्रैकादशीकार्याद्वादशीमिश्रितानरैः ॥ प्रातर्भवतुवामावायतोनित्यमुपोषणा मितिपाद्मोक्तेः ॥ विद्धाधिकासमद्वादशिकाचसर्वेषांपूर्वैव । पारणाहेनलभ्ये तद्वादशीकलयापिचेत्॥तदानींदशमीविद्धाप्युपोष्यैकादशीतिथिरितिऋष्यशृ ङ्गोक्तेश्च (माधवमतेतु) अत्रगृहिणःपूर्वायतेरुत्तरा विद्धाधिकान्यूनद्वादशि कासोक्षपापक्षयविष्णुप्रीतिकामैःपराकार्या । गृहस्थेनतुनक्तंकार्यम् । एकाद शीद्वादशीचरात्रिशेषेत्रयोदशी ॥ उपवासंनकुर्वीतपुत्रपौत्रसमन्वितइति ॥ कौ र्मेदिनक्षयेउपवास निषेधात् । दशम्यैकादशीविद्धाद्वादशीचक्षयंगता ॥ क्षीणा साद्वादशीज्ञेयानक्तंतुगृहिणःस्मृतमितिवृद्धशातातपोक्तेश्च । गृहिणःपूर्वत्रो पवासः एकादश्याः । शुद्धन्यूनत्वे शुद्धसमत्वेवाद्वादश्याः । न्यूनसमत्वयोरेका दश्यामुपवासः (यानितु) दशम्यनुगताहंतिद्वादशद्वादशीफलम् धर्मापत्यधना यूंषित्रयोदश्यांतुपारणमिति कौर्मादीनि दशमीवेधत्रयोदशीपारणयोः निषे धकानितानिविहितभिन्नपराणि । अत्रमूलवचनानितद्व्यवस्थाचाकरेज्ञेया (य त्तुकालहेमाद्रौबहुवाक्यविरोधेनसंदेहोजायतेयदा॥द्वादशीतुतदाग्राह्यात्रयोदश्यां तुपारणमितिमार्कंडेयोक्तेःसंदिग्धेषुचवाक्येषुद्वादशींसमुपोषयेत्॥ तथाविवा- देषुचसर्वेषुद्वादश्यांसमुपोषणम् ॥ पारणंचत्रयोदश्यामाज्ञेयं मामकीमुनेइति पाद्मोक्तेश्च।वेधसंदेहेज्योतिर्विदांप्रतिपत्तौवापराकार्येत्युक्तम्। तद्वैष्णवविषय मित्यलंबहुना । अथात्रोपयुक्तंकिंचिदुच्यते । तत्रदशम्यामेकादशीयोगेदशमी मध्येएवभोजनंकार्यम् । एकादश्यांनभुंजीतेतितस्याएवनिमित्तत्वात् । निषे धस्तुनिवृत्तात्माकालमात्रमपेक्षतइतिदेवलोक्तेश्च । केचित्तु एकादशीव्रतां गत्वेन पूर्वेद्युरेकभक्तविधानाद्विधिस्पृष्टेचनिषेधानवकाशान्नकाम्यव्रतांगे भोज ननिषेधःप्रवर्तते । तेनैकादशीमध्येपिपर्वादिनेभोजनमित्याहुः ( अत्राधिकारी माधवीयेकात्यायनोक्तः ) अष्टवर्षाधिकोमर्त्योह्यशीतिन्यूनवत्सरः ॥ एका

दश्यामुपवसेत्पक्षयोरुभयोरपीति ( भविष्ये ) ब्रह्मचारीचनारीचशुक्लामेव सदागृहीति (यत्तुविष्णुः ) पत्यौजीवतियानारीउपोष्यव्रतमाचरेत् ॥ आयुष्यं हरतेभर्तुर्नरकंचैवगच्छतीति ॥ तद्भर्त्रननुज्ञाविषयमितिप्रागुक्तम् ( उपवासासामर्थ्येतुमार्कंडेयकौर्मयोः) एकभक्तेननक्तेनतथैवायाचितेनच ॥ उपवासेन दानेनननिर्द्वादशिकोभवेत् ॥ अत्रएकभक्तेनयोमर्त्यउपवासव्रतंचरेदित्येकभक्ताद्युपवासशब्दस्तद्धर्मातिदेशार्थः । तेनततप्रयुक्ताःसर्वेधर्माः संकल्पमन्त्रेचैकभक्तादिपदेनोहःकार्यइतिमदनरत्ने । तथाऽसामर्थ्येप्रतिनिधिनाकारयेदिति प्रागुक्तम् ( व्रताकरणेप्रायश्चित्तमाहमाधवीयेकात्यायनः ) अर्कपर्वद्वयेरात्रौ चतुर्दश्यष्टमीदिवा ॥ एकादश्यामहोरात्रंभुक्त्वाचांद्रायणंचरेदिति ॥ अथ काम्यव्रतविधिः ( लघुनारदीये ) दशम्यादिमहीपालत्रिदिनंपरिवर्जयेत् ॥ गन्धतांबूलपुष्पादिस्त्रीसम्भोगंमहायशाः ( तत्रदशम्यांविधिःकौर्मे ) कांस्यंमांसंमसूरांश्चचणकान्कोरदूषकान् ॥ शाकंमधुपरान्नंच त्यजेदुपवसन्स्त्रियम् ( तथा )शाकंमांसंमसूरांश्चपुनर्भोजनमैथुने ॥ द्यूतमत्यंबुपानंच दशम्यांवैष्णवस्त्यजेत् ( मदनरत्नेनारदीये )अक्षारलवणाःसर्वेहविष्यान्ननिषेविणः ॥ अवनीतलशयनाःप्रियासंगमवर्जिताः(व्रतघ्नान्याहहेमाद्रौदेवलः)असकृज्जलपानाच्च सकृत्तांबूलचर्वणात् ॥ उपवासःप्रणश्येतदिवास्वापाच्चमैथुनात् ॥ अशक्तौतुमदनरत्नेदेवलः(अत्ययेचांबुपानेननोपवासःप्रणश्यति ॥ अत्ययेकष्टे ( विष्णुरहस्ये) गात्राभ्यंगंशिरोभ्यंगंतांबूलंचानुलेपनम् ॥ व्रतस्थोवर्जयेत्सर्वंयच्चान्यन्निराकृतम् ( मधुप्रायश्चित्तमुक्तंनिर्णयामृतेसंग्रहे ) स्तेनहिंसकयोःसख्यंकृत्वा स्तैन्यंचहिंसकम् ॥ प्रायश्चित्तंव्रतीकुर्याज्जपेन्नामशतत्रयम् ॥ मिथ्यावादेदिवास्वापेबहुशोंबुनिषेवणे ॥ अष्टाक्षरंव्रतीजप्त्वाशतमष्टोत्तरंशुचिः ॥ ओंनमोनारायणायेत्यष्टाक्षरं ( तत्रैवपैठीनसिः ) तांबूलचर्वणेस्त्रीसम्भोगेमांसनिषेवणे ॥ व्रतलोपोनचेत्कुर्यात्कृष्णावर्ज्जुजिवर्जनमिति ॥ कृष्णैकादशीवर्ज्जो जननिषेधमात्रपरिपालनेतुतांबूलचर्वणादावपिनदोषइत्यर्थः । सम्भोगोऋतुकालादन्यत्र

रेतःसे[1]कात्मसम्भोगमृतेऽन्यत्रक्षयःस्मृतइतिकात्यायनोक्तेः ( हेमाद्रौवशिष्ठः) उप[2]वासेतथाश्राद्धेनकुर्याद्दन्तधावनम्॥दंतानांकाष्ठसंयोगोदहत्यासप्तमंकुलम् ॥ काष्ठग्रहणान्मृल्लोष्ठाद्यैर्नषेधइतिहेमाद्रिः ( विष्णुरहस्ये ) श्राद्धोपवासदिवसे खादित्वादन्तधावनम् ॥ गायत्र्याशतसम्पूतमंबुप्राश्यविशुध्यति ( निर्णयामृते व्यासः ) वर्जयेत्पारणेमांसंव्रताहेप्यौषधंसदेति ( एकादश्यांश्राद्धप्राप्तौमाधवीयेकात्यायनआह ) उपवासोयदानित्यःश्राद्धंनैमित्तिकंभवेत् ॥ उपवासंतदाकुर्यादाघ्रायपितृसेवितम् ॥ मातापित्रोःक्षयेप्राप्तेभवेदेकादशीयदि ॥ अभ्यर्च्यपितृदेवांश्चआजिघ्रेत्पितृसेवितमिति ॥ हेमाद्र्यादिसर्वनिबंधेष्वेवम् ॥ एतेनएकादशीनिमित्तकंश्राद्धंद्वादश्यांकार्यमितिवदन्तःपरास्ताः (किंचमहालये) सपक्षः सकलःपूज्यःश्राद्धषोडशकंप्रतीतिष्णु तंषोडशत्वं।पौषैकादश्यांचमन्वादिश्राद्धंक्षयाहापरिज्ञानेचतत्पक्षैकादश्यांविहितंश्राद्धंबाधितमेवस्यात् । यदपिस्मृतिचन्द्रिकास्थंपठंति । अन्नाश्रितानिपापानितद्भोक्तुर्दातुरेवच ॥ मज्जन्तिपितरस्तस्यनरकेशाश्वतीःसमाइति ॥ तस्यापिरागप्राप्तभुजगोचरस्यवैधंश्राद्धंगोचरयतांमहत्साहसमित्यलम् । योप्यश्रकृतश्राद्धनिचयाजलपिंडविनाकृताइति लघुनारदीयेएकादश्यांश्राद्धादिनिषेधः । समातापितृभिन्नविषयः । पूर्ववाक्ये तद्ग्रहणात् । निचयः प्रतिग्रहः ( व्रतघ्नान्याहमदनरत्नेदेवलः ) सर्वभूतभयंव्याधिःप्रमादोगुरुशासनम् ॥ अव्रतघ्नानिपठ्यंतेसकृदेतानिशास्त्रतः ( स्कांदेपि ) अष्टौतान्यव्रतघ्नानिआपोमूलंफलंपयः ॥ हविर्ब्राह्मणकाम्याचगुरोर्वचनमौषधम् ॥ इदंचातिसंकटविषयम् ( नारदीये ) अनुकल्पोनृणांप्रोक्तः क्षीणानां वरवर्णिनि ॥ मूलंफलंपयस्तोयमुपभोज्यंभवेच्छुभे ॥ नत्वेवंभोजनंकैश्चिदे

---

१± रेतःसेकात्मसम्भोगःऋतुकालः क्षयोव्रतभ्रंशः रेतःसंक्रमणाद्वोगभागेन्यत्रेत्यादिपाठेरेतःसंक्रमणंगर्भकोशेतद्योग्यंगमनामितिसएवार्थः २+ पैठीनसिः ॥ अलाभेवानिषेधेवाकाष्ठानांदन्तधावने ॥ पर्णादिनाविशुद्ध्येतजिह्वोल्लेखंसदैवच ॥ व्यासः ॥ अलाभेदन्तकाष्ठानांनिषिद्धायांतिथौतथा ॥ अपांद्वादशगंडूषैर्विदध्याद्दन्तधावनमितिमयूखः ॥

कादश्यांबुधैःस्मृतमिति (अस्यापवादः) शयनेचसमुत्थानेमत्स्यापार्श्वपरिवर्तने॥ नरोमूलफलाहारी हृदिशल्यंसमार्पयेत् ॥ एतेचाविरोधिनोनिर्णयाःसर्वव्रतेषुज्ञेयाः (तत्रैकादश्यांसंकल्पः) गृहीत्वौदुंबरंपात्रंवारिपूर्णमुदङ्मुखः ॥ उपवासंतुगृह्णीयाद्यद्वावार्यैवधारयेदिति ॥ माधवीयेवाराहोक्तेः (मंत्रस्तु विष्णूक्तः) एकादश्यांनिराहारःस्थित्वाहमपरेहनि ॥ भोक्ष्यामिपुंडरीकाक्ष शरणंमेभवाच्युतेति (शैवादीनांतुहेमाद्रौसौरपुराणे) सावित्र्याप्यथवाना म्नासंकल्पंतुसमाचरेत् (शिवादेर्गायत्र्योयजुर्वेदेप्रसिद्धाःवाराहे) इत्युच्चार्य ततोविद्वान्पुष्पांजलिमथार्पयेत्॥ ततस्तज्जलंपिबेत्। अष्टाक्षरेणमंत्रेणत्रिर्जप्तेनाभिमंत्रितम् ॥ उपवासफलंप्रेप्सुःपिबेत्पात्रगतंजलमितिकात्यायनोक्तेः । मध्यरात्रेउदयेवाद्वादशीवेधेरात्रौसंकल्पइतिमाधवः । दशम्याःसंगदोषेणअर्धरात्रात्परेणतु॥वर्जयेच्चतुरोयामान्संकल्पार्चनयोस्तदा॥विद्धोपवासेस्नानंतुदिनंत्यक्त्वासमाहितः॥रात्रौसंपूजयेद्विष्णुंसंकल्पंचतदाचरेदितिनारदीयोक्तेः॥तत्रैव पूजामभिधाय। देवस्यपुरतःकुर्याज्जागरंनियतोव्रती (द्वादश्यांनिवेदनमंत्रउक्तः कात्यायने) अज्ञानतिमिरांधस्यव्रतेनानेनकेशव ॥ प्रसीदसुमुखोनाथज्ञानदृष्टिप्रदोभवेति॥नारदीये–ब्राह्मणान्भोजयेच्छक्त्यादद्याद्वैदक्षिणांततः(स्कांदेपि) कृत्वाचैवोपवासंतुयोऽश्नीयाद्द्वादशीदिने। नैवेद्यंतुलसीमिश्रंहत्याकोटिविनाशनम्(द्वादश्यांचवर्ज्यान्याहबृहस्पतिः) दिवानिद्रांपरान्नंचपुनर्भोजनमैथुने॥क्षौद्रंकांस्यामिषंतैलंद्वादश्यामष्टवर्जयेत्(हेमाद्रौब्रह्मांडपुराणे)पुनर्भोजनमध्वायोभा-रआयासमैथुने॥उपवासफलंहन्युर्दिवानिद्राचपंचमी(स्कांदे)परा*न्नंकांस्यतांबूलेलोभंवितथभाषणम् ॥ वर्जयेदितिशेषः (विष्णुधर्मे) असंभाष्यान्हिसंभाष्यतुलस्यर्तसिकादलम् ॥ आमलक्याःफलंवापिपारणेप्राश्यशुद्ध्यति (बृहन्नारदीये) रजस्वलांचचांडालंमहापातकिनंतथा ॥ सूतिकांपतितंचैवउच्छिष्टंरजकादिकम् ॥ व्रतादिमध्येशृणुयाद्घंटाध्वनिमुत्तमः ॥ अष्टोत्तरसहस्रंतुजपेद्वैवेदमातरम् ॥ एतद्व्रतंसूतकेपिकार्यम् ॥ सूतकेमृतकेचैवनत्याज्यंद्वादशीव्रतमिति

* श्वशुरान्नंगुरोरन्नंमातुलान्नंतथैवच ॥ पितृव्यभ्रातृपुत्राणांपरान्नंनैवदोषकृदीतितुनिर्मूलम् ॥

विष्णूक्तेः ॥ तत्रत्यक्तंदानादिसूतकांतेकार्यम् । सूतकांतेनरःस्नात्वापूजयित्वा जनार्दनम् ॥ दानंदत्वाविधानेनव्रतस्यफलमश्नुतइतिमात्स्योक्तेः ॥ रजोदर्शनेपिकार्यम् । एकादश्यांनभुंजीतनारीदृष्टेरजस्यपीतिपुलस्त्योक्तेः॥यदाद्वादश्यां श्रवणर्क्षंतदाशुद्धामप्येकादशींत्यक्त्वातत्रैवोपवासःकार्यः । शुक्लावायदिवाकृष्णाद्वादशीश्रवणान्विता ॥ तयोरेवोपवासश्चत्रयोदश्यांचपारणमितिनारदीयोक्तेः ॥ एतेचनियमाःकाम्यव्रतेनियताः । नित्यव्रतेसतिसंभवेकार्याः । शक्तिमांस्तुपुनःकुर्यान्नियमंसविशेषणमितिकात्यायनोक्तेः ( अशक्तौतुमाधवीये ब्रह्मवैवर्ते ) इतिविज्ञायकुर्वीतावश्यमेकादशीव्रतम् ॥ विशेषनियमाशक्तोऽहोरात्रंभुविवर्जितइति ॥ अथाष्टौमहाद्वादश्यः । तत्रशुद्धाधिकैकायुताद्वादशी उन्मीलिनीसंज्ञा । द्वादश्येवशुद्धाधिकावर्धतेचेत्सावंजुली ॥ वासरत्रयस्पर्शिनी त्रिस्पृशा । अग्रेपर्वणःसंपूर्णाधिकत्वेपक्षवर्धिनी । पुष्यर्क्षयुताजया ॥ श्रवणयुताविजया । पुनर्वसुयुताजयंती । रोहिणीयुतापापनाशिनी । एताःपापक्षयमुक्तिकामउपवसेत् । अत्रमूलंहेमाद्रौज्ञेयम् ॥ एकादशीद्वादश्योरेकत्वेतत्रैवोपवासः । पार्थक्येतुशक्तस्योपवासद्वयम् । एकादशीमुपोष्यैवद्वादशींसमुपोषयेदितिविष्णुरहस्यात् । अशक्तौतुद्वादश्यामेव । एवमेकादशींत्यक्त्वाद्वादशींसमुपोषयेत् ॥ पूर्ववासरजंपुण्यंसर्वंप्राप्नोत्यसंशयमितितत्रैवोक्तेः ( यदात्वल्पाद्वादशीतदुक्तंमात्स्ये ) यदाभवतिअल्पापिद्वादशीपारणादिने ॥ ऊषःकालेद्वयंकुर्यात्प्रातर्मध्याह्निकंतदा ( नारदीयेपि ) अल्पायामथविप्रेंद्रद्वादश्यामरुणोदये ॥ स्नानार्चनक्रियाःकार्यादानहोमादिसंयुताइति ( संकटेतुमाधवीयेदेवलः ) संकटेविषमेप्राप्तेद्वादश्यांपारयेत्कथम् ॥ अद्भिस्तुपारणांकुर्यात्पुनर्भुक्तंनदोषकृदिति ॥ संकटेत्रयोदशीश्राद्धप्रदोषादौ ( अत्रकेचिदाहुः) अपकर्षवाक्यान्यनाहिताग्निविषयाणि । अग्निहोत्रादीनांश्रौतत्वेनापकर्षायोगादिति । द्वादश्यांचप्रथमपादमतिक्रम्यपारणांकार्यम् । द्वादश्याःप्रथमःपादोहरिवासरसंज्ञितः ॥ तमतिक्रम्यकुर्वीतपारणांविष्णुतत्परइतिनिर्णयामृतेमदनरत्नेचविष्णुधर्मोक्तेः । अत्रकेचित्संगिरंते । यदाभूयसीद्वादशीतदापिप्रात

मुहूर्तत्रयेपारणंकार्यम् । सर्वेषामुपवासानांप्रातरेवहिपारणमितिवचनात् ( अ
स्मद्गुरवस्तु ) बहूनांकर्मकालानांविनाकारणंबाधापत्तेः । प्रागुक्तवचनैश्च ।
अल्पद्वादश्यामेवापकर्ष विधानादपराह्णएवकार्यम् । प्रातःशब्दस्तुसायंप्रात
र्द्विजातीनामशनंश्रुतिचोदितमिति वदपराह्णवाचित्वेप्युपपन्नः । नचवाक्य
वैयर्थ्यंपुनर्भोजनं सायंपारणनिवृत्यर्थत्वात्तस्येत्याहुः ( प्रमादेनैकादश्युप
वासातिक्रमेअपरार्केवाराहे ) एकादशीविलुप्ताचेद्द्वादशीपरतःस्थिता ॥ उ
पोष्याद्वादशीतत्रयदीच्छेत्परमंपदमिति ॥ कैश्चित्तुविष्णुनाचेदितिपठितम् ।
अत्राविरोधिनोनियमाःसर्वव्रतेषुबोद्धव्याः । अन्येचनवरात्रेवक्ष्यंतेइतिदिक् ॥

इतिश्रीरामकृष्णभट्टात्मजकमलाकरभट्टकृतेनिर्णयसिंधौएकादशीनिर्णयः ॥

—— ※ ——

द्वादशीतुपूर्वैवयुग्मवाक्यात् । द्वादशीतुप्रकर्तव्याएकादश्यायुताप्रभोइतिस्कां
दाच्च । त्रयोदशीतुसर्वमतेशुक्लापूर्वाकृष्णोत्तरा । त्रयोदशीतिथिःपूर्वःसितो
त्याऽसितःपश्चादितिदीपिकोक्तेः । शुक्लात्रयोदशीपूर्वापराकृष्णात्रयोदशी
तिमाधवाच्च । चतुर्दशीसर्वमतेकृष्णापूर्वाशुक्लोत्तरा । उपवासेतुद्वावपिपरे
तिमदनरत्ने । पौर्णमास्यमावास्येतुसावित्रीव्रतंविनापरेग्राह्ये । भूतविद्धेन
कर्तव्येदर्शपूर्णेकदाचन ॥ वर्जयित्वामुनिश्रेष्ठसावित्रीव्रतमुत्तममिति । ब्रह्म
वैवर्तात् ( अमायांयोगविशेषमाहाऽपरार्केशातातपः ) अमावास्यांभवेद्वारो
यदाभूमिसुतस्यवै ॥ जाह्नवीस्नानमात्रेणगोसहस्रफलंलभेत् ॥ अमावैसोमवा
रेणरविवारेणसप्तमी ॥ चतुर्थीभौमवारेण विषुवत्सदृशंफलम् ( तत्रैवव्या
सः ) सिनीवालीकुहूर्वापि यदिसोमदिनेभवेत् ॥ गोसहस्रफलंदद्यात्स्नानंवै
मौनिनाकृतम् ( हेमाद्रौबृहन्मनुः ) श्रवणाश्विधनिष्ठार्द्रानागदैवतमस्तके ॥ य
द्यमारविवारेणव्यतीपातःसउच्यते ॥ नागदैवतंआश्लेषा । मस्तकोमृगशिराः
प्रथमपादइत्यन्ये । सचसर्वेषां ( अथेष्टिकालःगोभिलः ) पक्षांताउपवस्तव्याः

पक्षादयोऽभियष्टव्याइति । उपवासो[+]न्वाधानम् । तत्रमध्याह्ने तत्पूर्वंवापर्व
प्रतिपत्संधौतद्दिनेयागः । पूर्वाह्णेवाथमध्याह्ने यदिपर्वसमाप्यते ॥ उपोष्यतत्र
पूर्वेद्युस्तदहर्यागइष्यतइतिलौगाक्षिवचनात् ( तत्रद्वेधाविभागः ) आवर्तनात्तु
पूर्वाह्णोह्यपराह्णस्ततःपरः ॥ मध्याह्नस्तुतयोःसंधिर्यदावर्तनमुच्यतइति ॥ म
दनरत्नेवचनात् । मध्याह्नादूर्ध्वंसंधौमाधवमतेपरेऽह्नियागः । अपराह्णेऽथवा
रात्रौयदिपर्वसमाप्यते ॥ उपोष्यतस्मिन्नहनिश्वोभूतेयागइष्यतइतिलौगाक्षि
णोक्तेः ॥ हेमाद्रिस्त्वपराह्णसंधावपिपरदिनेप्रतिपच्चतुर्थांशेचंद्रोदयेचप्रतिद्वि
तीयादिवत्क्षयेसतिपूर्वेद्युर्यागः । पर्वणोंशेद्वितीयेतुयष्टव्यंतुद्विजातिभिः ॥
द्वितीयासहितंयस्मादृश्यंत्याश्वलायनाइति ॥ द्वितीयेत्वितिकैमुतिकन्यायेन
तुर्यांशपरस्तुरीयेत्वितिमूलपाठो । पाठःस्पष्टार्थएव ( तथा ) भूतापंचदशीपू
र्णाद्वितीयाक्षयगामिनी ॥ चरुरिष्टिरमायांस्याद्भूतेकव्यादिकीक्रियेतिबौधा
यनवचनाच्चेत्यूचिवान् (मदनरत्नेपि) चतुर्दशीचतुर्योमाअमावास्यानदृश्यते ॥
श्वोभूतेप्रतिपच्चेत्स्यात्पूर्वातत्रैवकारयेदिति ( यत्तु माधवः ) यस्तुवाजसनेयी
स्यात्तस्यसंधिदिनात्पुरा ( नक्वाप्यन्वाहितिःकिंतुसदासंधिदिनेहिसेत्याहयच्च
कालादर्शेप्युक्तम् ) आवर्तनादधःसंधिर्यद्यन्वाधायतद्दिने ॥ परेद्यु रिष्टिरित्या
हुर्विप्रावाजसनेयिनइति ( यच्चमदनरत्ने ) मध्यंदिनात्स्यादहनीहयस्मिन्
प्राक्पर्वणःसंधिरियंतृतीया ॥ सार्वविकावाजसनेयिमत्यातस्यामुपोष्याथपरे
द्युरिष्टिरिति ॥ एततपौर्णमासीपरमितितत्रैव ॥ आवर्तनोर्ध्वंसर्वागस्ताद्राशौ
वासमाप्तोहि । मध्याह्नादर्वाक्समाप्तात्तृतीयेत्यर्थः । तत्कर्कभाष्यादेवजानी
यचानंत भाष्यादिसकलतच्छाखीयग्रन्थविरोधात् वृद्धानादराच्चोपेक्ष्यम् ।

---

१[+] इध्मावर्हिःसम्पादनमग्निपरिग्रहइत्यादिप्रयोगप्रारम्भःसंधाविति ॥ तत्स्वरूपंभगवतीपुराणे ॥ अनुमत्याश्चराकायाःसिनीवाल्याःकुहूंविना ॥ एतस्यांद्विलवःकालःकुहूमात्राकुहूःस्मृतेति ॥ स्मृत्यंतरे ॥ लवान्तरचतुर्भागस्त्रुटिरित्यभिधीयते ॥ त्रुटिद्वयंनिमेषोक्तोनिवेषस्तुलवद्वयं ॥ तथाचैकलध्वक्षरोच्चारणपरिमितेकालेएकःपर्वणोपयःप्रतिपदस्तदुभयं मिलितंसंधिःकुक्वितिकोकिलेनोक्तेर्यावान्कालःसमाप्यतेतत्कालसंज्ञिताचैषाअमावास्याकुहूःस्मृतेतिमात्स्यात्कुहूप्रतिपदोःसन्धिर्द्विगुणइतिपुरुषार्थचिन्तामणिः ॥

(पौर्णमास्यांविशेषमाहकात्यायनः) संधिश्चेत्संगवादूर्ध्वं प्राक्पर्यावर्तनाद्रवेः ॥ सापौर्णमासीविज्ञेयासद्यस्कालविधौनरैः (अमायांविशेषमाहबौधायनः) द्वितीयार्धत्रिमुहूर्ताचेत्प्रतिपद्यापराह्णिकी ॥ अन्वाधानंचतुर्दश्यांपरतःसोमदर्शनात् (कात्यायनश्च) यजनीयेऽह्निसोमश्चेद्वारुण्यांदिशिदृश्यते ॥ तत्रव्याहृतिभिर्हुत्वादंडंदद्याद्द्विजातयइति ॥ इदंचबौधायनवाजसनेयिविषयम् तैत्तिरीयश्रुतौतुचंद्रदर्शनेऽपियागउक्तः । एषावैसुमनानामेष्टिर्यामभ्यजानन् । पश्चाच्चंद्रमाअभ्युदेत्यस्मिन्नेवास्मैलोकेऽर्धुकंभवतीति । श्रुत्यंतरेऽपि । यदहःपश्चाच्चंद्रमाअभ्युदेतितदहर्यजन्निमांल्लोकानभ्युदेतीति । इदंबह्वृचापस्तंबविषयम् । मदनरत्नेऽप्येवम् । आपस्तंबभाष्यार्थसंग्रहेऽप्येवम् । अतः पक्षद्वयस्यस्वस्वसूत्राद्व्यवस्थेतितत्त्वम् । दृष्टार्थत्वादाश्वलायनादीनांतुपूर्वाह्णसंधिविषयमितिमाधवः (शेषपर्वणोष्टौविशेषमाहमाधवीयेगार्ग्यः) प्रतिपद्यप्रविष्टायांयदिचेष्टिःसमाप्यते ॥ पुनःप्रणीयकृत्स्नेष्टिःकर्तव्यायागवित्तमैः† ॥ गृह्याग्नेर्नायंनियमइतिमदनपारिजातः । एवंपर्वान्त्यांशःप्रतिपदश्चाद्योऽशोयागकालः उक्तः । क्वचित्प्रतिपत्तुर्यांशेऽपियागः । संधिर्यद्यपराह्णेस्याद्यागंप्रातःपरेऽहनि कुर्वाणःप्रतिपद्भागेचतुर्थेऽपिनदुष्यतीतिवृद्धशातातपोक्तेः । एतत्पूर्णिमापरमितिमदनरत्ने । पर्वणःप्रतिपदःक्षयवृद्ध्योश्चार्धंप्रक्षिप्यसंधिर्ज्ञेयः (तदाहमाधवः) वृद्धिः‡प्रतिपदोयावत्तदर्धंपर्वणिक्षिपेत् ॥ क्षयस्यार्धंतथाक्षिप्त्वासंधिर्निर्णीयतांसदेति (कात्यायनोपि) परेऽह्निघटिकान्यूनास्तथैवाभ्यधिकाश्चयाः ॥ क्षिप्त्वातदर्धंपूर्वस्मिन्ह्रासवृद्धीप्रकल्पयेदिति ॥ एवंस्मार्तस्थालीपाकेऽपिज्ञेयम् । तत्रेष्टिस्थालीपाकावाधानगृहप्रवेशनीयहोमानंतरभाविन्यांपौर्णमास्यांप्रारभणीयौनतुदर्शे । यद्यारंभेमलमासपौषमासगुरुशुक्रास्तादिभवतितदाप्यारंभःकार्यः (यानितु) उपरागोऽधिमासश्चयद्यादिप्रथमपर्वणि ॥ तथामलिम्लुचेपौषेनान्वारंभणमिष्यते ॥ गुरुभार्गवयोर्मौढ्ये चंद्रसूर्यग्रहेतथेतिसंग्रह

† तथाचापराह्णसंधावपिब्राह्मणभोजनातिरेकःपदार्थःप्रातिपदिकर्तव्यइतिहेमाद्रौ ‡ पर्वणियावत्योघटिकास्ततोऽधिकाश्चेत्प्रतिपदोवृद्धिश्चेत्तदातदर्थंपर्वणिसंयोज्यसंधिर्ज्ञेयः ॥ एवंह्रासेऽपि ॥

वचनानितानिआलस्यादिनातिक्रांतशुद्धकालप्रारंभविषयाणि। नामकर्मचद
र्शेष्टिंयथाकालंसमाचरेत् अतिपातेसतितयोःप्रशस्तेमासिपुण्यभइत्यपरार्कैग
र्गवचनादितिप्रयोगपारिजाते । उक्तंचैतत्प्रयोगरत्नेभट्टैः कालादर्शेतु । नाम
कर्मचजातेष्टिमितिपाठः (याज्ञिकास्तु) आधानानंतरापौर्णमासीचेन्मलमास
गा ॥ तस्यामारंभणीयादीन्नकुर्वीतकदाचनेतित्रिकांडमंडनवचनाच्छुद्धकालस्य
वविप्रकर्षेपिष्टिंकृत्वारंभंकुर्यादित्याहुः (कालादर्शेस्मृतिसंग्रहेपि) आरंभेदर्शपूर्ण
स्योरग्निहोत्रस्यचादिमम ॥ प्रतिष्ठाः पंचकूर्माद्यामलमासेविवर्जयेदिति ॥ अ
र्थविकृतीष्टि (तत्रापस्तंबः) यदीष्ट्यायदिपशुनायदिसोमेनयजेतसोमावास्या
यांपौर्णमास्यांवेति । अत्रप्रकृतितःकालेसिद्धेपिसद्यस्कालताविधेया । तृतीया
यांसांगत्वेनोक्तेः । अत्रपौर्णमास्यमावास्याशब्दाभ्यांतदंत्यक्षणोगृह्यते । ते
नतद्दत्यहोरात्रइत्यर्थमाहरामांडारः (माधवोपि) इष्ट्यादिविकृतिःसर्वापर्व
पर्वण्येयवेतिनिर्णयइति(अत्रविशेषमाहत्रिकांडमंडनःकात्यायनश्च) आवर्तना
त्प्राग्यदिपर्वसंधिःकृत्वातुतस्मिन्प्रकृतिंविकृत्याः॥ तदैवयागःपरतोयदिस्यात्त
स्मिन्विकृत्याःप्रकृतेपरेद्युरिति ॥ धूर्तस्वाम्यादयोप्येवमाहुः । यदीष्ट्येतिसांगा
याविकृतेपर्वकालत्वादावर्तनात्प्राक्संधौसंधिमभितोयजेतेतिप्रकृतेःप्रतिपदि
समाप्तिनियमात्प्रकृत्यनंतरप्रति पादावकृत्ययोगात्पूर्वेद्युर्विकृतिरित्युक्तंतंत्रर
त्नेपार्थसारथिना)यद्यपिप्रकृतेः पर्वत्वादपर्वमंतेस्यादित्यापस्तंबेनोक्तम्। तथा
पिहेतुवादेनश्रुतिमूलत्वाभावादंगंवासमभिव्याहारादितिवदप्रामाण्यमितितदा
शयः (आग्रयणेतु विशेषंवक्ष्यामः ) अन्वारंभणीयातुचतुर्दश्यांकार्येतिहर
दत्तकेशिवृत्तोमात्दत्तीयोअन्येषांपर्वण्येव । पशौसोमेचकालांतरमप्याहबौ
धायनः । अमावास्येनवाहविशेषवानक्षत्रेचेति । शुक्लपक्षेकृत्तिकादिविशाखां
तेषुदेवनक्षत्रेष्ठिवर्तिकेशवस्वामीव्याचख्यौ । चातुर्मास्येष्वपिद्वादशाहयथाप्र
योगपक्षयोर्नक्षत्रेष्वप्यारंभः। यावज्जीवत्सांवत्सरप्रयोगयोस्तुफाल्गुन्यांचैत्र्यां
वारंभः(पशौतुविशेषमाहकात्यायनः) अर्धादह्नोभवतिनियतंपर्वसंधिःपरस्ता
त्कृत्वातस्मिन्नहनितुपशुंसद्यएवत्र्यहंवा ॥ आरम्भणीयप्रकृतिरथचेत्पर्वसंधिः

पुरस्तात्कृत्वा तस्मिन्प्रकृतिमथतु स्यात्पशुःसद्य एव ॥ अधिकारपशुस्त्वग्नीषोमीयेणासवनीयेनवा समानतंत्रोवाकार्यइतित्रिकांडमंडनः ( सोमेत्वाहापस्तंबः ) अमावास्यायांदीक्षा यजनीयेवामावास्याया यजनीयेवासुत्यमहः पौर्णमास्यांदीक्षायजनीयेवापौर्णमास्यांयजनीयेवाहुत्यमहरिति ( लाघायनसूत्रेपि) पूर्वपक्षस्यप्रथमेहनिदीक्षेतदृष्ट्वावानक्षत्रयोगेचेति पूर्वपक्षःशुक्लपक्षः । नक्षत्रयोगेचेत्ययमर्थः । चैत्र्यादिपूर्णिमायांचित्रानक्षत्रयोगेदीक्षेतेति । आधानंतुपर्वणिनक्षत्रेषुचोक्तम् । तत्रपर्वनक्तंगार्हपत्यमादधीतेत्यादिकर्मकालव्यापिग्राह्यम् । दिनद्वयेतत्त्वेपरंग्राह्यम् । संकल्पस्यपर्वणिलाभात्। पर्वनक्षत्रयोगेतदेवग्राह्यम्। यत्रर्त्तीणांसन्निपातितान्यृतुर्नक्षत्रंचपर्वतत्समृद्धंविप्रतिषेधेऋतुर्नाक्षत्रंचबलीयइति । हिरण्यकेशिसूत्रात् । ऋतुर्वसंतेब्राह्मणोग्नीनादधीतेत्यादिः (रेणुकारिकायांतु) माघादिपंचमासेषुश्रावणेवाश्विनेतथा ॥ मार्गशीर्षेशुक्लपक्षेआधानमथकारयेदित्युक्तम् । अत्रमूलंमृग्यम् । आधाननक्षत्राण्यापस्तंबसूत्रेकृत्तिकारोहिणीमृगशीर्षपुनर्वसुपुष्यपूर्वोत्तरापूर्वाषाढोत्तराषाढाहस्तचित्राविशाखाऽनुराधाश्रवणोत्तराभाद्रपदाइति । सोमपूर्वाधानेविशेषमाहापस्तंबः ( सोमेनयक्ष्यमाणआदधानोनर्तुन्नर्क्षेन्ननक्षत्रमिति) अत्रप्रकरणादाधानकालबाधः । तेनसोमस्यवसंतकालतानबाध्यतइतिरुद्रदत्तवृत्तौनारायणवृत्तौचोक्तम । तत्ररत्नेवार्तिकेच । तेवाएतेउभयेअपहतपाप्मानोऋतवः । एषवाउद्यन्नादित्यएषांपाप्मनोपहंता । यदेवैनंकदाचनयज्ञमुपनमेदथादधीतेत्यत्रोत्तरायणरूपंदैवंदक्षिणायनरूपंचपित्र्यमित्युभयमृतुत्रयंसोमाधानेशतपथेविशिष्यविहितम । तदेकवाक्यतयाशाखांतरेपिनर्तून्न र्क्षेदित्यत्रसोमकालबाधएव।आधानकालबाधस्ययदेवैनंश्रद्धोपनमेत्तदादधीतेत्यस्यांशाखायांवाक्यांतरेण सिद्धत्वात्सोमकालबाधार्थमेवेदमित्युक्तम् । धूर्तस्वामीतुसोमस्यापिऋतुस्तस्यापिनर्क्षेदितिलिखनादुभयकालबाधंमन्यते । श्रीरामांडारस्तुकालांतरविधानंवा सर्वकालानादरोवेतिपक्षद्वयमुक्तवान्।तत्राद्येकृत्तिकादिकालांतरस्ययथाधानेवसंताद्यबाधेनविधानम् । तथासोमेप्युदगयनपूर्वपक्षपुण्याहसन्निपातेयज्ञकाला

नादेशइतिछंदोगसूत्रोक्तोदगयनबाधेनसोमाभिसंधिरूपकालांतरविधानादुदगयनंत्वपेक्षतइत्युक्तम् । द्वितीयपक्षेतुयद्देवैनंयज्ञउपनमेदितिसर्वकालानादरउक्तइतिभारद्वाजसूत्रात्सर्वशब्दस्य चविश्वजित्सर्वपृष्ठइतिवद्द्वयोरप्रयोगात् सर्वकालबाधइति । तेनदक्षिणायनेपिभवतीत्युक्तम् । यद्गुरुभाष्येदेवत्रातभाष्येतंत्ररत्ने चषट्स्वपिऋतुषुभवतीत्युक्तमितिदिक् । श्राद्धेत्वमावास्यात्रेधाविभक्तदिनतृतीयांशेयोपराह्णभागस्तद्व्यापिनीसाग्निकैर्ग्राह्या । पिंडान्वाहार्यक*श्राद्धंक्षीणे राजनिशस्यते ॥ वासरस्यतृतीयेंशेनातिसंध्यासमीपतइतिकात्यायनोक्तेः ॥ दर्शश्राद्धंतुयत्प्रोक्तंपार्वणंतत्प्रकीर्तितम् ॥ अपराह्णेपितृणांचतत्रदानंप्रशस्यतइति॥ शातातपोक्तेश्च। दिनद्वयेतत्रसत्त्वेसर्वापराह्णव्यापीदर्शोग्राह्यः। यदुभयेद्युरेवविहितः सर्वोऽपराह्णस्थितइतिदीपिकोक्तेः (यत्तुकार्ष्णाजिनिः) भूतविद्धाममावास्यांमोहादज्ञानतोपिवा॥ श्राद्धकर्मणियेकुर्युस्तेषामायुःप्रहीयतेइति तदपराह्णेचतुर्दशीवेधपरमितिश्राद्धहेमाद्रिः। अपराह्णव्याप्तिपरमितिमाधवः दिनद्वयेऽपराह्णव्याप्त्यभावेशतोव्याप्तौचतिथिक्षयेपूर्वेतिहेमाद्रिः। यदाचतुर्दशीयामंतुरीयमनुपूरयेत् ॥ अमावास्याक्षीयमाणातदैवश्राद्धमिष्यतइतिकात्यायनोक्तेः॥ चतुर्दश्यायाश्चतुर्थंयामंदर्शः पूरयेत् । चतुर्दशीयामत्रयंस्यादित्यर्थः क्षीयमाणापरदिनेऽपराह्णव्यापिनीनेत्यर्थः (व्यतिरेकमाह) वर्धमानाममावास्यांलक्षयेदपरेहनि ॥ यामांस्त्रीनधिकान्वापिपितृयज्ञस्ततोभवेत् ॥ ततःश्राद्धं च (दिनद्वयेऽपराह्णव्याप्त्यादौतिथिवृद्धौचहारीतः) त्रिमुहूर्ताचकर्तव्यापूर्वाखर्वाचबह्वृचैः ॥ कुहूरध्वर्युभिःकार्यायथेष्टंसामगीतिभिः ॥ त्रिमुहूर्ताभावेतु पूर्वेत्यर्थः । पिंडपितृयज्ञस्तुकात्यायनैर्यागदिनात्पूर्वेद्युःकार्यः । पूर्वावागत्वात्पिंडपितृयज्ञइतितत्सूत्रात् । व्याख्यातंचैतत्कर्काचार्यैः। पूर्वांग्वदर्शात् पिंडपितृयज्ञोनपश्चात् । कुतःअंगत्वात् । तथाचश्रुतिः तस्मात्पूर्वेद्युःपितृभ्यःक्रियतउत्तरमहर्देवान्यजंतइति । पूर्वेद्युःपितृभ्योयज्ञं निपृणीयप्रातर्देवेभ्यःप्रतनुतइतिचतेनतन्मतेअंगमेवासौ । तदुक्तम् । अंगंवासमभिव्याहारादिति ।

* पिंडपितृयज्ञानंतरंक्रियमाणंश्राद्धं ॥

तेनकर्कमतेचतुर्दशी युक्तदर्शेपिंडपितृयज्ञइति । श्रीअनंतभाष्येतुपरेद्युरित्युक्तम् । अत्रद्वेधाप्याचारोदृश्यते । आपस्तंबानांतुपरदिनेमुहूर्त्तमपिदर्शसत्त्वे तत्रैवपितृयज्ञः (तदाहआपस्तंबः) अमावास्यायांयदहश्चंद्रमसंनपश्यंतितदह पिंडपितृयज्ञंकुरुतइति । अस्यरुद्रदत्तीयाव्याख्या पिंडैर्युक्तःपितृयज्ञःपिंडपितृयज्ञःसचकर्मांतरंनतुदर्शांगः (यथावक्ष्यति) पितृयज्ञःस्वकालविधानादंगस्यादिति । तंचयदहश्चंद्रमसंनपश्यंतिपंचदश्यांप्रतिपदिवातदहःकुरुते । यदहस्तयोःसंधिरतदहरित्यर्थइति (रामांडारोप्याह) पिंडपितृयज्ञस्तुपर्वसंधिमहोरात्रापराह्णइति । अतःपर्वसंधिदिनेपितृयज्ञः । शतपथश्रुतिरपियदैवैषनपुरस्तान्नपश्चाद्ददृश्यतेथपितृभ्योददातीति । पर्वसंधिदिनेहिपूर्वतःपश्चाद्वाचंद्रोनदृश्यतएवेत्यर्थः (सत्याषाढोपि) पितृयज्ञंप्रक्रम्यदृश्यमानेतूपोष्यश्वोभूते यजतइत्याह (हेमाद्रिस्तु) अमावास्याशब्दस्तिथिवचनएव । पूर्वोक्तापस्तंबसूत्रेयदुक्तमनपश्यंतीतितत्क्षयोभिप्रेतः । अतश्चतुर्दश्यांचंद्रमसश्चक्षीणत्वात्तदुक्तदर्शेपितृयज्ञः । पितृयज्ञंतुनिर्वर्त्यविप्रश्चंद्रक्षयेऽग्निमानितिमनूक्तेः । यदुक्तंयदहस्त्वेवदर्शनंनैतिचन्द्रमाः । यत्क्षयापेक्षयाज्ञेयंक्षीणोराजनिचेत्यपीति यदुक्तंदृश्यमानेपितचतुर्दश्यपेक्षयेतिचकात्यायनोक्तेः । दृश्यमानेप्येकइति गोभिलोक्तेः । तस्यांसंध्यागतःसोसोमृणालमिवदृश्यते ॥ अपराह्णेक्षयस्तस्यांपिंडानांकरणंध्रुवमितिहारीतोक्तेश्च (चंद्रक्षयकालश्चोक्तःकात्यायनेन) अष्टमेंशेचतुर्दश्याःक्षीणोभवतिचन्द्रमाः ॥ अमावास्याष्टमेंशेतुपुनःकिलभवेदणुरिति ॥ तेनपूर्वेद्युरेवपितृयज्ञइत्यूचिवान् (कर्काचार्यैरपि) अपराह्णेपिंडपितृयज्ञश्चंद्रादर्शनेमावास्यायामितिकात्यायनसूत्रेऽदर्शनेनक्षयएवोक्तःतस्मिन् क्षीणेददातीतिश्रुतेः । अतस्तन्मतेचतुर्दशीयुक्तदर्शेपितृयज्ञेसतिपरदिनेयागोर्थात्सिद्धः । तदेतत्सर्वोत्कृष्टमपिहेमाद्रिकर्कादिव्याख्यानमापस्तंबैरनभ्युपगमात्कातीयबौधायनादिविषयम् । आश्वलायनानामपिशेषपर्वणिपिंडपितृयज्ञः (तथाचसूत्रम्) अमावास्यामपराह्णेपिंडपितृयज्ञइति (अत्रनारायणवृत्तिः) अमावास्याशब्दःप्रतिपत्पंचदश्योःसन्धिवचनोप्यत्रापराह्णशब्दसम

न्वयात्तद्वत्यहोरात्रेवर्तते । तस्यापराह्णेह्नश्चतुर्थेभागेपिंडपितृयज्ञ:कार्य:। श्रौ
पवसथ्ययजनीयेवाहनियदात्वहोरात्रसंधौतिथिसंधि: स्यात्तदौपवसथ्येएवाह
निक्रियतइति । अतएवमुहूर्त्तमप्यमावास्याप्रतिपद्यपिचेद्भवेत ॥ तद्दत्तमक्षयंज्ञेयं
पर्वशेषंतुपर्ववदितिहेमाद्रौवचनंपिंडपितृयज्ञपरमुक्तम । प्रयोगपारिजातेत्वयं
चस्मार्ताग्निमतासंपूर्णेदर्शेश्राद्धव्यतिषंगेणाकार्य: । व्यतिषंगोनामोभयो:सहा
नुष्ठानम । एतत्रस्थालीपाकेनसहपिंडार्थमुद्धृत्येतिसूत्रेवृत्तिकृतोक्तम ( खंडपर्व
णितुकेचिदाहु: ) पूर्वेह्निपिंडपितृयज्ञव्यतिषंगेणश्राद्धंकृत्वापरेह्निकेवल:
पिण्डपितृयज्ञ:कार्य: । वृत्तिकृतात्वान्वष्टक्यंचपूर्वेद्युर्मासिमास्यथपार्वणं ॥
काम्यामाभ्युदयेष्टम्यामेकोद्दिष्टमथाष्टम मित्युदाहृत्यपूर्वेषुचतुर्षुस्थालीपाकादु
द्धृत्याग्नौकरणमित्युक्तेर्दर्शश्राद्धस्थालीपाकोनियतइतिगम्यते । स्थालीपा
कश्चपितृयज्ञएवेतिपूर्वदिनेव्यतिषंग:प्रसिद्ध: । प्रयोगपारिजातेतुवार्षिक
श्राद्धादेरपिव्यतिषंगउक्त: । किंतुतदर्शश्राद्धस्य । न्यायविदस्त्वाहु: । सूत्रस्य
वृत्तेश्चसम्पूर्णदर्शविषयत्वात खंडपर्वणिपूर्वदिनेकेवलंश्राद्धंपरदिनेचकेवल:
पितृयज्ञ:कार्य:अतएवोक्तंवृत्तिकृता । नात्रपूर्वस्थालीपाकश्चोद्यतेसर्वश्राद्धे
षुप्रसंगादितिप्रयोगपारिजातोक्तिरप्येतद्विषयैव । पूर्वदिनेचश्राद्धेग्नौकरण
मेवनपाणौहोम:।चतुर्ष्वाद्येषुसाग्नीनांवह्नौहोमोविधीयते ॥ पित्र्यब्राह्मण
हस्तेस्यादुत्तरेषुचतुर्ष्वपीतिपरिशिष्टेनियमात ॥ नचलौकिकाग्नौपक्वस्यकथं
गृह्याग्नौहोम: । नान्याग्नौपक्वमन्याग्नौजुहुयादितिनिषेधात । मैवं । श्राद्धस्य
गृह्यत्वेनस्मार्ताग्नौपचनाग्नौवाकर्तव्यत्वात । तस्मात्पूर्वेद्यु:केवलंश्राद्धंनव्यति
षंग: ।इदमेवचयुक्तंआहिताग्निनातुसर्वाधानिनार्धाधानिनावासंपूर्णेखंडेवादर्शे
श्रौताग्नौपृथगेवपितृयज्ञ: कार्योनतुदर्शश्राद्धव्यतिषंगेणेतिविस्तरभीतेर्विराम:
(सम्पूर्णदर्शेचविशेषमाहलौगाक्षि: ) पक्षांतंकर्म्मनिर्वर्त्यवैश्वदेवंचसाग्निक: ॥
पिण्डयज्ञंतत:कुर्यात्ततोन्वाहार्यकंबुधइति ॥ पक्षांतंकर्मान्वाधानम । अन्वा
हार्यकंदर्शश्राद्धम।अयमेवसाग्नेर्जीवत्पितृकस्यपिण्डपितृयज्ञकालोज्ञेय: । त
स्यापिकात्यायनेनहोमांतमनारम्भोवेत्याम्नानात ( पिण्डपितृयज्ञाकरणेप्रा

यश्चित्तमाहपराशरमाधवीयेकात्यायनः ) पितृयज्ञात्ययेचैववैश्वदेवात्यये
ऽपिच । भोजनेपतितान्नस्यचरुर्वैश्वानरोभवेदित्यलम् (प्रकृतमनुसरामः) निरग्नि
कादिभिस्त्वमावास्यापराह्णव्याप्त्यभावेतुकुतुपकालव्यापिनीग्राह्या । भूत
विद्धाप्यमावास्याप्रतिपन्मिश्रितापिवा ॥ पित्र्येकर्मणिविद्वद्भिर्ग्राह्याकुतुप
कालिकीतिहारीतोक्तेःइदंचानिरग्निकादिविषयम् । सिनीवालीद्विजैःकार्या
साग्निकैःपितृकर्मणिस्त्रीभिःशूद्रैःकुहूःकार्यातथाचानग्निकैर्द्विजैरितिलौगा
क्षिवचनात्अत्रसाग्निरौपासनाग्निरपीतिमदनपारिजातेउक्तम् । कुतपश्चा
पराह्णव्याप्त्यलाभेतुकल्पः । अपराह्णद्वयव्यापीयदिदर्शस्तिथिक्षये ॥
आहिताग्नेःसिनीवालीनिरग्न्यादेःकुहूर्मतेतिजाबालिनाभावेविधानात् ॥ तेन
साग्नीनांनिरग्नीनांवापराह्णव्यापिन्येवमुख्या ॥ तिथिसाम्यवृद्धिक्षयैःसम
व्याप्तौखर्वादिनानिर्णयः । वैषम्येधिकादिनद्वयेपराह्णस्पर्शेकुतुपव्यापिनीति
माधवः । इदमेवयुक्तम् । हेमाद्र्यादिमतेकुतुपव्यापिन्येवनिरग्न्यादेर्मुख्या ।
अत्रसाग्निरौपासनाग्निरपीतिमदनपारिजातेउक्तम् । सिनीवालीदृष्टचन्द्रा
( तथा च व्यासः ) दृष्टचंद्रासिनीवालीनष्टचंद्राकुहूःस्मृतेति ॥ पूर्वदिनेपरदिन
एववातद्व्याप्तित्वेसैवग्राह्या । अंशव्याप्तित्वेवैषम्येधिककालव्यापिनीग्राह्या ।
दिनद्वयेप्रातःसमव्याप्तौतिथिक्षयेपूर्वावृद्धौसाम्येचपरा । तिथिक्षयेसिनीवाली
तिथिवृद्धौकुहूःस्मृता ॥ साम्येपिचकुहूर्ज्ञेयावेदवेदांगवेदिभिरितिप्रचेतोवचनात्
दिनद्वयेसम्पूर्णाकुतपव्याप्तिस्तुतिथिवृद्धावेवभवतीत्यनन्तरवचनात्परैवेति । कुत
पस्त्वह्नोमुहूर्तोविज्ञेयोदशपंचचसर्वदा तत्राष्टमोमुहूर्तोयःसकालःकुतपःस्मृत
इतिमात्स्योक्तेः । तुलादानपितृदेवप्रीत्यर्थोपवासादौतुपराग्राह्येत्यन्यत्रविस्तरः
दर्शेचमासिकवार्षिकादिश्राद्धप्राप्तौकालादर्शेविशेषउक्तः )दर्शस्यचोदकुंभस्य
दर्शमासिकयोरपि ॥ नित्यस्यचाब्दिकस्यापिदर्शमाब्दिकयोरपीत्युक्त्वा ॥
सम्पातेदेवताभेदाच्छ्राद्धयुग्मंसमाचरेत् ॥ निमित्तानियतिश्चात्रपूर्वानुष्ठानका
रणमिति ( अत्रक्रमोनिर्णयदीपेउक्तः ) नष्टचन्द्रेयदाकालेक्षयाहर्दिवसोभवे
त् ॥ वैश्वदेवंक्षयश्राद्धंकुर्यात्प्राग्दर्शकर्मणः ॥ अमाश्राद्धंचानुपनीतोपिकुर्यात्

( श्राद्धशूलपाणौ) अमावास्याष्टकाकृष्णपक्षपंचदशीषुचेत्युपक्रम्य। एतच्चानु पनीतोपिकुर्यात्सर्वेषुपर्वसु ॥ श्राद्धंसाधारणंनामसर्वकामफलप्रदम् ॥ भार्या विरहितोप्येतत्प्रवासस्थोपिनित्यशः शूद्रोप्यमन्त्रवत्कुर्यादनेनविधिनाबुध इतिमात्स्योक्तेः ( अमाश्राद्धातिक्रमेप्रायश्चित्तमुक्तमृग्विधाने ) न्युप्तवाचं जपेन्मंत्रंशतवारंदिनेदिने ॥ अमाश्राद्धंयदानस्यात्तदासम्पूर्णमेतितत् ॥ अत्रपूर्वो क्तसाग्निकपदेनाहिताग्निःस्मार्ताग्निमांश्चगृह्यते । विच्छिन्नाग्निकादिश्च निरग्निकः ( तथाचहेमाद्रिरग्नौकरणप्रकरणे ) साग्निरग्नावनग्निस्तुद्विज पाणावथाप्सुवा ॥ कुर्यादग्नौक्रियांनित्यंलौकिकेनेतिनिश्चितमितिस्मृति वाक्यमुदाहृत्ययस्त्वस्वीकृतौपासन तथासमुच्छिन्नाग्निस्तयाभार्याविधुरतयावा ग्निरहितस्तस्यद्विजपाणौजलादौहोमइतिव्याचचक्षे (मदनपारिजातेप्येवम्) इ दमेवसाग्निकानग्निकस्वरूपंसर्वत्रज्ञेयम् (अथग्रहणंनिर्णीयते) तत्रचंद्रग्रहणे यस्मिन्यामेग्रहणंतस्मात्पूर्वंप्रहरत्रयंनभुंजीत। सूर्यग्रहेतुप्रहरचतुष्टयेनभुंजीत। सूर्यग्रहेतुनाश्नीयात्पूर्वंयामचतुष्टयम् ॥ चन्द्रग्रहेतुयामांस्त्रीन्बालवृद्धातुरैर्विने ति (माधवीयेवृद्धगौतमोक्तेः) ग्रहणंतुभवेदिंदोःप्रथमादधियामतः ॥ भुंजीता वर्तनात्पूर्वंप्रथमेप्रथमादधइतिमार्कंडेयोक्तेश्च ॥ अधिऊर्ध्वंनुनुचंद्रग्रहेयामच तुष्टयनिषेधउचितोनतुसूर्यग्रहेसूर्योदयात्प्राक्भोजनाप्राप्तेः। मैवंवचनस्य। प्रथ मयामे*सूर्यग्रहेसतिपूर्वेद्युःपूर्वरात्रेभोजननिषेधपरत्वात् ( चंद्रग्रहेविशेषमाहमा धवीयेवृद्धवसिष्ठः) ग्रस्तोदयेविधोःपूर्वंनाहर्भोजनमाचरेदिति ( द्वयोर्ग्रस्तास्ते तुमाधवीयेव्यासः)अमुक्तयोरस्तगयोरद्यादृष्ट्वापरेऽह्नि+नीति (विष्णुधर्मेपि)अ होरात्रंनभोक्तव्यंचंद्रसूर्यग्रहोयदा ॥ मुक्तिंदृष्ट्वातुभोक्तव्यंस्नानंकृत्वाततःपरं ॥ अहोरात्रनिषेधः (सूर्यग्रस्तास्तेमदनरत्नेगार्ग्यः)संध्याकालेयदाराहुर्ग्रसतेशशि

---

* यामत्रयंचग्रहणयामावधिकंतथावचनंग्रहणंत्वितिप्रथमयामतोऽधिऊर्ध्वंद्वितीयप्रहरे ॥ प्रथमेरा त्रियामेचेत्प्रथमादधःप्रथमयाममध्येइत्यर्थः। एवंसूर्यग्रहेपीतिकालतत्त्वं ॥ + स्नात्वेतिशेषः। एवंच ग्रस्तेमुक्तिस्नानमीपपरेद्युरवेब्रह्मांडे। नाश्नीयादथतत्काले ग्रस्तयोश्चंद्रसूर्ययोःमुक्तयोश्चकृतस्नानःप श्चाद्भुञ्ज्यात्स्ववेश्मनीति। स्ववेश्मनीतिपरान्ननिषेधः

भास्करौ ॥ तदहेनैवभुंजीतरात्रावपिकदाचन ॥ सायंसंध्यायांसूर्यग्रस्तास्तेपू
र्वेह्निरात्रौचनभोक्तव्यम् । प्रातःसंध्यायांचंद्रस्यग्रस्तास्तेपूर्वरात्रावुत्तरेह्निचन
भोक्तव्यमित्यर्थः । चंद्रग्रस्तास्तेउत्तरदिनेसंध्याहोमादौनदोषः (तदाहोशनाः)
ग्रस्तेचास्तंगतेत्विंदौज्ञात्वामुक्त्यवधारणम् ॥ स्नानहोमादिकंकार्यंभुंजीतेंदूदये
पुनः ॥ एतदनाहिताग्निविषयम् । अपराह्णेव्रतोपायनीयमश्नीतेतिकात्याय
नोक्तेव्रतस्यश्रौतत्वेनविहितत्वेनचप्रबलत्वात् ( अह्निव्रतंकुर्यादितिनिर्णयदी
पः ) रागप्राप्तभोजनेकालनियमोयम् । तेनज्वरादाविवनभोजनमितिकंकानुसा
रिणः । बालवृद्धातुराणांतुग्रहयामात्पूर्वमेकयामोनिषिद्धः । सायाह्नेग्रहणंचे
त्स्यादपराह्णेनभोजनम् ॥ अपराह्णेनमध्याह्नेमध्याह्नेनतुसंगवे ॥ भुंजीतसंग
वेचेत्स्यान्नपूर्वंभोजनक्रियेतिमार्कंडेयोक्तेः । इदंचबालादिविषयम् । बालवृ
द्धातुरैर्विनेतिपूर्वोक्तेः । वेधकालेग्रहणेवापक्वमन्नंत्याज्यम् । सर्वेषामेववर्णानां
सूतकंराहुदर्शने ॥ स्नात्वाकर्माणिकुर्वीतशृतमन्नंविवर्जयेदिति ॥ हेमाद्रौषट्
त्रिंशन्मतात्शुतमितितदंतरितस्योपलक्षणम् । नवश्राद्धेसूर्याच्छष्टंग्रहपर्युषितं
चयदितिमिताक्षरायांवचनात्(भार्गवार्चनदीपिकायांज्योतिर्निबंधेमेधातिथिः)
आरनालंपयस्तक्रंदधिस्नेहाज्यपाचितम् । मणिकस्थोदकंचैवनदुष्येद्राहुसूतके
(मन्वर्थमुक्तावल्याम्)अन्नंपक्वमिहत्याज्यंस्नानंसवसनंग्रहे॥ वारितक्रारनालादि
तिलदर्भैर्नदुष्यति(जलेत्वदोषोगांगविषयः)ग्रहोषितंजलंपीत्वापादकृच्छ्रंसमा
चरेदिति(तत्रैवचतुर्विंशतिमतेऽन्यजलस्यदोषोक्तेः । वेधकालेग्रहणेवाभोज
नेप्रायश्चित्तमुक्तम् ( माधवीयेकात्यायनेन ) चंद्रसूर्यग्रहेभुक्त्वाप्राजापत्येनशु
द्ध्यति ॥ तस्मिन्नेवदिनेभुक्त्वात्रिरात्रेणैवशुद्ध्यतीति । ग्रहणेचत्रिरात्रमेकरात्रं
वोपवासःश्रेयोर्थिनाकार्यः । एकरात्रमुपोष्यैवस्नात्वादत्त्वाचशक्तितः ॥ कंचु
कादिवसर्पस्यनिवृत्तिःपापकोशतः ॥ त्रिरात्रंसमुपोष्यैवग्रहणेचंद्रसूर्ययोः ॥
स्नात्वादत्त्वाचविधिवन्मोदतेब्रह्मणासहेतिहेमाद्रौलैंगोक्तेः(इदंचपुत्र्यतिरिक्त
विषयम् ) आदित्येहनिसंक्रांतौग्रहणेचंद्रसूर्ययोः ॥ पारणंचोपवासंचनकुर्या
त्पुत्रवान्गृहीतिजैमिनिवचनात् । यदातुरवेर्ग्रस्तस्तदापूर्णिमाःप्रहरद्वयंहित्वावा

लादिवद्भोजनंनतूपवासः। सायाह्ने±ग्रहणंचेत्स्यादितिपूर्वोक्तमार्कंडेयवचनात् सायाह्नेसंगवेश्नीयाच्छारदेसंगवादधः॥ मध्याह्नेपरतोश्नीयान्नोपवासोरविग्रहइतिस्मृतेश्चेतिहेमाद्रिः। शारदोऽपराह्णः। माधवमतेतुपुत्रिणोपितत्रोपवासएव। अहोरात्रंनभोक्तव्यमितिपूर्वोक्तनिषेधस्यतेनापिपालनीयत्वात्। उपवासनिषेधस्तुव्रतरूपोपवासपरः। कृष्णैकादश्यांनिषेधवदिति (मदनरत्नेप्येवम् इदमेवचयुक्तमवर्धमानस्तु)अहोरात्रंनभोक्तव्यमितिशातातपीयोक्तेः। सूर्याचंद्रमसौलोकानक्षयान्यातिमानवइतिफलश्रुतेर्मुक्त्यदर्शनेउपवासःकाम्यः। नत्वयंनिषेधइत्याह। तन्न। अत्रव्रतत्वेपिप्रागुक्तविष्णुधर्मे निषेधावप्रसंगभावात् (तथाचव्यासः) रविग्रहःसूर्यवारे सोमेसोमग्रहस्तथा॥ चूडामणिरितिख्यातस्तत्रदत्तमनंतकम्॥ वारेष्वन्येषुयत्पुण्यंग्रहणेचंद्रसूर्ययोः। तत्पुण्यंकोटिगुणितंयोगेचूडामणौस्मृतम्॥ अत्रचाद्यंतयोःस्नानंकुर्यात्। ग्रस्यमानेभवेत्स्नानंग्रस्तेहोमोविधीयते॥ मुच्यमानेभवेद्दानंमुक्तेस्नानंविधीयतइतिहेमाद्रौवचनात्। स्नानंस्यादुपरागादौमध्येहोमःसुरार्चनमितिब्रह्मवैवर्ताच्च। सर्वेषामेववर्णानां सूतकंराहुदर्शने॥ सचैलंतुभवेत्स्नानंसूतकान्नंचवर्जयेदितिवृद्धवशिष्ठोक्तेश्च (सचैलंमुक्तिस्नानपरमितिमदनरत्नेउक्तम्) भार्गवार्चनदीपिकायांचतुर्विंशतिमते) मुक्तौयस्तुनकुर्वीतस्नानंग्रहणसूतके॥ ससूतकीभवेत्तावद्यावत्स्यादपरोग्रहः (इदंचस्नानममंत्रकंकार्यमितिस्मृतिरत्नावल्याम् तत्रतीर्थविशेषोभारते) गंगास्नानंनकुर्वीतग्रहणेचन्द्रसूर्ययोः॥ महानदीषुचान्यासुस्नानंकुर्याद्यथाविधि॥ महानदीष्वपिमासविशेषेकाश्चिच्छ्रेष्ठाः। प्रयागेदेविकायांवासन्निहत्यांचवाराणसीम्॥ सरस्वतीचन्द्रभागाकौशिकीतापिकातथा॥ सिंधुर्गंडकिकाचैवशरयूःकार्तिकादितःमूलंहेमाद्रौस्पष्टम् (व्यासः) इंदोर्लक्षगुणंपुण्यंरवेर्दशगुणंततः॥ गंगातोयेतुसंप्राप्तेइन्दोःकोटीरवेर्दश॥ गवांकोटिसहस्रस्ययत्फलंलभतेनरः॥ तत्फलंलभतेमर्त्योग्रहणेचन्द्रसूर्ययोः (असं

---

+मार्कंडेयेभागैकवर्जनंसायाह्नइत्यत्रतुभागद्वयवर्जनमुक्तं॥ तत्रबालादीनांभागद्वयवर्जनंमुख्यं॥ एकभागवर्जनंत्वनुकल्पइति॥

भवेत्तु माधवीये ग्रंथः ) वापीकूपतडागेषु गिरिप्रस्रवणेषु च ॥ नद्यां नदे देवखाते सरसीषूद्धृतांबुनि ॥ उष्णोदके नवा स्नायाद्ग्रहणे चन्द्रसूर्ययोः ( अत्र तारतम्य माह मार्कंडेयः ) शीतमुष्णोदकात्पुण्यमपारक्यं परोदकात् ॥ भूमिष्ठमुद्धृतात् पुण्यं ततः प्रस्रवणोदकम् ॥ ततोऽपि सारसं पुण्यं ततः पुण्यं नदीजलम् ॥ तीर्थतोयं ततः पुण्यं महानद्यंबु पावनम् ॥ ततस्ततोऽपि गंगांबु पुण्यं पुण्यस्ततोंबुधिरिति ॥ उष्णोदकमातुरविषयम् (तथा) गोदावरी महापुण्या चन्द्रे राहुसमन्विते ॥ सूर्ये च राहुणा ग्रस्ते तमोभूते महामुने ॥ नर्मदातोयसंस्पर्शात्कृतकृत्या भवंतीह (पृथ्वीचन्द्रोदये प्रभासखंडे ) गावो नागास्तिला धान्यं रत्नानि कनकं मही ॥ संप्रदाय कुरुक्षेत्रे य त्फलं लभते नरः ॥ तदिंदुग्रहणे भीष्मैः स्नानानाद्भवति षड्गुणम् ( तत्रैव सौरपुराणेंबु धिस्नानमुपक्रम्य) दानानि यानि लोकेषु विख्यातानि मनीषिभिः ॥ तेषां फलमवाप्नोति ग्रहणे चन्द्रसूर्ययोः ( देवीपुराणे ) गंगाकनखलं पुण्यं प्रयागः पुष्करं तथा ॥ कुरुक्षेत्रं महापुण्यं राहुग्रस्ते दिवाकरे ॥ स्नानासंभवे स्मरणं वा कार्यम् ॥ स्मृत्वा शतक्रतुफलं दृष्ट्वा सर्वाघनाशनम् ॥ स्पृष्ट्वा गोमेधपुण्यं तु पीत्वा सौत्रामणी लभेत् ॥ स्नात्वा वाजिमखं पुण्यं प्राप्नुयादविचारतः ॥ रविचंद्रोपरागे च अयने चोत्तरे तथेति मार्कंडेयोक्तेः (अत्र श्राद्ध*माह कात्यायनः ) चंद्रसूर्यग्रहे यस्तु श्राद्धं विधिवदाचरेत् ॥ तेनैव सकला पृथ्वी दत्ता विप्रस्य वै करे (भारते) स#र्वस्वेनापि कर्तव्यं श्राद्धं वै राहुदर्शने ॥ अकुर्वाणस्तु नास्तिक्यात्पंके गौरिव सीदति ( विष्णुः ) राहुदर्शनदत्तं हि श्राद्धमाचन्द्रतारकम् ॥ इदं चामान्नेन हेम्ना वा कार्यं नत्वन्नेन । आपद्यनग्नौ तीर्थे च चंद्रसूर्यग्रहे तथा ॥ आमश्राद्धं प्रकुर्वीत हेमश्राद्धमथापि वेति ( शातातपोक्तेरिति हेमाद्रिमाधवादयः । अपरार्कस्तु) एतद्द्विजातीनां पाकाभावे द्रष्टव्यं तीर्थश्राद्धवत् । पाकाभावे द्विजातीनामामश्राद्धं विधीयते ॥ इति सुमंतूक्तेः । सैंहिकेयो यदा सूर्यं ग्रसते पर्वसंधिषु ॥ गजच्छाया तु सा प्रोक्ता तस्यां श्राद्धं प्रकल्पयेत्

* त्रिदशाः स्पर्शसमये तृप्यंति पितरस्तथा ॥ मनुष्या मध्यकाले तु मोक्षकाले तु राक्षसा इति वृद्धवशिष्ठोक्तेः स्पर्शकाले कार्यमिति मयूखे ॥ # यदि संक्षेपेणापि सामग्र्या संपादने सर्वस्वव्ययो भवति दरिद्रस्य तेनापीत्यर्थः ॥

घृतेनभोजयेद्विप्रान्घृतंभूमौसमुत्सृजेदिति ( वायवीयोक्तेश्चेत्याह । विज्ञाने श्वरोप्याह) ग्रहणश्राद्धेभोक्तुर्दोषोदातुस्त्वभ्युदयइति । सूतकेमृतकेभुक्तेगृही तेशशिभास्करे॥ छायायांहस्तिनश्चैवनभूयःपुरुषोभवेदित्यापस्तंबनभोजननि षेधाच । अयंचनिषेधःश्राद्धभोक्तुर्हस्तिच्छायासाहचर्यात् । अत्रग्रहणनिमित्त कश्राद्धेनैवामासंक्रांत्यादिनैमित्तिकानांसिद्धिः । दार्शिकालभ्ययोरपीतिका लादर्शोक्तेः । अत्राशौचमध्येपिस्नानश्राद्धादिकार्यमेव । सूतकेमृतकेचैवनदो षोराहुदर्शने ॥ तावदेवभवेच्छुद्धिर्यावन्मुक्तिर्नदृश्यते ॥ इतिमाधवीयेवृद्धवशि ष्ठोक्तेः । स्मार्तकर्मपरित्यागोराहोरन्यत्रसूतकइतिव्याघ्रपादोक्तेश्च (का लादर्शेअंगिराः) सर्ववर्णाःसूतकेपिमृतकेराहुदर्शने॥स्नात्वाश्राद्धंप्रकुर्वीरन्दानं शाठ्यविवर्जितम् (मदनपारिजातेप्येवम्) तेनस्नानमात्रंप्रकुर्वीतदानश्राद्धविव र्जितमितिनिर्मूलंवदंतोगौडाःपरास्ताः । इयंचशुद्धिरविशेषान्मंत्रदीक्षापुरश्च रणादिसर्वस्मार्तकर्मविषया । मदनरत्नेप्येवम् । रजस्वलायास्तुभार्गवार्चनदी पिकायाम् (सूर्योदयनिबन्धे) नसूतकादिदोषोस्तिग्रहेहोमजपादिषु ॥ ग्रस्ते स्नायादुदक्यापितीर्थादुद्धृतवारिणेति ॥ अत्रच स्नानेनैमित्तिकेप्राप्तेनारीयदि रजस्वला ॥ पात्रांतरिततोयेनस्नानंकृत्वाव्रतंचरेदित्यादिमिताक्षरोक्तोविधिर्ज्ञे यः(तथाग्रहणेरात्रावपिश्राद्धादिकार्यम्)ग्रहणोद्वाहसंक्रांतियात्रार्तिप्रसवेषुच॥ दानंनैमित्तिकंज्ञेयंरात्रावपितदिष्यतइत्यपरार्केव्यासोक्तेः चंद्रग्रहेतथारात्रौस्ना नंदानंप्रशस्यतइतिदेवलोक्तेश्च । यदातुज्योतिःशास्त्रगम्योदिनेचंद्रग्रहोरात्रौ चसूर्यग्रहस्तदास्नानादिनकार्यम् । सूर्यग्रहोयदारात्रौदिवाचंद्रग्रहस्तथा ॥ त त्रस्नानंनकुर्वीतदद्याद्दानंनचक्वचिदिति ॥ षट्त्रिंशन्मतात्(ग्रहणादिनेवार्षिकश्रा द्धप्राप्तौतुप्रयोगपारिजातेगोभिलः)दर्शेरविग्रहेपित्रोःप्रत्याब्दिकमुपस्थितम् ॥ अन्नेनासंभवेहेम्नाकुर्यादामेनवासुतइति ॥ अत्रदर्शरविपितृसुतशब्दाःप्रदर्शना र्थाः । न्यायसाम्यात् । तेनचंद्रग्रहेपिसपिंडादिवार्षिकमन्नादिनार्तोहेनवकार्य मिति (मदनपारिजातेव्याख्यातम् पृथ्वीचंद्रोदयेप्येवम् । तेनयानि) आमश्राद्धं प्रकुर्वीतमासंवत्सरादृतइति । अन्नेनैवाब्दिकंकुर्याद्धेम्नावामेनक्वचिदिति

(मरीचिलौगाक्ष्यादिवचनानितानिग्रहणादिनातिरिक्तविषयाणियानितु) ग्रह
णात्तुद्वितीयेऽह्निरजोदोषात्तुपंचमे(तथा)ग्रस्तोदयेयदाचंद्रेप्रत्यब्दसमुपस्थितम
तुद्दिनेचोपवासःस्यात्प्रत्यब्दंतुपरेहनि॥तथाग्रस्तावेवास्तमानंतुरवींदूप्राप्नुतोय
दि॥ प्रत्यब्दंतुतदाकार्यंपरेहन्येवसर्वदा॥ चंद्रसूर्योपरागेचतथाश्राद्धंपरेहनीत्या
दीनिवचनानि। तानिमहानिबंधेष्वुक्ताप्यनुलंभान्निर्मूलानि। प्रत्युक्तपूर्वोक्तनि
बंधेषुतद्दिनएवश्राद्धमुक्तमित्यलम्। ग्रहणादिसप्तदिनपर्यंतंरामगोपालाद्यागम
दीक्षोक्ता* (शिवार्चनचंद्रिकायांज्ञानार्णवे) मंत्राद्यारंभणंकुर्याद्ग्रहणे चंद्रसूर्य
योः॥ग्रहणाद्दापिदेवेशिकालःसप्तदिनावधीति (रत्नसागरे) सत्तीर्थेऽर्कविधु
ग्रासेतंतुदामनपर्वणि॥ मंत्रदीक्षांप्रकुर्वाणोमासर्क्षादीन्नशोधयेत् (अत्रसूर्यग्र
हणमेवमुख्यम्) सूर्यग्रहणकालेतुनान्यदन्वेषितंभवेत्॥ सूर्यग्रहणकालेनस
मोनान्यःकदाचन॥ नमासतिथिवारादिशोधनंसूर्यपर्वणीति॥ तत्रैवकालो
त्तरवचनात्। *चंद्रग्रहेतुयादीक्षायादीक्षाव्रतचारिणाम्॥ वनस्थस्यचयादीक्षा
दारिद्र्यंसप्तजंमस्विति तत्रैवयोगिनीतंत्रेनिषेधाच्च।ग्रहणंजन्मराश्यादौनिषिद्धम्
(तदुक्तंज्योतिषे)त्रिषट्दशायोपगतंनराणांशुभप्रदंस्याद्ग्रहणंरवींद्वोः॥ द्विसप्त
नंदेषुचमध्यमंस्याच्छेषेष्वनिष्टंकथितंमुनींद्रैरिति॥ आयएकादश। नंदानव।
इषुःपंच(मदनरत्नेगर्गः)जन्मसप्ताष्टरिःफांकदशमस्थेनिशाकरे॥ दृष्टोरिष्टप्र
दोराहुर्जन्मर्क्षेनिधनेपिच॥ रिःफंद्वादशम्। अंकानव। निधनंसप्तमतारा
(पृथ्वीचंद्रोदयेविष्णुधर्मे) यन्नक्षत्रगतोराहुर्ग्रसतेशशिभास्करौ॥ तज्जातानां
भवेत्पीडायेनराःशांतिवर्जिताः (तत्रैवपुराणांतरे) सूर्यस्यसंक्रमोवापिग्रहणंचं
द्रसूर्ययोः॥ यस्यत्रिजन्मनक्षत्रेतस्यरोगोथवामृतिः॥ तस्यदानंचहोमंचदेवार्च
नंजपोतथा॥ उपरागाभिषेकंचकुर्याच्छांतिर्भविष्यति॥ स्वर्णेनवाथपिष्टेनकृ
त्वासर्पस्यचाकृतिं॥ ब्राह्मणायददेत्तस्यनरोगादिभ्रवचतत्कृतः॥ जन्मनक्षत्रंतत्
पूर्वोत्तरेचत्रिजन्मनक्षत्रमित्युच्यते। जन्मदशमैकोनविंशतितारा इतिकेचित्।
सर्पस्यतदाकारस्यराहोरित्यर्थः (अद्भुतसागरेभार्गवः) यस्यराज्ञस्यनक्षत्रेस्व

* सूर्यग्रहदीक्षायाःप्राशस्त्यपरमिदं अन्यथाज्ञानार्णवधृतचन्द्रपदवैयर्थ्यापत्तात्॥

हिधानाच्च। तेनेयंपूर्वविद्धा। श्रावणीदुर्गनवमीदूर्वाचैवहुताशनी॥ पूर्वविद्धैवक र्त्तव्याशिवरात्रिर्बलेर्दिनमितिब्रह्मवैवर्तात्‌ २ दिनद्वयेप्रदोषव्याप्तौपरैव पूर्वदिनेभद्रासत्त्वात्तत्रचहोलिकानिषेधात्‌ (तदुक्तंनिर्णयामृतेमदनरत्नेचपुराण समुच्चये) भद्रायांदीपिताहोलीराष्ट्रभंगंकरोतिवैनगरस्यचनैवेष्टातस्मात्तांपरिव र्जयेत्‌(तथा) भद्रायांद्वेनकर्त्तव्येश्रावणीफाल्गुनीतथा॥ श्रावणीनृपतिंहंतिग्रामं दहतिफाल्गुनी(तथा) दिनार्धात्परतोपिस्यात्फाल्गुनीपौर्णिमायदि॥रात्रौभद्रा वसानेतुहोलिकादीप्यतेतदेति॥ यदातुपूर्वदिनेचतुर्दशीप्रदोषव्यापिनीपरदिने चक्षयवशात्सायाह्नात्प्रागेवपूर्णिमासमाप्यतेतदा पूर्वदिनसंपूर्णरात्रौभद्रासत्त्वा त्तत्रचतन्निषेधात्परेऽह्निप्रतिपद्येवकुर्यात्‌। सार्धयामत्रयंवास्यात्द्वितीयदिवसे यदा॥ प्रतिपद्वर्धमानातुतदासाहोलिकास्मृतेतिभविष्यवचनादितिनिर्णयामृत कारः(मदनरत्नेप्येवम्‌) यत्तु। वह्नौवह्निं परित्यजेदितिभविष्यम्‌। वह्नौहोलि कायांवह्निं प्रतिपदंवर्जयेदित्यर्थः तदुक्तंभिन्नविषयमितितत्रैवोक्तम्‌। अन्येतुत स्यांभद्रामुखंत्यक्त्वेत्यर्थः। प्रदोषव्यापिनीचेत्स्याद्यदापूर्वदिनेतदाभद्रामुखंवर्ज यित्वाहोलिकायाःप्रदीपनमितिनारदवचनात्‌। निशागमेप्रपूज्येतहोलिकास र्वदाबुधैः॥ नदिवापूजयेत्ढुंढां पूजितादुःखदाभवेदितिदिवोदासीयेवचनात्‌। यामत्रयोर्ध्वयुक्ताचेत्प्रतिपत्तुभवेत्तिथिः॥ भद्रामुखंपरित्यज्यकार्याहोलीमनी षिभिरितिविद्याविनोदेऽभिधानाच्च॥ भद्रामुखंविहायपूर्वदिनएवकार्येत्याहुः। भद्रामुखंतुनाड्यस्तुपंचवदनंगलकस्तथैकेतिरत्नमालोक्तंज्ञेयम्‌ (शिष्टाचारो ऽप्येवमेव) अत्रचेच्चंद्रग्रहणंतदाततोर्वाङ्‌निशिभद्रावर्ज्यपौर्णमास्यांहोलिकादी पनम्‌। अथपरेऽह्निग्रस्तोदयस्तदापूर्वदिनेभद्रावर्ज्यरात्रौचतुर्थयामेविष्टिपुच्छेवा होलिकाकार्या। ग्रहोत्तरंप्रतिपत्सत्त्वात्तत्पूर्वंचदिवाहोलानिषेधादिति। दिवो दासचंद्रप्रकाशेवस्तुतस्तु। परदिनेप्रदोषेपौर्णमासीसत्त्वेकर्मकालस्पर्शेचतुर्थ यामादिगौणकालग्रहणमानाभावाद्भद्राभावाच्चग्रहणकालएवहोलाकार्या। न चसर्वेषामेववर्णानांसूतकंराहुदर्शने॥ स्नात्वाकर्माणिकुर्वीतशृतमन्नंविवर्जयेदि तिनिषेधात्‌। कथंसूतकेहोलेतिवाच्यम्‌। तस्योत्तरार्धशेषत्वात्‌(पूजामंत्रस्तु)अ

मृक्याभयसंत्रस्तैःकृतात्वंहोलिबालिशैः॥ अतस्त्वांपूजयिष्यामिभूतेभूतिप्रदाभवेति॥ यत्तुवार्तिककारैर्होलिकाआचारप्राप्तेत्युक्तम्। तन्नहेमाद्याद्युदाहृतभविष्यवचनान्यासिद्धानिकृत्वाचिंताज्ञेया। आर्त्याधिकारणवत्। हुताशिनीमलमासेनभवति॥ इयंमन्वादिरपि। सातुपौर्वाह्णिकीग्राह्या। मलमासेसतिमन्वादिश्राद्धंमासद्वयेकार्यमित्युक्तंप्राक्(कृत्यचिंतामणौब्राह्मे) नरोदोलागतंदृष्ट्वागोविंदंपुरुषोत्तमम्॥ फाल्गुन्यांसंयतोभूत्वागोविंदस्यपुरंव्रजेत्॥ चैत्रकृष्णप्रतिपदिवसंतोत्सवः। साचौदयिकीग्राह्या। प्रवृत्तेमधुमासेतु प्रतिपद्युदितेरवाविति भविष्योक्तेः। दिनद्वयेतथात्वेपूर्वा। वत्सरादौवसंतादौबलिराज्येतथैवच॥पूर्वविद्धैवकर्तव्याप्रतिपत्सर्वदाबुधैरिति॥ वृद्धवशिष्ठवचनात् (अत्रविशेषोहेमाद्रौभविष्ये) चैत्रेमासिमहाबाहोपुण्येतुप्रतिपद्दिने॥ यस्तत्रश्वपचंस्पृष्ट्वास्नानंकुर्यान्नरोत्तमः नतस्यदुरितंकिंचिन्नाधयोव्याधयोनृपेति (तथा) प्रवृत्तेमधुमासेतु प्रतिपद्युदितेरवौ॥ कृत्वाचावश्यकार्याणिसंतर्प्यपितृदेवताः॥ वंदयेद्धोलिकाभूतिंसर्वदुःखोपशांतये (मंत्रश्च) वंदितासिसुरेंद्रेणब्रह्मणाशंकरेणच॥ अतस्त्वंपाहिनोदेविभूतेभूतिप्रदाभवेति (अत्रचूतकुसुम प्राशनमुक्तंतत्रैवपुराणसमुच्चये) वृत्तेतुषारसमयेसितपंचदश्यांप्रातर्वसंतसमयेसमुपस्थितेच। संप्राश्यचूतकुसुमंसहचंदनेनसत्यंहिपार्थपुरुषोथसमाःसुखीस्यात् (मंत्रस्तु) चूतमग्र्यंवसंतस्यमाकंदकुसुमंतव॥ सचंदनंपिबाम्यद्यसर्वकामार्थसिद्धयइति। चैत्रामावास्यामन्वादिः। साचापराह्णव्यापिनीग्राह्या। कृष्णपक्षस्थत्वात् इतिफाल्गुनमासःसमाप्तः। सर्वंनिरूपितमिदंगहनंतुकालतत्त्वंविचार्यवचनैःप्रचनयैश्चसम्यक्॥ तद्दोषदृष्टिमपहायविवेचनीयंविद्वद्भिरत्यविरतंप्रणतोस्मितेषु॥१॥ मयासहासहार्यादिहगादितमंदमतिनाकिमेतच्चक्रंवाध्यवसितुमपिस्वल्पमतिना॥ तदेवंयत्किंचिद्गदितमिह विख्यातमहिमाप्रतापोयंसर्वो विकसतितुपित्रो प्रचरणयोः २॥ योभाट्टतंत्रगहनार्णवकर्णधारःशास्त्रांतरेषुनिखिलेष्वपिमर्मभेत्ता॥ योत्रश्रमःकिलकृतःकमलाकरेणप्रीतोमुनातुहृदतीबुधरामकृष्णः॥

इतिश्रीमन्नारायणभट्टसूरिसूनुरामकृष्णभट्टसुतदिनकरभट्टानुजभट्टकमलाकरकृतेनिर्णयसिंधौसंवत्सरकृत्यनिरूपणंनामद्वितीयपरिच्छेदःसमाप्तः॥

# अथ तृतीयपरिच्छेदः प्रारभ्यते

श्रीगणेशायनमः अथप्रकीर्णकनिर्णयः ॥ श्रीरामकृष्णात्मजतनयःकमलाकरसं ज्ञितः ॥ निरूप्यर्तिथिकृत्यंतुप्रकीर्णंवक्तुमुद्यतः ॥ १ ॥ तत्रादौसंस्कारेषुगर्भा धानम् । तत्रप्रथमरजोदर्शनेदुष्टमासग्रहणसंक्रमादिफलंतच्छांत्यादिर्चपितृकृत भट्टकृतप्रयोगरत्नेज्ञेयम् ॥ किंचिदुच्यते (मदनरत्नेनारदः)*अमारिक्ताष्टमीष ष्ठीद्वादशीप्रतिपत्स्वपि ॥ परिघस्यतुपूर्वार्द्धेव्यतीपातेचवैधृतौ ॥ संध्यासूपप्लवे विष्ट्यामशुभंप्रथमार्त्तवम् । रोगीपतिव्रतादुःखीपुत्रिणीभोगभागिनी ॥ पतिव्र ताक्लेशभागीसूर्यवारादिषुक्रमात् । वैधव्यंसुतलाभश्चमैत्रंशत्रुविवर्द्धनम् ॥ मित्रला भःशत्रुवृद्धिःकुलवृद्धिर्बंधुनाशनम् ॥ मरणंवंशवृद्धिश्चनिराहारःकुलक्षयः ॥ ते जश्चसुतनाशश्चकुलहानिस्तिथिक्रमात् (गर्गः) सुभगाचैवदुःशीलावंध्यापु त्रसमन्विता । धर्मयुक्ताव्रतस्थाचपरसंतानमोदिनी ॥ सुपुत्राचैवदुष्टपुत्रापतिसेवाप्र रतासदा ॥ दीनाप्रजावतीचैवपुत्राढ्याचत्रकारिणी ॥ साध्वीप्रीतिप्रियानित्यंसुपु त्राकष्टचारिणी । स्वकर्मनिरताहिंस्रापुण्यपुत्रादिसंयुता ॥ नित्यंधनचयासक्ता पुत्रधान्यसमन्वितामूर्खाचाज्ञापुण्यवतीदस्रर्क्षादिःक्रमात्फलम् ॥ कुलीरवृषचा पांत्यनृयुक्कन्यातुलाघटा ॥ राशयःशुभदाज्ञेयानारीणांप्रथमार्तवे (गर्गः) सुभगा श्वेतवस्त्रास्यात्दृढवस्त्रापतिव्रता ॥ क्षौमवस्त्राक्षितीशास्यान्नववस्त्रासुखान्विता ॥ दुर्भगाजीर्णवस्त्रास्याद्रोगिणीरक्तवाससा ॥ नीलांबरधरानारीपुष्टपतिविधवात तः ॥ वस्त्रेस्युर्विषमारक्तबिंदवःपुत्रमाप्नुयात् ॥ समाश्चेत्कन्यकाश्चेतिफलंस्या त्प्रथमार्त्तवे ॥ अथस्त्रीसंसर्गवर्जनमाह (वसिष्ठः) प्रभूतदोषेयदिदृश्यतेतत्पु ष्पंतदाशांतिककर्मकार्यम् ॥ विवर्जयेदेवतदैकशय्यांयावद्रजोदर्शनमुत्तमेह्नि ॥ (ज्योतिर्निबंधेवसिष्ठः) आद्यर्तौपौषशुक्राजेमधुशुचिनभस्याः कुयुक्पापवारा

* संमार्जनीकाष्ठतृणादिशूर्पाहस्तेदधानाकुलटातदास्यात् । तल्पोपभोगेनमसिस्थिताचेत्दृष्टंरजोभाग्य वतीतदास्यादितिप्रथमेरजसिसर्वमिदंमितिमयूखे

रिक्तामाकृष्टिभस्थः पितृपरसदनेरात्रिसंध्यापराह्णे॥ मिश्रोग्रामूलतीक्ष्णांविवर मनरुणाल्पाधिकास्नंगराष्ट्रोत्पातःपापस्थलग्नंनसदरुणाजरन्नीलरक्तांबरंच। आद्यर्तौदुर्भगानारीबिठकुंभेचेंद्रजस्वला ॥ वंध्याचैवातिगंडेचशूलेशूलवतीभवेत् ॥ गंडेतुपुंश्चलीनारीव्याघातेचात्मघातिनी । वज्रे चस्वैरिणीप्रोक्तापातेचपतिघातिनी ॥ परिघेमृतवंध्याचवैधृतौपतिमारिणीशेषाः शुभावहायोगायथानामफलप्रदाः ( शांतिमाहप्रयोगपारिजातेशौनकः ) सार्तवानांतुनारीणांशांतिंवक्ष्यामिशौनक ॥ पंचमेह्निचतुर्थेवाग्रहयज्ञपुरःसरम् ॥ द्रोणप्रम[illegible]णधान्येनव्रीहिराशित्रयंभवेत् ॥ कुंभत्रयंन्यसेद्राशौतंतुवस्त्रादिवेष्टितम् ॥ सूक्तेनाथनवर्चेनप्रसुव आदइत्यथ॥ ऋचायाःप्रवतस्तद्वद्गायत्र्याचततःक्रमात् ॥ मध्यकुंभेक्षिपेद्धान्यमौषधानिचहेमच ॥ उदुंबरःकुशोदूर्वाराजीववटबिल्वकाः ॥ विष्णुक्रांताथतुलसी बर्हिर्षशंखपुष्पिका ॥ शतावर्यश्वगंधाचनिर्गुंडीसर्षपद्वयम् ॥ अपामार्गःपलाशश्चपनसोजीवकस्तथा ॥ प्रियंगवश्चगोधूमाव्रीहयोऽश्वत्थसवच ॥ क्षीरंदधिचसर्पिश्चपद्मपत्रंतथोत्पलम् ॥ कुरंटकत्रयंगुंजावचाभद्रकमुस्तकाः ॥ द्वात्रिंशदौषधानीहयथासंभवमाहरेत् मृत्तिकाश्चौषधादीनितन्मंत्रेणक्षिपेत्क्रमात्॥ कुंभोपरिन्यसेत्पात्रंकांस्यंमृद्वेणुताम्रजम् ॥ भुवनेश्वरींन्यसेत्तत्रइंद्राणींचपुरंदरमजपेदुगायत्रिमाहोमाच्छ्रीसूक्तंचजपेत्ततः॥स्पृशन्वैदक्षिणंकुंभंऋत्विगेकोजपेदथ॥ चत्वारिरुद्रसूक्तानिचतुर्मंत्रोत्तराणिच॥ संस्पृशन्नुत्तरंकुंभंश्रीसूक्तंरुद्रसंख्यया॥ सन्नइंद्राग्निसूक्तंचतत्रैवसंस्पृशन्जपेत् ॥ कुंभस्यपश्चिमेदेशेशांतिहोमंसमाचरेत् ॥ दूर्वाभिस्तिलगोधूमैःपायसेनघृतेनच ॥ तिसृभिश्चैवदूर्वाभिरेकैकाचहुतिर्भवेत् ॥ अष्टोत्तरसहस्रंवाशतमष्टोत्तरंतुवा ॥गायत्र्यैवतुहोतव्यंहविरत्रचतुष्टयम् ततःस्विष्टकृतंहुत्वासमुद्रादूर्मिसूक्ततः ॥ संततामाज्यधारांतांपूर्णाहुतिमथाचरेत् अथाऽभिषेकंकुर्वीतप्रतिकुम्भस्थितोदकैः ॥ आपोहिष्ठेतिनवभिःसूक्तेनचततः परम् ॥ इन्द्रोअंगतदृचेनैवपावमानैःक्रमेणतु ॥ उभयंशृणवच्चैनंस्वस्तिदाविशस्पकया ॥ त्र्यंबकेनमंत्रेणजातवेदसएकया (समुद्रज्येष्ठाइत्यादित्रायंतांचत्रिभिःक्रमात्) इमाआपऋयृचेनैवदेवस्यत्वेतिमंत्रतः ॥ मंत्रेणायतमीशानंत्वमग्नेरुद्रइत्य

य ॥ तमुष्टुहीतिमंत्रेणभुवनस्यपितरंतथा ॥ यातेरुद्रेतिमंत्रेणशिवसंकल्पमंत्रतः ॥ इन्द्रस्त्वावृषभंपंचमंत्रैश्चत्वाभिषेचयेत् ॥ धेनुंपयस्विनींदद्यादाचार्यायचभूषणं ॥ सदक्षिणमनड्वाहंप्रदद्याद्रुद्रजापिने ॥ महाशांतिंप्रजप्याथब्राह्मणांभोजयेदथ (नारदः) तत्रशांतिंप्रकुर्वीतघृतदूर्वातिलाक्षतैः ॥ प्रत्येकाष्टशतंचैवगायत्र्याजुहुयात्ततः ॥ स्वर्णगोभूतिलान्दद्यात्सर्वदोषापनुत्तये (प्रकारांतरंमदनरत्नेज्ञेयं)विस्तरान्नोच्यते ॥ ग्रहणोरजोदर्शनेतुजातकर्मप्रस्तावेशांतिंवक्ष्यामः (प्रथमर्तौविशेषःस्मृतिचन्द्रिकायां) प्रथमर्तौतुपुष्टिपरायाःपतिपुत्रवतीःक्रियाः ॥ अक्षतैरासनंकृत्वातस्मिंस्तामुपवेशयेत् ॥ हरिद्रागन्धपुष्पादीन्दद्युस्तांबूलकंस्रजं ॥ दीपैर्नीराजनं कुर्यात्सदीपेवासयेद्गृहे ॥ लवणापूपमुद्गादिदद्यात्ताभ्यःस्वशक्तितइति (द्वितीया * ऋतुमतीनियममाहमदनपारिजातेदक्षः) अंजनाभ्यंजनेस्नानंप्रवासंदंतधावनम् ॥ नकुर्यात्साऽऽर्त्तवानारीग्रहाणामीक्षणंतथा (अत्रिरपि) वर्जयेन्मधुमांसंचपात्रेखर्वेचभोजनं ॥ गंधमाल्यंदिवास्वापंतांबूलंचास्यशोधनं ॥ दर्भेशयावेभुंजीतपेयंचांजलिनापिवेत् (मदनरत्नेहारीतः) रजःप्रादुर्भावेदधःशयीतभूमौकार्ष्णायसेपाणौमृन्मयेवाश्नीयात्इति (विष्णुधर्मे) आहारंगोरसानांचपुष्पालंकारधारणम् ॥ अंजनंकंकतंदंताःपीठशय्याधिरोहणम् ॥ अग्निसंस्पर्शनंचैवबर्ज्जयेच्चदिनत्रयं ॥ तथाप्रथमर्तौःपूर्वंस्त्रीगमनंनकार्यं प्राग्रजोदर्शनात्पत्नींनेयाद्गत्वापतत्यधः ॥ व्यर्थीकारेणशुक्रस्यब्रह्महत्यामवाप्नुयादितितत्रैवाश्वलायनोक्तेः (तत्रऋतौगमनमाहयाज्ञवल्क्यः) षोडशर्त्तुनिशा स्त्रीणांतास्मिन्युग्मासुसंविशेदिति ॥ (अनृतावप्याहगौतमः) ऋतावुपेयात्सर्वत्रवाप्रतिषिद्धमिति ॥ (मनुः) ऋतुःस्वाभाविकःस्त्रीणांरात्रयःषोडशस्मृताः ॥ तासामाद्याश्चतस्रस्तुनिंदितैकादशीतुया ॥ त्रयोदशीचशेषास्युःप्रशस्तादशरात्रयः (मदनरत्नेदेवलः) तस्मात्त्रिरात्रंचांडालींपुष्टिपतांपरिवर्जयेत् ॥ (तत्रतिथ्यादीनाहश्रीधरः)षष्ठ्यष्टमींपंचदशींचतुर्थीं चतुर्दशीमप्युभयत्रहित्वा ॥ शेषाःशुभाः

*स्त्रीधर्मिणीत्रिरात्रंतुस्वमुखंनैवदर्शयेत् ॥ स्ववाक्यंश्रावयेन्नापियावत्स्नानान्नशुद्ध्यति ॥ सुस्नाताभर्तृवदनमीक्षेन्नान्यस्यकस्यचित् ॥ अथवामनसिध्यात्वापतिंभानुंविलोकयेदितियाज्ञवल्क्योपि ॥

स्युस्तिथयोनिषेकेवाराःशशांकार्कसितेंदुजानां ॥ उभयत्रपक्षद्वये (आर्योगुरुः) सितःशुक्रःइंदुजोबुधः ॥ विष्णुप्रजेशरविमित्रसमीरपौष्णमूलोत्तरावरुणभानि निषेककार्ये ॥ पूज्यानिपुष्यवसुशीतकराश्विचित्रादित्याश्चमध्यमफलाविफलाःस्युरन्ये (विष्णवादिदैवत्यनक्षत्राणयुपक्रांतानिरत्नमालायां) भेशादस्त्रयमाग्निधातृशशिनःशर्वादितिर्वाक्पतिः ॥ कद्रूजाःपितरोभगोर्यमरवित्वष्टाह्वयामारुतः ॥ शक्राग्नीत्वथमित्रइंद्रनिर्ऋतीतोयंचविश्वेविधिर्गोविंदोवसवोंबुपाजचरणाहिर्बुध्न्यपूषाभिधाः ॥ उत्तराशब्देनोत्तरात्रयं॥ अत्रमलस्यपूज्यत्वमुक्तम्॥ (याज्ञवल्क्येनतु) सर्वंगच्छन्त्स्त्रियंक्षाम±मांसघांमूलंचवर्जयेदित्युक्तं ॥ तेनपर्वत्रमूलंचिंत्यं ॥ अत्रसमासुपुत्राविषमासुकन्येतिज्ञेयंयुग्मा*सुपुत्राजायंतेस्त्रियोयुग्मासुरात्रिष्विविति(हेमाद्रौशंखोक्तेः) तत्राप्युत्तरोत्तराःप्रशस्ताःतदाहापस्तंबः ॥ (तत्राप्युत्तराप्रशस्तेतितत्रैवव्यासः) रात्रौचतुर्थ्यांपुत्रःस्यादल्पायुर्धनवर्जितः ॥ पंचम्यांपुत्रिणीनारीषष्ठ्यांपुत्रस्तुमध्यमः ॥ सप्तम्यांअप्रजायोषिदष्टम्यामीश्वरःपुमान्॥ नवम्यांशुभगानारीदशम्यांप्रवरःसुतः॥ एकादश्यामधर्मास्त्रीद्वादश्यांपुरुषोत्तमः । त्रयोदश्यांसुतापापावर्णसंकरकारिणी ॥ धर्मज्ञश्चकृतज्ञश्चआत्मवेदीदृढव्रतः॥प्रजापतिश्चचतुर्दश्यांपंचदश्यांपतिव्रता॥ आश्रयःसर्वभूतानांषोडश्यांजायतेपुमानिति(अत्रचतुर्थदिननिषेधेपि)स्नातांचतुर्थेदिवसेरात्रौ गच्छेद्विचक्षणइतिभारतोक्तेः ॥ चतुर्थेहनिस्नातायांयुग्मासुवागर्भसंदधानीतिहारीतोक्तेर्विकल्पोज्ञेयः (तत्रापि) स्नानंरजस्वलायास्तुचतुर्थेहनिशस्यते॥ गम्यानिवृत्तेरजसिनानिवृत्ते कथंचनेत्यापस्तंबोक्तेर्व्यवस्थाज्ञेया (प्रभासखण्डेमरीचिः) शुद्धाभर्तुश्चतुर्थेह्निस्नानेनस्त्रीरजस्वला ॥ दैवेकर्मणिपित्र्येचपंचमेहनिशुद्ध्यति॥औत

---

±क्षामांकृशां ॥ क्षामताचरजस्वलाव्रतजन्याअल्पस्निग्धभोजनादिनावाकार्या ॥ ( तदाहबृहस्पतिः लघ्वाहारांस्त्रियंकुर्यादेवंसंजयनेत्सुतमिति ॥ पुमान्पुंसोधिकेशुक्रेस्त्रीभवत्यधिकेस्त्रियाइतिच १ ॥

*यदायुग्मास्वपिरात्रिषुशोणिताधिक्यंतदास्त्र्येवभवतिपुरुषाकृतिः ॥ अयुग्मास्वपिशुक्राधिक्येपुमानेवस्त्र्याकृतिः ॥ कालस्यनिमित्तत्वात् ॥ शुक्रशोणितयोश्चोपादानकारणत्वेनप्राबल्यात्तस्मात्क्षामाकार्तव्येतिमिताक्षरायां २ ॥

कर्ममध्येरजस्वलाचेत्तत्रचतुर्थदिनेप्यधिकारः ॥ अथयदाचिरात्रिणीस्यादथै नामुपहूयेदित्यापस्तंबसूत्रात् ॥ चतुर्थेहनिगोसूत्रमिश्राभिरद्भिः स्नातावासोयो क्त्रजालानिमंत्रैर्धारयेदितिसोमेप्युक्तं ॥ एवंसर्वत्रश्रौतकर्मणीतिधूर्तस्वामिरा माराडारादयः ॥ अत्रसर्वास्वयुग्मासुगमनमावश्यकंयुग्मास्वितिबहुवचननिर्देशा दितिविज्ञानेश्वरः ॥ तत्रैकस्यांरात्रौसकृदेवकार्यं ॥ सुस्थइन्दौसकृत्पुत्रंलक्षण्यं जनयेत्पुमानितियाज्ञवल्क्योक्तेः ॥ इदंचर्तौगमनमन्यकालेप्रतिबन्धादिनागम नासम्भवेश्राद्धेकादश्यादावपिकार्यं ॥ ब्रह्मचर्येचपर्वाण्याद्याश्चतस्रश्चवर्जये दितियाज्ञवल्क्योक्तेःव्याख्यातं चेदंमिताक्षरायाम् ॥ यत्तुश्राद्धादौब्रह्मचर्यविहि तंतत्राप्यृतौगच्छतोनब्रह्मचर्यस्खलनदोषइति ॥ पर्वाणीतिबहुत्वेनाष्टमीचतुर्द श्योर्ग्रहणमितिचमदनरत्नेप्येवं (यत्तु हेमाद्रौशिवरहस्ये) दिवाजन्मदिनेचैवन कुर्यान्मैथुनंव्रती ॥ श्राद्धंदत्वाचभुक्त्वाचश्रेयोर्थीनचपर्वस्वितितदनृतुविषयं ॥ ब्रह्मचार्येवभवतियत्रतत्राश्रमेवसन्नितिमनूक्तेः (दर्शादौतुनभवत्येव) पर्वणांप्युदस्तत्वात् ॥ ऋतुकालंनियुक्तोवानैवगच्छेत्स्त्रियंक्वचित् ॥ तत्रगच्छन्समाप्नोति ह्यनिष्टफलमेवस्वितिवृद्धमनूक्तेः (श्राद्धेब्रह्मचर्यनियतमित्युक्तं) पृथ्वीचन्द्रोदये प्येवं । एतत्सतिसम्भवेज्ञेयं ॥ अनेकभार्यस्यतुयौगपद्येहेमाद्रौकश्यपः ॥ यौग पद्येतुतीर्थानांविवाहक्रमशोव्रजेत् ॥ रक्षणार्थंसपुत्रांवाग्रहणक्रमशोपिवेति ॥ (ग्रहणमृतुग्रहणं) ऋग्विधाने ॥ विष्णुर्योनिंजपेत्सूक्तंयोनिस्पृष्ट्वात्रिभिर्व्रती॥ गर्भाधानंततःकुर्यात्सपुत्रोजायतेध्रुवम् ॥ अगमनेदोषमाहपराशरः॥ ऋतुस्नातां तुयोभार्यांसन्निधौनोपगच्छति ॥ घोरायांभ्रूणहत्यायांपच्यतेनात्रसंशयः ॥ अ स्यापवादमाहमदनरत्नेव्यासः व्याधितोबन्धनस्थोवाप्रवासेष्वथपर्वसु । ऋतु कालेपिनारीणांभ्रूणहत्याप्रमुच्यते। वृद्धांवन्ध्यामसद्वृत्तांमृतापत्यामपुष्पिणीं । कन्यांचबहुपुत्रांचवर्जयन्मुच्यतेभयात् । वृद्धाङ्गतरजस्काम। गर्भाधानांगहोमा करणेप्रायश्चित्तमाहपारिजातेआश्वलायनः ॥ गर्भाधानस्याकरणात्तस्यजात स्तुदुष्यति ॥ अकृत्वाणांद्विजेदत्वाकुर्यात्पुंसवनंपतिः ॥ गर्भाधानंचमलमासशु क्रास्तादावपिकार्यं ॥ उत्सवेषुचसर्वेषुसीमंतऋतुजन्मसु ॥ सुराप्सुरेज्ययोश्चैव

मौढ्यदोषोनविद्यतइतिज्योतिर्निबन्धेभृगूक्तेः ॥ ऋतौगमनेपराशरः ॥ ऋतौतु
गर्भशंकित्वात्स्नानंमैथुनिनःस्मृतं ॥ अनृतौतुयदागच्छेच्छौचंमूत्रपुरीषवत् ॥
(स्त्रीणांतुनस्नानं) उभावप्यशुचीस्यातांदम्पतीशयनंगतौ ॥ शयनादुत्थितानाः
रीशुचिःस्यादशुचिः पुमानितिवृद्धशातातपोक्तेः ॥ अत्रकश्चिद्विशेषउच्यते ॥
तत्ररात्रौरजसिजननादौचरात्रिंत्रिभागांकृत्वा आद्यभागद्वयंचेत्पूर्वदिनंग्राह्यं ॥
परतस्तूत्तरमितिमिताक्षरायाम् ॥ यत्तुप्रागर्धरात्रात्प्राग्वा सूर्योदयात्पूर्वदिनमि
त्युक्तं ॥ तत्रदेशाचाराद्व्यवस्था ॥ तथासप्तदशदिनपर्यंतंपुनारजोदृष्टौस्नानमा
त्रं अष्टादशेएकरात्रं ऊनविंशेद्व्यहः ॥ विंशतिप्रभृतित्रिरात्रमितितत्रएवज्ञेयं
यत्तुचतुर्दशदिनादर्वागशुचित्वंनविद्यतेइतितत्रस्नानप्रभृतित्वमभिप्रेतं ॥ एतच्चय
स्याविंशतिदिनोत्तरंप्रायशोरजस्तत्रोक्तंस्मृत्यर्थसारे ॥ त्रयोदशदिनादूर्ध्वंप्रायो
रजोवतीनामेकादशदिनात्प्रागशुचित्वंनास्ति॥एकादशदिनेएकरात्रं ॥ द्वादशे
द्विरात्रं।ऊर्ध्वंत्रिरात्रमिति॥प्रयोगपारिजातेप्येवं॥रोगजेतुतत्रैवविशेषःसंग्रहेरो
गेणयद्रजः स्त्रीणामन्वहंहिप्रवर्त्तते ॥ नाशुचिस्तुभवत्तेनयस्माद्वैकारिकंमतमि
ति ॥ कर्माधिकारस्तुरजोनिवृत्तावेव ॥ साध्वाचारानतावत्स्यात्स्नातापिस्त्रीर
जस्वला ॥ यावत्प्रवर्त्तमानंहिरजोनैवनिवर्त्ततइतिश्राद्धहेमाद्रौशंखोक्तेः ( तत्रा
पिस्वकालेऽशुचिरेवेत्याहऋष्यशृंगः ) रोगजेवर्त्तमानेपिकाले निर्यातिकालि
कं ॥ तस्मात्कालेप्रमत्तास्यादन्यथासंकरोभवेत् ( तथा ) रजस्वलायारजस्व
लांतरस्पर्शेऽकामतःस्नानंकामतउपवासःपंचगव्याशनंच ॥ असवर्णानांतुब्राह्म
णयाक्षत्रियादिस्पर्शे क्रमेणकृच्छ्रार्द्धपादोनकृच्छ्र कृच्छ्राणिक्षत्रियादीनांतुकृ
च्छ्रपादएवक्षत्रियादीनांहीनवर्णस्पर्शेत्रिरात्रमुपवासः ॥ वैश्याशूद्र्योःपूर्वयास्प
र्शेहोरात्रंद्विरात्रंच ॥ एतच्चकामतः ॥ अकामतश्चप्राक्शुद्धेरनशनं ॥ अकाम
तश्चंडालादिस्पर्शेप्यनशनमेवप्राक्शुद्धेः ॥ कामतस्तु ॥ प्रथमेह्नित्र्यहः
द्वितीयेद्व्यहस्तृतीयएकाहः ॥ चस्पर्शेतुद्व्यहएकाहोवा ॥ भुंजानायाश्चांडा
लादिस्पर्शेषड्रात्रं॥ उच्छिष्टयोःस्पर्शेतुकृच्छ्रइत्यादिमिताक्षरायांज्ञेयं ॥ स्मृ
त्यर्थसारेतुसर्वत्रशातापत्यायाः स्पर्शेस्नानेकृतेभुक्तिः पश्चादशनप्रत्याम्नायद्द

ति (स्नानविधिंचाहपराशरः) स्नानेनैमित्तिकेप्राप्तेनारीयदिरजस्वला । पात्रांत रिततोयेनस्नानंकृत्वाव्रतंचरेत् ॥ सिक्तगात्राभवेदद्भिःसांगोपांगाकथंचन ॥ नव स्त्रपीडनंकुर्यान्नान्यद्वासप्रधारयेत् ॥ अथरजस्वलास्नानं ( दैवज्ञवल्लभः ) ब्र ह्मानुराधाश्विनसौम्यभेषुहस्तानिलाखंडलवासवेषु ॥ विश्वार्यमर्क्षोत्तरभाद्रभेषु वरांगनास्नानविधिःप्रदिष्टः (ज्वरेतूशनाः) ज्वराभिभूतायानारीरजसाचपरि प्लुता ॥ कथंतस्याभवेच्छौचंशुद्धिःस्यात्केनकर्मणा ॥ चतुर्थेहनिसंप्राप्तेस्पृशेद न्यातुतांस्त्रियं॥सासचैलावगाह्यापःस्नात्वास्नात्वापुनःस्पृशेत्॥दशद्वादशकृत्वो वाआचामेच्चपुनःपुनः॥ अंतेचवाससांत्यागःततःशुद्धाभवेत्तु सेति ॥ इदंचातुरस्ना नेज्ञेयं ॥ आतुरेस्नानउत्पन्नेदशकृत्वोह्यनातुरइतिपराशरोक्तेः॥ रजसोऽज्ञाने तुपराशरमाधवीयेप्रजापतिः ॥ अविज्ञातेमलेसाचमलवद्वसनायदि ॥ कृतं गृहेषुदुष्टंस्याच्छुद्धिर्नस्यात्त्रिरात्रतः ( देवजानीयेकारिकायां ) उच्छिष्टातु द्विजातीनांरजःस्त्रीयदिपश्यति ॥ उपवासमधोच्छिष्टेऊर्ध्वोच्छिष्टेत्र्यहंक्षिपेत् ( अथपुंसवनं ) प्रयोगपारिजातेजातकरार्यः ॥ द्वितीयेवातृतीयेवामासिपुंस वनंभवेत् ॥ व्यक्तेगर्भेभवेत्कार्यंसीमंतेनसहाथवा ( बृहस्पतिः ) तृतीयेमा सिकर्तव्यंगृष्टेरन्यत्रशोभनं। गृष्टेप्रचतुर्थेमासेतुषष्ठेमास्यथवाष्टमे ॥ सकृत्प्रसूतागृ ष्टिः ॥ एतेनप्रतिगर्भमपिभवतीतिज्ञायते ॥ बह्वृचकारिकापि॥ कर्तास्याद्देवर स्तस्यायस्याः पत्युरसंभवः ॥ आवर्त्ततइदंकर्मप्रतिगर्भमितिस्थितिः (ब्राह्मे) गर्भाधानादिसंस्कर्त्तापिताश्रेष्ठतमःस्मृतः॥ अभावेस्वकुलीनःस्याद्बांधवोऽन्यगो त्रजः(मदनरत्नेसत्यव्रतः)मृतोदेशांतरगतोभर्त्तास्त्रीयस्यसंस्कृता ॥ देवरोवागुरु र्वापिवंशयोवापिसमाचरेत् (हेमाद्रौयमः) प्रथमेमासिद्वितीयेवायदापुन्नक्षत्रेण चंद्रमायुक्तः स्यादितिवराहः॥ हस्तोमूलंश्रवणःपुनर्वसुमृगशिरस्तथापुष्यः ॥ पुंसंज्ञकेषुकार्येष्वेतानिशुभानिधिष्ण्यानि। अनुराधापिपुन्नक्षत्रंअनुराधासुहवि षावर्धयंतइतिश्रुतेः (गर्गोपि) पुन्नामश्रवणस्तिष्योहस्तश्चैवपुनर्वसुः ॥ अभि जित्प्रोष्ठपाचैवअनुराधातथाश्वयुक् (नृसिंहः) रिक्तांपर्वचनवमींत्यक्त्वापुंसवने शुभाः॥ ज्योतिर्निबंधेवशिष्ठः ॥ मृत्युश्चसौरेस्तनुहानिरिंदोमृतप्रजापुंसवने

बुधस्य ॥ काकीचवंध्याभवतीहशुक्रेस्त्रीपुत्रलाभोरविभौमजीवैः ॥ अनवलोभ नस्याप्ययमेवकालः ॥ दीपिकायांतुचतुर्थे८नवलोभनमित्युक्तं ॥ अथसीमंतः ॥ हेमाद्रौबैजवापः ॥ अथसीमंतोन्नयनं ॥ चतुर्थेपंचमेषष्ठेचेति (वशिष्ठः) चतुर्थे सप्तमेमासिषष्ठेवाप्यथवाष्टमे ॥ हेमाद्रौशंखः ॥ गर्भस्पंदनेसीमंतोन्नयनं (याव (ज्ञानप्रसवः काण्र्णाजिनिः) गर्भलंभनमारभ्ययावन्नप्रसवस्तदा । सीमंतोन्नय नंकुर्याच्छंखस्यवचनंयथा (मासप्रचात्रसौरःसावनोवाकालविधाने) चतुर्थ षष्ठाष्टममासभाजिसौरेणगर्भेप्रथमंविधेयं ॥ सीमंतकर्मद्विजभामिनीनांमासे८ ष्टमेविष्णुबलिंचकुर्यात (वशिष्ठः) चतुर्थेसावनेमासिषष्ठेवाप्यथवाष्ट मे (ज्योतिर्निबंधेनारदः) अरिक्तापर्वदिवसेकुजजीवार्कवासरे (कालविधा ने) सीमंतेतिष्यहस्तादितिहरिशशभृत्पौष्णविध्युत्तराख्याःपक्षछिद्रं चरिक्तां पितृतिथिमपहायापराःस्युःप्रशस्ताः ॥ अदितिःपुनर्वसुः (पक्षछिद्रंत्वाहवशि ष्ठः) चतुर्दशीचतुर्थीचअष्टमीनवमीतथा ॥ षष्ठीचद्वादशीचैवपक्षछिद्राह्वयः स्मृतः ॥ क्रमादेतासुतिथिषु वर्जनीयाश्चनाडिकाः ॥ भूता ५ ष्ट ८ मनु १४ तत्त्वां २५ क ९ दश १० शेषास्तुशोभनाः (कालनिर्णये) शुभसंस्थेनिशाना थेचतुर्थीं चचतुर्दशीं ॥ पौर्णमासींप्रशंसंतिकेचित्सीमंतकर्मणि (बृहस्पतिः) पर्वपक्षःशुभःप्रोक्तःकृष्णश्चांत्यत्रिकंविना ॥ चतुर्दशीचतुर्थीचशुक्लपक्षेशुभप्र दे (नारदः) विप्रक्षत्रिययोःकुर्याद्दिवासीमंतकर्मतत ॥ वैश्यशूद्रकयोरेतद्दि वानिश्यपिकेचन ॥ वाराःपूर्वोक्ताएव (एतच्चसकृत्प्रतिगर्भंवाकार्यमितिहेमा द्रिः) एतचकृतसंस्काराःसीमंतेनद्विजस्त्रियः ॥ यंयंगर्भंप्रसूयंतेससर्वःसंस्कृतोभ वेदितिहारीतोक्तेः॥सीमंतोन्नयनंकर्मनस्त्रीसंस्कारइष्यते ॥ केचिद्गर्भस्यसंस्का रात्प्रतिगर्भंप्रयुंजतेइतिहेमाद्रौविष्णुवचनाच (सएव) स्त्रीयद्यकृतसीमंताप्रस वेत्तुकथंचन ॥ गृहीतपुत्राविधिवत्पुनःसंस्कारमर्हति (सीमंतेभोजनेप्रायश्चि त्तमुक्तंपराशरमाधवीयेधौम्येन) ब्रह्मौदनेचसोमेचसीमंतोन्नयनेतथा ॥ जातक र्मनवश्राद्धेभुक्त्वाचांद्रायणंचरेत (ऋग्विधानेतु) आरइवेत्जपेन्मंत्रंशतवारंनसं शयः ॥ सीमंतेचयदाभुंक्तेमुच्यतेकिल्बिषात्तदेति (अथगर्भिणीतत्पतिधर्माः ।

वराहः ) सामिषमशनंयत्नात्प्रमदापरिवर्जयेत् ततःप्रभृतिगृह्यकारिकायां ॥ अंगारभस्मास्थिकपालचुल्लीशूर्पादिकेषूपविशेन्ननारी ॥ सोलूखलादये दृषदादिकेवाप्यंनैतुप्रौढ्ये नतथोपविष्टा ॥ नोमार्जनीगोसर्पपिंडकादीकुर्यान्नवारिरायवगाहनंसा ॥ अंगारभूत्याननखैर्लिखेत्सामांकलिंवपूर्भंगमथोनकुर्यात् ॥ नोमुक्तकेशीविवशाथवास्याद्दुंक्तोनसंध्यावसरेनशेते ॥ नासंगलंवाक्यमुदीरयेत्साशून्यालयंवृक्षतलेनयायात् (विष्णुधर्मोत्तरे) कटुतीक्ष्णकषायाणिशात्युष्णलवणानि च ॥ आयासंचव्यवायंचगर्भिणीवर्जयेत्सदा ( हेमाद्रौकौंडिन्यः ) मुंडनंपिंडदानंचप्रेतकर्मचसर्वशः ॥ नजीवत्पितृकःकुर्याद्गुर्विणीपतिरेवच( मिताक्षरायां) उदन्वतोंभसिस्नाननखकेशादिकर्त्तनं ॥ अंतर्वत्न्याःपतिःकुर्वन्नप्रजाजायतेध्रुवं ( पृथ्वीचंद्रोदयेगारुडे ) गयायांपिंडदानस्यनकदाचिन्निराक्रिया ॥ अत्रकालेदानप्रत्ययस्मृतेर्निषिद्धकालस्यैवापवादोनतुजीवत्पितृकगर्भिणीपत्याशौचादिनिमित्तस्य ॥ अग्निहोत्रेशावज्जीवत्कालपरत्वाभावात् ॥ अन्यथाशौचेपिगयायात्राश्राद्धंचस्यात्यत्रतुनिमित्तसंयोगस्यापवादोयथाशौचेग्निहोत्रादेः यथावाजीवत्पितृकस्यमातुर्गयान्वष्टकादौतत्रतदेवभवतिनान्यदितिसंक्षेपः ( प्रयोगपारिजातेकश्यपः)गर्भिणीकुंजराश्वादिशैलहर्म्याधिरोहणं ॥ व्यायामंशीघ्रगमनंशकटारोहणंत्यजेत् ॥ शोकंरक्तविमोक्षंचसाध्वसंकुक्कुटासनं । व्यवसायंदिवास्वापंरात्रौजागरणंत्यजेत्(मदनरत्नेस्कांदे ) हरिद्रांकुंकुमंचैवसिंदूरंकज्जलंतथा कूर्पासकंचतांबूलंमांगल्याभरणंशुभं ॥ केशसंस्कारकबरीकरकर्णविभूषणम भर्तुरायुष्यमिच्छंतीदूरयेद्गर्भिणीनहि ( बृहस्पतिः ) चतुर्थेमासिषष्ठेवाप्यष्टमेगर्भिणीयदा ॥ यात्रानित्यंविवर्ज्यास्यादाषाढेतुविशेषतः ( याज्ञवल्क्यः ) दौहृदस्याप्रदानेनगर्भोदोषमवाप्नुयात् ॥ वैरूप्यंमरणंचापितस्मात्कार्यंप्रियंस्त्रियः॥ दौहृदंगर्भिणीप्रियं ( तत्रैवाश्वलायनः ) वपनंमैथुनंतीर्थंवर्जयेद्गर्भिणीपतिः ॥ श्राद्धंचसप्तमान्मासादूर्ध्वंचान्यत्रवेदवित् ( श्राद्धंतद्भोजनमितिप्रयोगपारिजातः कालविधाने मुहूर्त्तदीपिकायांच ) क्षौरंशवानुगमनंनखकृन्तनंचयुद्धादिवास्तुकरणंत्वतिदूरयानं ॥ उद्वाहमौपनयनंजलधेश्चगाहमायु

स्यार्थमितिगर्भिणीकापतीनां ( रत्नसंग्रहेगालवः ) दहनंवपनंचैवचौलंवैगि
रिरोहणं ॥ नावश्चारोहणंचैववर्जयेद्गर्भिणीपतिः ॥ अव्यक्तगर्भापतिरब्धि
यानंमृतस्यवाहंसुरकर्मसंगं ॥ तस्यांतुयत्नेनगयादितीर्थयागादिकंवास्तुविधिं
नकुर्यात् ॥ अव्यक्तगर्भावनिताभवेन्मासत्रयात्परं ॥ दशमासात्परतःसूतिर्नवमे
रिष्टवासिनी ( अथसूतिकागृहप्रवेशः । गर्गः ) रोहिण्यैंदवपौष्णेषुस्वातीवरु
णयोरपि । पुनर्वसौपुष्यहस्तधनिष्ठास्त्रुत्तरासुच ॥ मैत्रेत्वाष्ट्रे तथाश्विन्यांसूति
कागारवेशनम् ( एतच्चसंभवे ) प्रसूतिसमयेकालेसद्यएवप्रवेशयेदितिवशिष्ठोक्तेः
तच्चनैर्ऋत्यांकार्यं । वारुण्यांभोजनगृहंनैर्ऋत्यांसूतिकागृहमितिवशिष्ठोक्तेः
( विष्णुधर्मे ) दशाहंसूतिकागारमायुधैश्चविशेषतः । वह्निनातिंदुकालातैःपूर्ण
कुंभैःप्रदीपकैः । मुसलेनतथावारिवर्णकैश्चचित्रितेनचेति ( अथजातकर्म । पारि
जातेवशिष्ठः ) श्रुत्वाजातंपितापुत्रंसचैलंस्नानमाचरेत् ( मनुः ) प्राङ्नाभिवर्धना
त्पुंसोजातकर्मविधीयते । वर्द्धनंछेदनं ( हेमाद्रौबैजवापः ) जन्मनोनंतरंकार्यंजात
कर्मयथाविधि । दैवादतीतकालंचेदतीतेसूतकेभवेत् ( पृथ्वीचंद्रोदयेविष्णुधर्मे )
अच्छिन्ननाभिकर्तव्यंश्राद्धंवैपुत्रजन्मनि ॥ पुत्रपदेनकन्यापिगृह्यते ( तदाहतत्रैव
कार्ष्णाजिनिः ) प्रादुर्भावेपुत्रपुत्र्योर्ग्रहणेचंद्रसूर्ययोः ॥ स्नात्वानंतरमात्मीया
न्पितॄन्श्राद्धेनतर्पयेत् ( एतच्चरात्रावपिकार्यं ) पुत्रजन्मनियात्रायांशर्वर्यांदत्त
मक्षयमितितत्रैवव्यासोक्तेः ( बैजवापः ) जातमात्रकुमारस्यजातकर्मविधीय
ते ॥ स्तनप्राशनतःपूर्वंनाभिकर्तनतोपिवा ॥ एतेननैमित्तिकमपीदंजातेष्टिवदा
शौचांतेकार्यमितिशंकापरास्ता । जातेकुमारेपितॄणामामोदात्पुण्यंतदहरि
तिहारीतोक्तेश्च । अत्रश्राद्धमामेनहेम्नावाकार्यमित्युक्तं ( पृथ्वीचंद्रोदयेआ
दित्यपुराणे ) जातश्राद्धेतुपक्वान्नंनदद्याद्ब्राह्मणेष्वपीति॥हेमाद्रिस्तु ॥ पुत्रजन्म
निकुर्वीतश्राद्धंहेम्नैवबुद्धिमान् । नपक्वेननचामेनकल्याणान्यभिकामयन्निति
संवर्तोक्तेर्हेम्नैवेत्याह ( एतच्चजननाशौचेमरणाशौचेचकार्यमित्याहमिताक्षरा
यांप्रजापतिः ) आशौचेतुसमुत्पन्नेपुत्रजन्मयदाभवेत् । कर्तुस्तात्कालिकीशु
द्धिःपूर्वाशौचेनशुद्ध्यति ( केचित्तु ) मृताशौचस्यमध्येतुपुत्रजन्मयदाभवेत् । आ

शौचावगमेकार्यंजातकर्मयथाविधीतिस्मृतिसंग्रहोक्तेराशौचांतेकार्यमित्या
हुः ( स्मृत्यर्थसारेपिविकल्पउक्तः )मृदुध्रुवचरक्षिप्रभेष्वेषामुदयेषुच ॥ गुरौशु
क्रेथवाकेंद्रे जातकर्मचनामच (मुहूर्तादिलक्षणमाहश्रीधरः) रोहिण्युत्तरभंस्थिरं
शिरिश्चमूलेंद्रोरगादारुणंक्षिप्रंचाश्विर्दिनेशपुष्यसनलेंद्राग्नीतुसाधारणं ॥ उग्रं
पूर्वमघांतकंमृदुगतिस्त्वाष्ट्रांत्यमैत्रंचरंविष्णुस्वातिमरुतोडुवस्वदितयःकुर्युःस्वसंज्ञा
फलं । अत्रसर्वत्रजातकर्मनामकर्मादावुक्तकालातिक्रमेणसप्ताह्यादिकंज्ञेयम् । देशाक्का
लोपघाताद्यैःकालातिक्रमणंयदि ॥ अनस्तगेगुरौशुक्रेदुसितेतत्कार्यंचोत्तरायणे । इति
मदनरत्नेनारदोक्तेः ( बृहस्पतिरपि )मुख्यालाभेविधिज्ञैर्विधिप्रचंत्योप्रमा
दतः ॥ नक्षत्रतिथिलग्नानांविचार्यैवंपुनःपुनः ॥ सूतकेसंध्ययोर्विशेषंवक्ष्यामः ॥
अथजन्मनिदुष्टकालाः (तत्रगंडांतः । ज्योतिर्निबंधेनारदः) पूर्णानंदाख्ययोस्ति
थ्योःसंधिर्नाडीद्वयंतथा॥गंडांतंमृत्युदंजन्मयात्रोद्वाहव्रतादिषु॥कुलीरसिंहयोः
कीटचापयोर्मीनमेषयोः। गंडांतमंतरालंस्याद्घटिकार्धंमृतिप्रदं॥सार्पैंद्रपौष्णभे
ष्वंत्ययोडशांशाभसंधयः॥तदग्रभेष्वाद्यपादाभानांगंडांतसंज्ञकाः(रत्नमालायां)
पौष्णाश्विन्योःसार्पपित्र्यर्क्षयोश्चयच्चज्येष्ठामूलयोरंतरालं।स्याद्गंडांतं स्या
च्चतुर्नाडिकंहियात्राजन्मोद्वाहकालेष्वनिष्टम् (रत्नसंग्रहेनवसीतारिष्टे) सर्वे
षांगंडजातानांपरित्यागोविधीयते ॥ वर्जयेद्दर्शनंयावत्षण्मासिकंभवेत् ।ति
थ्यर्क्षगंडेपितृमातृनाशोलग्नेतुसंधौतनयस्यनाशः ॥सर्वेषुनोजीवतिहन्तिबन्धून्
जीवन्पुनःस्याद्बहुवारणाश्वः (अथैषांदानमुत्तरगार्ग्ये)तिथिगंडेत्वनड्वाहंनक्षत्रे
धेनुरुच्यते॥कांचनंलग्नगंडेतुगंडदोषोविनश्यति॥उत्तरेतिलपात्रंस्यात्पुष्येगोदा
नमुच्यते॥अजाप्रदानंत्वाष्ट्रे स्यात्पूर्वाषाढेचकांचनं।उत्तरापुष्यचित्रासुपूर्वाषाढो
द्भवस्यच । कुर्याच्छांतिंप्रयत्नेनन्नक्षत्राकरजांबुधः॥(अथाश्लेषाफलं) मूर्धास्यने
त्रगलकांसयुगंचबाहूहृज्जानुगुह्यपदमित्यहिदेहभागः । बाणाद्रिनेत्रहुतभुक्श्रु
तिनागरुद्रषट्नंदपंचघटिरसःक्रमशस्तुनाड्यः॥ राज्यंपितृक्षयोमातृनाशःकाम
क्रियारतिः ॥ पितृभक्तोबलीस्वघ्नस्त्यागीभोगीधनीक्रमात् ॥ अथज्येष्ठाफ
लंब्रह्मयामले ॥ ज्येष्ठादौजननीमाताद्वितीयेजननीपिता ॥ तृतीयेजननीभ्राता

स्वयंमाताचतुर्थके ॥ आत्मानंपंचमेहन्तिषष्ठेगोत्रक्षयोभवेत् । सप्तमेचोभयकुलंज्येष्ठभ्रातरमष्टमे ॥ नवमेश्वशुरंहन्तिसर्वंहन्तिदशांशकइति ( अथमूलफलं ॥ भल्लाटः ) अभुक्तमूलसम्भवंपरित्यजेत्तुबालकं । समाष्टकंपिताथवानतन्मुखंविलोकयेत् ॥ तदाद्यपादकेपिताद्वितीयकेजनन्यथ । धनक्षयस्तृतीयकेचतुर्थकःशुभावहः ॥ प्रतीपमन्त्यपादतःफलंतदेवसार्पभे(अभुक्तमूलंत्वाहवृद्धवशिष्ठः) ज्येष्ठांतेघटिकाचैकामूलादौघटिकाद्वयं । अभुक्तमूलमित्याहुस्तत्रजातंशिशुंत्यजेत् ॥ केचिज्ज्येष्ठांत्यमूलाद्यंचपादमभुक्तमूलमाहुः ( कश्यपसंहितायांत्वन्यथोक्तं ) मूलाद्यपादजोहंतिपितरंतुद्वितीयजः । मातरंस्वंतृतीयेथानिसुहृदंतुरीयजः ॥ फलंतदेवसार्पर्क्षेप्रतीपंत्वंत्यपादतः ॥ अथमूलवृक्षः ( जयार्णवे ) मूलस्तंभस्त्वचाशाखापत्रंपुष्पंफलंशिखा । वेदाश्चमुनयश्चैवदिशश्चवसवस्तथा ॥ नन्दाबाणारसारुद्रामूलभेदःप्रकीर्तितः । मूलेमूलविनाशायस्तंभेहानिर्धनक्षयः ॥ त्वचिभ्रातृविनाशायशाखामातृविनाशकृत् ॥ पत्रेसपरिवारःस्यात्पुष्पेषुनृपवल्लभः । फलेषुलभतेराज्यंशिखायामल्पजीवितं ॥ अन्यत्रवान्यथोक्तं ॥ मूलेसप्तघटीषुमूलहननंस्तम्भेष्टसुस्वक्षयं त्वग्दिग्बन्धुविनाशनंचविटपेरुद्रैर्हतोमातुलः ॥ पत्रेर्कैःसुकृतीतुबाणकुसुमेमंत्रीफलेसागरैराजावह्निशिखाल्पमायुरिति सन्मूलांघ्रिपेस्यात्फलम् ( भूपालवल्लभः ) वृषालिसिंहेघुघटेचमूलंदिविस्थितंयुग्मतुलांगनांत्ये ॥ पातालगंमेषधनुःकुलीरनक्रेषुमर्त्येष्ववतिसंस्मरंति ॥ स्वर्गेमूलेभवेद्राज्यंपातालेचेद्धनागमः । मर्त्यलोकेयदामूलंतदाशून्यंसमादिशेत् (वशिष्ठः) नैरृत्यभोद्भवसुतःसुतावाक्षिप्रादवश्यंश्वशुरंनिहंति ॥ तदंत्यपादेजनितोनिहंति तस्योत्क्रमेणाहिभवेत्कलत्रम् ॥ सुरेशताराजनिताधवाग्रजं द्विदैवताराजनितातुदेवरम् ॥ पुरन्दरर्क्षेजनितःसुतस्तथास्वस्याग्रजंहन्तिनपुत्रितायदि (प्रयोगपारिजाते) मूलजाश्वशुरंहंति व्यालजाचतदङ्गनाम ॥ माहेन्द्रजाग्रजंहन्तिदेवरन्तुद्विदैवजा (नृसिंहप्रसादे) धवाग्रजंहन्तिसुरेंद्रजातातथैवपत्न्याभगिनीपुमांश्च । द्विदैवजादेवरमाशुहन्याद्भार्यानुजामाशुनिहन्तिसूनुः ॥ पत्न्यग्रजामग्रजंवाहन्तिज्येष्ठर्क्षजःपुमान् । तथाभार्यास्वसारंवाशा

त्तकंवाह्निदैवजः ॥ कन्यकादेवरंहन्तिविशाखांत्यसमुद्भवा । आद्यपादत्रयेणैव
आद्यभेतुपुमान्भवेत् ॥ नहन्याद्देवरंकन्यातुलामिश्राद्विदैवजा । तदृक्षांतोद्भवा
वर्ज्यादुष्टावृश्चिकपुच्छवत् ॥ चित्राद्यर्धेपुष्यमध्येद्विपादेपूर्वाषाढाधिष्ण्यपा
देतृतीये । जातःपुत्रश्चोत्तराद्येविनश्येत्मातापित्रोर्भ्रातरंबालनाशं ॥ द्विमासंचो
त्तरादोषःपुष्येचैवत्रिमासकः । पूर्वाषाढाष्टमेमासिचित्रायाःषाण्मासिकंफलं ॥
नवमासंतथाश्लेषामूलेचाष्टकवर्षकं । ज्येष्ठापंचदशेमासिपुत्रदर्शनवर्जिता ॥
(वसिष्ठः) व्यतीपातेंगहानिःस्यात्परिघेमृत्युमादिशेत् । वैधृतौपितृहानिःस्या
न्नष्टेंदावंधतांव्रजेत् ॥ मूलेसमूलनाशःस्यात्कुलनाशोमृतौभवेत् । विकृतांगश्च
हीनश्चसंध्ययोरुभयोरपि ॥ पर्वण्यपिप्रसूतौचसर्वारिष्टभयप्रदः । तद्वत्सदंत
जातश्चपादजातस्तथैवच ॥ विपरीतप्रसूतौतुनाभिनालेनवेष्टितः । राष्ट्रस्यनृप
तेश्चैवस्वस्यापिचविनाशकः ॥ तस्माच्छांतिंप्रकुर्वीतग्रहाणांक्रूरचेतसां (गर्गः)
कृष्णांचतुर्दशींषोढांकुर्यादादौशुभंस्मृतं । द्वितीयेपितरंहन्तितृतीयेहन्तिमात
रम् ॥ चतुर्थेमातुलंहंतिपंचमेवंशनाशनम् ॥ षष्ठेतुधननाशःस्यादात्मनोवंशना
शनम् ॥ तस्मात्सर्वप्रयत्नेनशांतिंकुर्याद्विधानतः ॥ अथपित्रोर्नक्षत्रेजन्मदोषः ॥
(तत्रदेवकीर्तिः) यद्येकस्मिन्नधिष्ण्येजायन्तेदुहितरोथवापुत्राः । पितुरंतकरा
ह्येतेयद्यपरेप्रीतिरतुलास्यात् (गर्गः) एकस्मिन्नेवनक्षत्रेभ्रात्रोर्वापितृपुत्रयोः
प्रसूतिश्चतयोर्मृत्युर्भवेदेकस्यनिश्चितं (शौनकः) ग्रहतोचन्द्रसूर्यस्यप्रसूतिर्य
दिजायते । व्याधिपीडातदास्त्रीणामादौतुक्लेशदर्शनात् ॥ इत्थंसंजायतेयस्यत
स्यमृत्युर्नसंशयः (शांतिस्तु) तदृक्षाधिपतेरूपंसुवर्णेनप्रकल्पयेत् । सूर्यग्रहेसूर्य
रूपंहैमंचन्द्रन्तुराजतम् ॥ राहुरूपंप्रकुर्वीतनागेनैवविचक्षणः ॥ नागःसीसं ॥ त्रया
णांचैवरूपाणांस्थापनंतत्रकारयेत् ॥ आकृष्णेनाप्यायस्वभानोरितिपूजामंत्राः
नक्षत्रदेवतायास्तन्मंत्रेण ॥ संपूज्यतुयजेत्सूर्यसमिद्भिश्चार्कसंभवैः ॥ चंद्रग्रहेच
पालाशैर्दूर्वाभीराहुमेवच ॥ समिद्भिर्ब्रह्मवृक्षस्यशेषायजुहुयाद्बुधः ॥ आज्येन
चरुणाचैवतिलैश्चजुहुयात्ततः । पंचगव्यैःपंचरत्नैःपंचत्वक्पंचपल्लवैः । जलै
रौषधिकल्कैश्चअभिषेकंसमाचरेत् । मंत्रैर्वारुणसंभूतैरापोहिष्ठादिभिस्त्रिभिः

इमंमेगंगेपुरतस्तत्वा यामीतिमंत्रकैः । यजमानस्ततो दद्याद्भक्त्याप्रतिकृति त्र्यर्मिति (मात्स्ये) अकालप्रसवानार्यःकालातीतप्रजास्तथा । विकृतप्रसवाश्चैवयुग्मप्रसवकास्तथा ॥ अमानुषाअमुंडाश्चअजातव्यंजनास्तथा । हीनांगा अधिकांगाश्चजायंतेयदिवास्त्रियः ॥ पशवःपक्षिणश्चैव तथैवचसरीसृपाः विनाशंतस्यदेशस्यकुलस्यचविनिर्दिशेत ॥ निर्वासयेत्तांनगरात्ततःशांतिसमाचरेत(पाद्मे)उपरिप्रथमंयस्यजायंतेचशिशोर्द्विजाः । दंतैर्वासहयस्यस्याज्जन्मभार्गवसत्तम ॥ द्वितीयेचतृतीयेचचतुर्थेपंचमेतथा । यदादंताश्चजायंतेमासेचैवमहद्भयं॥मातरंपितरंवाथखादेदात्मानमेवच। गजपृष्ठगतंबालंनौस्थंवास्थापयेद्द्विज॥ तदभावेतुधर्मज्ञकांचनेवावरासने । सर्वौषधैःसर्वगंधैर्बीजैःपुष्पैःफलैस्ततः ॥ पंचगव्येनरत्नैश्चस्नपतांकाभिश्चभार्गव । स्थालीपाकेनधातारंपूजयेत्तदनंतरं ॥ सप्ताहंचात्रकर्तव्यंतथाब्राह्मणभोजनं । भद्रासनेनिवेश्यैनंमृद्भिर्मूलैःफलैस्तथा ॥ सर्वौषधैःसर्वगंधैःसर्वबीजैस्तथैवच । स्नापयेत्पूजयेच्चात्रवह्निं सोमंसमीरणं ॥ पर्वतांश्चतथाख्यातान्देवदेवंचकेशवं । एतेषामेवजुहुयाद्व्रतमग्नौयथाविधि ॥ ब्राह्मणानांतुदातव्यास्ततःसंपूज्यदक्षिणा(ब्रह्मयामले) प्रथमंदंतनिर्मुक्तिरूर्ध्वंबालस्यचेद्भवेत ॥ कंशायसमातुलस्येहतदाप्रोक्तामनीषिभिः ॥ सौवर्णंराजतंवापि ताम्रं कांस्यमयंतुवा । दध्योदनेनसंपूर्णंपात्रंदद्याच्छिशोःकरे ॥ समंत्रंभाजनंदत्वा सपश्येन्मातुलःशिशुं ॥ सालंकारंसवस्त्रंचशिशुमालिंग्यसादरं (तत्रमंत्रः) रक्षमांभागिनेयत्वंरक्षमेसकलंकुलं॥ गृहीत्वाभाजनंसान्नंप्रसन्नोभवसर्वदा॥ निर्विघ्नंकुरुकल्याणंनिर्विघ्नांचस्वमातरं । मय्यात्मानमधिष्ठाप्यचिरंजीवमयासह ॥ सर्वंकृतेविधानेतुविघ्नःकोपिनजायतइति (अथत्रिकशांतिःशांतिसर्वस्वे) सुतत्रयेसुताचेत्स्यात्तत्रयेवासुतोयदि । मातापित्रोःकुलस्यापितदानिष्टंमहद्भवेत॥ ज्येष्ठनाशोधनेहानिर्दुःखंवासुमहद्भवेत । तत्रशांतिंप्रकुर्वीतवित्तशाठ्यविवर्जितः ॥ जातस्यैकादशाहेवाद्वादशाहेशुभेदिने । आचार्यमृत्विजोवृत्वाग्रहयज्ञपुरःसरं ॥ ब्रह्मविष्णुमहेशेंद्रप्रतिमाःस्वर्णतःकृताः । पूजयेद्धान्यराशिस्थंकलशोपरिभक्तितः ॥ पंचमेकलशेरुद्रं पूजयेद्रुद्रसंख्यया । रुद्रसूक्तानिचत्वारिशांतिसू

क्तानिसर्वशः ॥ द्विजस्तत्रजपेद्धोमकालेशुचिस्समाहितः । आचार्योजुहुयात्तत्र समिदाज्यतिलांश्चरुं ॥ अष्टोत्तरसहस्रंवाशतंवात्रिशतंतुवा । देवताभ्यश्चतुर्व क्त्रादिभ्योगृहपुरःसरं ॥ ब्रह्मादिमन्त्रैरिंद्रस्ययतइंद्रभयामहे । ततःस्विष्टकृतंहुत्वा बलिंपूर्णाहुतिंततः ॥ अभिषेकंकुटुंबस्यकृत्वाचार्यंप्रपूजयेत् । हिरण्यंधेनुरेका चऋत्विजांदक्षिणाततः ॥ आज्यस्यवीक्षणंकृत्वाशांतिपाठंतुकारयेत् । प्रति मांगुरवेदत्वाउपस्कारसमन्वितः ॥ ब्राह्मणान्भोजयेच्छक्त्यादीनानाथांश्चतत् र्पयेत् । एवंशांतिविधानेनसर्वारिष्टंप्रलीयतइति ॥ अन्येषुमूलाद्यृक्षेषुशांत्यादि प्रयोगपारिजातेमत्कृतेशांतिरत्नेचज्ञेयं ( मिताक्षरायांमार्कंडेयः ) रक्षणीया तथाषष्ठीनिशातत्रविशेषतः ॥ रात्रौजागरणंकार्यंजन्मदानांतथाबलिः ॥ पुरु षाःशस्त्रहस्ताश्चनृत्यगीतैश्चयोषितः । रात्रौजागरणंकुर्युर्दशम्यांचैवसूतके ॥ (व्यासः) सूतिकावासनिलयाजन्मदानामदेवताः । तासांयागनिमित्तंतुशुद्धिर्ज न्मनिकीर्तिता ॥ प्रथमेदिवसेषष्ठेदशमेचैवसर्वदा ॥ त्रिष्वेतेषुनकुर्वीतसूतकंपुत्र जन्मनि (अपरार्केब्राह्मे) कन्याश्चतस्रोराकाद्यावातघ्नीचैवपंचमी ।क्रीडनार्था चबालानांषष्ठीचाशशुरक्षिणी ॥ खड्गेतुपूजनीयावैवैश्यैर्व्रात्यैर्द्विजातिभिः ॥ राकानुमतिःसिनीवालीकुहूरितिचतस्रःकन्याइत्यर्थः ॥ अथदत्तकपरिग्रहवि धिः ( पारिजातेशौनकः ) अपुत्रोमृतपुत्रोवापुत्रार्थंसमुपोष्यच । वाससीकुंडले दत्वाउष्णीषंचांगुलीयकं ॥ बंधूनन्नेनसंभोज्यब्राह्मणांश्चविशेषतः । अन्वा धानादियत्तत्रकृत्वाज्योत्पवनांतकं ॥दातुःसमक्षंगत्वातुपुत्रंदेहीतियाचयेत् । दाने समर्थोदातास्मैयेयज्ञेनेतिपंचभिः ॥ देवस्यत्वेतिमंत्रेणहस्ताभ्यांपरिगृह्यच । अंगा दंगेत्यृचंजप्त्वाआघ्रायशिशुमूर्धनि ॥ गृहमध्येतमाधायचरुंहुत्वाविधानतः ॥ यस्त्वाहृदात्यृचाचैवतुभ्यमग्रऋचैकया ॥ सोमोददिदत्येताभिःप्रत्यृचंपंचभिस्त था ॥ स्विष्टकृदादिहोमंचकृत्वाशेषंसमापयेत् ॥ सच ॥ ब्राह्मणानांसपिंडेषुकर्त व्यःपुत्रसंग्रहः ॥ तदभावेसपिंडोवाअन्यत्रतुनकारयेत् ॥ मिताक्षरादौतुव्याहृति भिराज्येनहोमउक्तः । सचहोमोत्तरंजलपूर्वकंदेयः ॥ नवाङ्मात्रेण ॥ व्याहृति भिर्हुत्वाप्रतिगृह्णीयादितिवशिष्ठोक्तेः मातापितावादद्यातांयमद्भिःपुत्रमापदि ॥

सदृशंप्रतिसंयुक्तंसज्ञेयोदत्रिमःसुतइतिमनूक्तेः ( तत्रैववशिष्ठः ) नत्वेवैकंपु
त्रंदद्यात्प्रति गृह्णीयाद्वानस्त्रीपुत्रंदद्यात् प्रतिगृह्णीयाद्वाअन्यत्रानुज्ञानाद्भर्तुरि
ति । इदंचभर्तृसत्वे अन्यथादद्यान्मातापितावायंसपुत्रोदत्रिमःस्मृतइतिवच स
व्यासवचोविरोधःस्यात् ॥ दानंप्रतिग्रहोपलक्षणं ॥ यत्तु । समंत्रकहोमस्यपुत्रप्र
तिग्रहांगत्वात् ॥ व्याहृत्यादिमंत्रपाठेचस्त्रीशूद्रयोरनधिकारात् । तयोर्दत्तकपु
त्रोनभवत्येवेतिशुद्धिविवेकेरुद्रधरेणोक्तं ॥ वाचस्पतिश्चैवमेवाह । तन्न । भर्तु
रनुज्ञयास्त्रियाअपिप्रतिग्रहोक्तेः । यद्यपिमेधातिथिनाभार्यात्ववदद्दृष्टरूपंदत्त
कत्वंहोमसाध्यमुक्तं। स्त्रियाश्चहोमासंभवस्तथापिव्रतादिवद्विप्रद्वाराहोमादि
कारयेदितिहरिनाथादयः । संबंधतत्त्वेप्येवं । एवंशूद्रस्यापि ॥ स्त्रीशूद्राश्चसध
र्माणइतिस्मृतेः ॥ अतएवशूद्रकर्तृकहोमोविप्रद्वारैवपराशरेणोक्तः ॥ दक्षि
णार्थंतुयोविप्रःशूद्रस्यजुहुयाद्धविः । ब्राह्मणस्तुभवेच्छूद्रःशूद्रस्तुब्राह्मणोभवेत्
(अत्रमाधवाचार्यः)योविप्रःशूद्रदक्षिणामादायतदीयंहविःशांतिपुष्ट्यादिसिद्ध
येवैदिकैर्मंत्रैर्जुहोति।तस्यविप्रस्यैवदोषः ॥ शूद्रस्तुहोमफलंलभतैवेतिव्याचक्ष
ते॥ दत्तकेविशेषः (कालिकापुराणे) पितुर्गोत्रेणयःपुत्रःसंस्कृतःपृथिवीपते ॥
आचूडांतंनपुत्रःसपुत्रतांयातिचान्यतः ॥ चूडोपायनसंस्कारानिजगोत्रेणवैकृताः
दत्ताद्यास्तनयास्ते स्युरन्यथादासउच्यते ॥ ऊर्ध्वंतु पंचमाद्वर्षान्नदत्ताद्याः
सुतानृप । गृहीत्वापंचवर्षीयंपुत्रेष्टिंप्रथमंचरेत् ॥ पंचमोर्ध्वंस्वदानेच्छोरेवदा
नंनचान्यथा । विक्रयंचैवदानंचननेयाःस्युरनिच्छवः ॥ दाराःपुत्राश्चसर्वस्वमा
त्मनैवतुयोजयेदितिहेमाद्रिमाधवधृतव्यासदक्षादिवचनात् ( यच्चयाज्ञवल्क्यः )
स्वंकुटुंबाविरोधेन देयंदारसुतादृतइति ॥ तदूर्ध्वंस्वदानानिच्छुपुत्रपरम् ॥ तेन
सर्वस्वदानेस्वदानेच्छुदारपुत्रदानंसिद्धम्॥ यत्तु ॥ विश्वविदधिकरणेक्षये । तत्र
पुत्रादीनांज्ञातित्वेनस्वशब्दवाच्यत्वात्पुत्रत्वेनदानमाशंक्यानिराकृतम् ॥ जन्य
पुंस्त्वस्यदानेनानिष्पत्तेः । दासत्वेनदानंभवत्येव ।तस्माद्यथेष्टविनियोगार्हत्वंस्व
त्वंभवत्येव । पुत्रेस्वत्वाभावंवदन्पुत्रक्रयविक्रयादिशुनःशेपविक्रयादिश्रौतलिं
गाद्दासक्रयविक्रयादिव्यवहारायोगात् ॥ सूर्वएव ॥ योनहिश्रभायारणःशे

वोन्वोदर्योमनसामंतवाउइतिश्रुतौदत्तकनिषेधः ॥ सोप्यौरसातिशयार्थः ॥ अ
न्यथाशुनःशेपादिप्रतिग्रहश्रौतलिंगविरोधापत्तेः ।उपेयांतवपुत्रतामित्युक्तेः ॥
इदंचश्रौतलिंगंस्वयंदत्तक्रीतपरं । नदत्तकपरं ॥ द्वादशविधपुत्रमध्येदत्तात्मातु
स्वयंदत्तः । क्रीतश्चताभ्यांविक्रीतइतियाज्ञवल्क्येनतयोर्दत्तकाद्भेदोक्तेः ॥ तयो
श्चदत्तौरसेतरेषांतुपुत्रत्वेनपरिग्रहइतिकलौनिषेधात्तेनसंस्कारोत्तरं स्वयंक्रीतो
नभवति ॥ तदुत्तरं ॥ दत्तकोनभवत्येवेतिसिद्धम् ॥ अथयमलयोःसंस्कारक्रमा
र्थंज्येष्ठकनिष्ठभावउच्यते ( मनुः ) पुत्रःकनिष्ठोज्येष्ठायांकनिष्ठायांचपूर्वजः ॥
कथंतयोर्विभागःस्यादितिचेत्संशयोभवेत् ॥ सदृशःस्त्रीप्रजातानांपुत्राणामवि
शेषतः । नमातृतोज्यैष्ठ्यमस्तिजन्मतोज्यैष्ठ्यमुच्यते ॥ तेनकनिष्ठायांपूर्वंजात
एवज्येष्ठोनज्येष्ठायांपश्चाज्जातइत्यर्थः ॥ सएवश्राद्धाधिकारी ॥ जन्मज्येष्ठेन
चाह्वानंसुब्रह्मण्यास्वपिस्मृतं । यमयोश्चैवगर्भेषुजन्मतोज्येष्ठतामता ( देवलः)
यस्यजातस्ययमयोःपश्यंतिप्रथमंमुखं ॥ संतानःपितरश्चैवतस्मिन्ज्यैष्ठ्यं प्रति
ष्ठितम् (भागवतेतु) द्वौतदाभवतोगर्भासूतिर्वशाविपर्ययादित्युक्तेः ॥ पश्चादुत्प
न्नस्यज्यैष्ठ्यमुक्तं ॥ अत्रदेशाचारतोव्यवस्था ॥ पूर्वमेवतुयुक्तंगर्भाष्टमइत्यादौ
विशेषनिर्देशादेवगर्भग्रहणंनान्यत्र ॥ अन्यथातद्वैयर्थ्यात् ( अथसूतिकास्नानं ॥
ज्योतिषे ) करेंद्रभाग्यानिलवासवांत्यमैत्रेंदवाश्विध्रुवभेहिपुंसां ॥ तिथावरिक्ते
शुभसाममंतिप्रसूतिकास्नानविधिंमुनींद्राः(अथनामकर्म॥ मदनरत्नेबृहस्पतिः)
द्वादशेदशमेवापिजन्मतोपित्रयोदशे ॥ षोडशेविंशतौचैवद्वात्रिंशेवर्षतःक्रमात्
(याज्ञवल्क्यः) अहन्येकादशेनाम (हेमाद्रौभविष्ये) नामधेयंदशम्यांतुद्वादश्यां
मासिकेचन । अष्टादशेहनितथावदंत्यन्येमनीषिणः ॥ दशम्यामतीतायामिति
ज्ञेयं । आशौचापगमेनामधेयमितिविष्णूक्तेः (गृह्यपरिशिष्टेपि ) जननाद्दश
रात्रेव्युष्टेशतरात्रेसंवत्सरेवानामकरणं ॥ व्युष्टेतीते ( ज्योतिर्निबन्धेगर्गः )
असंक्रांतिविष्ट्यादौ प्राप्तकालेपिनाचरेत् ( श्रीधरः ) मित्रादित्यमघोत्तरा
मृतभिषक्स्वातीश्विनीवाच्युतप्राजेशार्कशशांकपौष्णादितत्कपुष्येषुराशौस्थि
रे ॥ रिक्तांपंचदशींविहायनवमींशुद्धेष्टमेभार्गवज्ञाचार्यामृतपादआद्यदिवसेनामा

न्निकुर्याच्चिक्षणोः (मनुः) शर्मांतंब्राह्मणस्यस्याद्धर्मांतंक्षत्रियस्यतु । वैश्यस्यधनसंयुक्तं शूद्रस्यप्रेष्यसंयुतं (मदनरत्नेनारदीये) सूतकांतेनामकर्मविधेयंस्वकुलोचितं । नामपूर्वंतुमासस्यमंगलंतुसमाक्षरैः (तत्रैवगार्ग्यः) मासनामगुरोर्नामदद्याद्बालस्यवैपिता (स्मृतिसंग्रहे) कृष्णोनंतोच्युतश्चक्रीवैकुंठोथजनार्दनः । उपेंद्रोयज्ञपुरुषोवासुदेवस्तथाहरिः ॥ योगीशःपुंडरीकाक्षोमासनामान्यनुक्रमात् ॥ अत्र मार्गशीर्षादिश्चैत्रादिर्वाक्रमइति (मदनरत्ने) तन्मासनामप्रथमंदद्यात्संबुध्यचैवहि । देवालयगजाश्वानांवृक्षाणांवापिकूपयोः ॥ सर्वापणानांपुरायानांचिह्नार्थयोषितांनृणां । काव्यानांचकवीनांचपश्वादीनांचसर्वशः ॥ राजप्रासादवास्तूनांनामकर्मविशिष्यते ॥ नाक्षत्रमपिनामकार्यं ॥ अभिवादनीयंचसमीक्षेततन्मातापितरौविद्यातामोपनयनादित्याश्वलायनोक्तेः ॥ कुलदेवतानक्षत्रसंबद्धंपितानामकुर्यादितिमदनरत्नेशंखोक्तेः तच्चनक्षत्रपादाक्षराद्याक्षरंकुर्यादित्युक्तंपारिशिष्टे तदक्षरादिकंनामयस्मिन्नधिष्ठायेयदाक्षरमिति (सुदर्शनभाष्येतु) रोरेमनृज्येविसुवृद्धिरादैष्ठांत्येचवांतेश्रवणाश्वयुक्षु ॥ शेषेषुनाम्नोःकपरःस्वरोंत्यःस्वाप्चारदीर्घःसविसर्गइष्टः ॥ इत्युक्तंष्ठांत्येतिप्रोष्ठपदेत्यत्रादौष्ठात्परेचवृद्धिःप्रौष्ठपादइति ॥ अंत्यमपभरणीशब्दःश्रुतावुक्तः ॥ तत्रश्रवणादौचवादिवृद्धिः । अपभरणाआपभरणाइत्यादि (मदनरत्नेवशिष्ठः) जन्माहेद्वादशाहेवादशाहेवाविशेषतः । उत्तरारेवतीहस्तमूलपुष्यासवारुणाः ॥ श्रवणादितिमैत्रंचस्वातीमृगशिरस्तथा ॥ प्राजापत्यंधनिष्ठाचप्रशस्तानामकर्मणि (अथदोलारोहः ॥ पारिजातेबृहस्पतिः) दोलारोहस्तुकर्तव्योदशमेद्वादशेपिवा । षोडशेदिवसेवापिद्वाविंशेदिवसेपिवा (ज्योतिर्निबंधे) करत्रयेवैष्णवरेवतीषुदितिद्वयेवाश्विनकध्रुवेषु ॥ कुर्याच्छिशूनांनृपतेश्चतद्वदांदोलनंवैसुखिनोभवंति (तत्रैव) आंदोलाशयनेपुंसोद्वादशोदिवसःशुभः । त्रयोदशस्तुकन्यायानानक्षत्रविचारणा ॥ अन्यस्मिन्दिवसेचेत्स्यात्तिर्यगास्येप्रशस्यते (अथदुग्धपानम् ॥ नृसिंहः) एकत्रिंशद्दिनेचैवपयःशंखेनपाययेत् । अन्नप्राशननक्षत्रेदिवसोदयराशिषु (अथकर्णवेधःमदनरत्नेवशिष्ठश्रीधरौ) मासेषष्ठेसप्तमेवाष्टमेवावेध्यौकर्णौद्वादशेषोडशेह्नि ॥ मध्येनाह्नःपूर्व

भागेनरात्रौ नक्षत्रेद्वेद्वेतिथीवर्जयित्वा ॥ अत्रजन्ममासोवर्ज्यः (ज्योतिर्निबंधे गर्गः) मासेषष्ठेसप्तमेवाप्यष्टमेमासिवत्सरे । कर्णवेधंप्रशंसंति पुष्ट्यायुःश्रीविवृद्धये(मदनरत्ने)प्रथमेसप्तमेमासिअष्टमेदशमेथवा द्वादशेचतथाकुर्यात्कर्णवेधंशुभावहं (हेमाद्रौव्यासः) कार्तिकेपौषमासेवाचैत्रेवाफाल्गुनेपिवा । कर्णवेधंप्रशंसंतिशुक्लपक्षेशुभेदिने (श्रीधरः) हरिहयकरचित्रासौम्यपौष्णोत्तरार्यादितिवसुयुघटालीसिंहवर्ज्येसुलग्ने । शशिगुरुबुधकाव्यानांदिनेपर्वरिक्तारहिततिथिषुशुद्धेनैधनेकर्णवेधः(मदनरत्नेबृहस्पतिः) द्वितीयादशमीषष्ठीसप्तमीचत्रयोदशी । द्वादशीपंचमीशस्तातृतीयाकर्णवेधने । सौवर्णीराजपुत्रस्यराजतीविप्रवैश्ययोः । शूद्रस्यचायसीसूचीमध्यमाष्टांगुलात्मिका (हेमाद्रौदेवलः) कर्णरंध्रेरवेश्छायानविशेदग्रजन्मनः।तद्दृष्ट्वाविलयंयांतिपुण्यायाघौघ्चपुरातनाः(शंखः) अंगुष्ठमात्रसुषिरौकर्णौनभवतोयदि । तस्मैश्राद्धंनदातव्यंदत्तंचेदासुरंभवेत (अथतांबूलभक्षणं ॥ चंडेश्वरः) सार्धमासद्वयेदद्यात्तांबूलंप्रथमंशिशोः ॥ कर्पूरादिकसंमिश्रंविलासायहितायच । मूलार्काश्विचित्रकरतिष्यहरींद्रभेषुपौष्णोतथासृगशिरोदितिवासवेषु । अर्केन्दुजीवभृगुबोधनवासरेषुतांबूलभक्षणविधिर्मुनिभिःप्रदिष्टः (अथनिष्क्रमणं ॥ ज्योतिर्निबंधे) तृतीयेवाचतुर्थेवामासिनिष्क्रमणंभवेत (यमः) ततस्तृतीयेकर्तव्यंमासिसूर्यस्यदर्शनं । चतुर्थेमासिकर्तव्यंशिशोश्चंद्रस्यदर्शनं । अत्रसूर्येन्द्वोःकर्मणीयेत्तयोःश्राद्धंनविद्यतइतिछंदोगपरिशिष्टात्तच्छंदोगानांनिष्क्रमणेवृद्धिश्राद्धंनास्तीतिकल्पतरुः(व्यासः)मैत्रेपुष्यपुनर्वसुप्रथमभेपौष्णानुकूलेविधौहस्तेचैवधनेश्वरेचमृगभेताराःशुभास्तासुच॥कुर्यान्निष्क्रमणंशिशोर्बुधगुरोशुक्रेविरिक्तेतिथौ कन्याकुंभतुलामृगारिभवनेसौम्यग्रहालोकिते (मदनरत्ने)अन्नप्राशनकालेवाकुर्यान्निष्क्रमणक्रियां(विष्णुधर्मे)दिगीशानांदिनेतत्रतथाचंद्रार्कयोर्द्विजैः। पूजनंवासुदेवस्यगगनस्यचकारयेत । बहिर्निष्क्रमणसमयेदुर्गेहातशंखपुण्याहनिःस्वनैः।चंद्रार्कयोर्दिगीशानांदिशांचगगनस्यच॥निक्षेपार्थमिमंदाम्रतेमेरक्षंतुसर्वदा ॥अप्रमत्तंप्रमत्तंवा दिवारात्रमथापिवा ॥ रक्षंतुसततंसर्वे देवाःशक्रपुरोगमाः( माधवीयेमार्कंडेयः ) अप्रतीथप्रविन्यस्यशिल्पभां

डानिसर्वशः । शस्त्राणिचैववस्त्राणिततःपश्येत्तु लक्षणं ॥ प्रथमंयत्स्पृशेद्बालस्ततोभांडंस्वयंतदा ॥ जीविकातस्यबालस्यतेनैवतुभविष्यतीति ( अथोपवेशनं प्रयोगपारिजातेपाद्मेविष्णुधर्मेच ) पंचमेचतथामासि भूमौतमुपवेशयेत् । तत्रसर्वेग्रहाःशस्ताभौमोप्यत्रविशेषतः ॥ उत्तरात्रितयंसौम्यपुष्यर्क्षशाक्रदैवतं । प्राजापत्यंचहस्तश्चप्रशस्तमाश्विनमित्रभं ॥ वाराहंपूजयेद्देवंपृथिवींचतथाद्विजं ॥ रक्षैनंवसुधेदेविसदासर्वगतंशुभे ॥ आयुःप्रमाणंसकलंनिक्षिपस्वहरिप्रिये । अचिरादायुषस्त्वस्ययेकेचित्परिपंथिनः ॥ जीवितारोग्यवित्तेषु निर्दहस्वाचिरेणतान्॥वरेण्याशेषभूतानांमातात्वमसिकामधुक् ॥ अजराचाप्रमेयाचसर्वभूतनमस्कृता ॥ चराचराणांभूतानांप्रतिष्ठानाव्ययाह्यसि ॥ कुमारंपाहिमातस्त्वं ब्रह्मा तदनुमन्यतां (अथान्नप्राशनं ॥ पारिजातेनारदः) जन्मतोमासिषष्ठेस्यात्सौरेणान्नाशनंपरं । तदभावेष्टमेमासिनवमेदशमेपिवा ॥ द्वादशेवापिकुर्वीतप्रथमान्नाशनंपरं।संवत्सरेवासंपूर्णेकेचिदिच्छंतिपण्डिताः (मदनरत्नेलौगाक्षिः) षष्ठेन्नप्राशनंजातेषुदंतेषुवेति (शंखः) संवत्सरेन्नप्राशनमर्द्धसंवत्सरेवेति (ज्योतिर्निबंधे नारदः)षष्ठेवाप्यष्टमेमासिपुंसांस्त्रीणांतुपंचमे । सप्तमेमासिवाकार्यंनवान्नप्राशनंशुभं॥ रिक्तांदिनक्षयंनंदांद्वादशीमष्टमीममां ॥ त्यक्त्वान्यतिथयःप्रोक्ताःसितजीवज्ञवासराः । चंद्रवारंप्रशंसंतिकृष्णेचांत्यत्रिकंविना (श्रीधरः) आदित्यतिष्यवसुसौम्यकरानिलाश्विचित्राजविष्णुवरुणोत्तरपौष्णमित्राः । बालान्नभोजनविधौदशमेविशुद्धेछिद्रांविहायनवमींतिथयःशुभाःस्युः (वसिष्ठः) बालान्नभुक्तौव्रतबंधनेचराजाभिषेकेखलुजन्मधिष्ण्ये । शुभंत्वनिष्टंसततंविवाहेसीमंतयात्रादिषुमंगलेषु (मार्कंडेयविष्णुधर्मयोः) ब्रह्माणंशंकरंविष्णुंचंद्रार्कौचदिगीश्वरान् । भुवंदिशश्चसंपूज्यहुत्वावह्नौतथाचरुं ॥ देवतापुरतस्तस्यधात्र्युत्संगगतस्यच । अलंकृतस्यदातव्यमन्नंपात्रेसकांचनं ॥ मध्वाज्यदधिसंयुक्तंप्राशयेत्पायसंतुवेति (अथाब्दपूर्तिः ॥ व्यवहारनिर्णये ) नवांबरधरोभूत्वापूजयेच्चचिरायुषं । मार्कंडेयंनरोभक्त्या पूजयेत्प्रयतस्तथा ॥ ततोदीर्घायुषंव्यासं रामंद्रौणिंकृपंबलिं । प्रह्लादंचहनूमंतंविभीषणमथार्चयेत् ॥ स्वनक्षत्रंजन्मतिथिंप्रा

प्यसंपूजयेन्नरः । षष्ठींचदधिभक्तेन वर्षेवर्षेपुनः पुनः ॥ तिथितत्त्वेप्रतन्नाम भिस्तिलहोमोप्युक्तः ( आदित्यपुराणे ) सर्वैश्चजन्मदिवसेस्नातैर्मङ्गलवारि भिः । गुरुदेवाग्निविप्राश्चपूजनीयाःप्रयत्नतः ॥ स्वनक्षत्रंचपितरौतथादेवःप्र जापतिः । प्रतिसंवत्सरंयत्नात्कर्त्तव्यश्चमहोत्सवः (कृत्यचिंतामणौ) गुडदुग्ध तिलान्दद्याद्धस्तेग्रंथींचबन्धयेत् । गुग्गुलंनिंबसिद्धार्थदूर्वागोरोचनादिकं ॥ संपूज्यभानुर्विघ्नेशौसहर्षीन्प्रार्थयेदिदं। चिरंजीवीयथात्वंभोभविष्यामितथामु ने ॥ रूपवान्वित्तवांश्चैवश्रियायुक्तश्चसर्वदा । मार्कंडेयनमस्तेस्तुसप्तकल्पांत जीवन ॥ आयुरारोग्यसिद्ध्यर्थंप्रसीदभगवन्मुने । चिरंजीवीयथात्वंतुमुनीनांप्र वरद्विज ॥ कुरुष्वमुनिशार्दूलतथामांचिरजीविनं ॥मार्कंडेयमहाभागसप्तकल्पां तजीवन ॥ आयुरारोग्यसिद्ध्यर्थमस्माकंवरदोभव । सतिलंगुडसंमिश्रमंजल्यर्ध मितंपयः ॥ मार्कंडेयाद्वरंलब्ध्वापिबाम्यायुर्विवृद्धयेइतिपयःपिबेत्(तिथितत्त्वे स्कांदे) खंडनंनखकेशानांमैथुनाध्वगमौतथा । आमिषंकलहंहिंसांवर्षवृद्धौवि वर्जयेत् (तत्रैवदीपिकायां) कृतांतकुजयोर्वारेयस्यजन्मतिथिर्भवेत् । अनुक्षयो गसंप्राप्तौविघ्नस्तस्यपदेपदे ॥ कृतांतःशनिः ॥ तस्यसर्वौषधिस्नानंगुरुदेवाग्नि पूजनं (वृद्धमनुः) मृतेजन्मनिसंक्रांतौ श्राद्धेजन्मदिनेतथा । अस्पृश्यस्पर्शने चैवनस्नायादुष्णवारिणा ॥ अत्रजन्मतिथिरौदयिकीग्राह्या ॥ युगाद्यावर्षवृद्धि श्चसप्तमीपार्वतीप्रिया । रवेरुदयमीक्षंतेनतत्रतिथियुग्मतेतिकृत्यतत्त्वार्णववच नात् ॥ विशेषोमत्कृतशूद्रधर्मज्ञेयः (अथकटिसूत्रं ॥ प्रयोगपारिजातेब्राह्मे) प्र तिसंवत्सरांतर्स्ववक्ष्येनृणांविधिंपरं ॥ दत्त्वागोभूहिरण्यादितथास्वर्णादिनिर्मि तं ॥ बध्नीयात्कटिसूत्रंचवासःसंगृह्यनूतनं । दूर्वांकुरैस्तथाज्येनचरुणावापिना विनं । आयुष्यहोमंकृत्वाचतर्पयेत्पितृदेवताः (अथचौलं ॥ प्रयोगपारिजाते षड्गुरुशिष्यः ) जाताधिकाराज्जन्मादितृतीयेब्देतुचौलकं । आद्येब्देकुर्वते केचित्पंचमेब्देद्वितीयके ॥ उपनीत्यासहैवेतिविकल्पाःकुलधर्मतः ( बृहस्प तिः ) तृतीयेब्देशिशोर्गर्भाज्जन्मतोवाविशेषतः । पंचमेसप्तमेवापिस्त्रियापुं सोपिवासमं ( तत्रैवनारदः ) जन्मतस्तुतृतीयेब्दे श्रेष्ठमिच्छंतिपंडिताः ॥ पंचमे

सप्तमेवापिजन्मतोमध्यमंभवेत् ॥ अथमंगर्वतस्यात्तुनवमैकादशेपिवेति (पारिजाते बृहस्पतिः) उत्तरायणगेसूर्येविशेषात्सौम्यगोलके॥ शुक्लपक्षेशुभंप्रोक्तंकृष्णापक्षेशुभेतरत्। अशुभान्यविभागःस्यात्कृष्णपक्षेत्रिधाकृते(तत्रैववशिष्ठः)द्वित्रिपंचमसप्तम्यामेकादश्यांतथैवच। दशम्यांचत्रयोदश्यांकार्यंक्षौरंविजानता(नृसिंहीये) षष्ठ्यष्टमीचतुर्थीचनवमीचचतुर्दशी । द्वादशीदर्शपूर्णेहेप्रतिपच्चैवनिंदिताः (वशिष्ठः)रवेरंगारकस्यैवसूर्यपुत्रस्यचैवहि। निंदितादिवसाःक्षौरेशेषाःकार्यकराःस्मृताः(ज्योतिर्निबंधेबृहस्पतिः) पापग्रहाणांवारादौविप्राणांशुभदंरवौ क्षत्रियाणांतमाःसूनौविट्शूद्राणांशनौशुभं ॥ हस्तात्रिपंचविष्णुपौष्णाश्वचश्रविष्ठादित्यपुष्यभं। सौम्यंचित्रेनवक्षौरेउत्तमानवतारकाः ॥ त्रीण्युत्तराणिवायव्यंरोहिणीवारुणंतथा। क्षौरेश्रामध्यमाःप्रोक्ताःशेषाद्वादशगर्हिताः ॥ निधनेजन्मनक्षत्रेवैनाशेचंद्रमेष्टमे। विपत्करेवधेक्षौरंप्रत्यरेचविवर्जयेत् ॥ अत्रलग्नशुद्धिरन्येचयोगाज्ज्योतिर्विद्भ्योज्ञेयाः । अन्येचविशेषाःप्रथमश्रुकर्मनिर्णये वक्ष्यंते॥ एतच्चशिशोर्मातरिगर्भिण्यांनकार्यम् (तदाहज्योतिर्निबंधेमदनरत्नेचवृद्धगार्ग्यः)पुत्रचूडाकृतौमातायदिस्यागर्भिणीभवेत् । शस्त्रेणमृत्युमाप्नोतितस्मात्क्षौरंविवर्जयेत् ॥ अस्यापवादमाहतत्रैवनारदः ॥ सूनोर्मातरिगर्भिण्यांचूडाकर्मनकारयेत् (पंचाब्दात्प्रागथोर्ध्वंतुगर्भिण्यामपिकारयेत्॥ यदिगर्भविपत्तिःस्याच्छिशोर्वामरणंयदि। सहोपनीत्याकुर्याच्चेत्तदादोषोनविद्यते(बृहस्पतिः )गर्भिण्यांमातरिशिशोःक्षौरकर्मनकारयेत्। व्रताभिषेकेप्येवंस्यात्कालोवेदव्रतेष्वपि ॥ अभिषेकःसमावर्तनं ॥ गर्भिण्यामपिपंचमासपर्यंतंनदोषइत्युक्तं (मुहूर्तदीपिकायांगर्गः )पंचममासादूर्ध्वंमातुर्गर्भस्यजायतेमृत्युरिति (मदनरत्नेबृहस्पतिः) पुत्रचूडाकृतौमातागर्भिणीयदिवाभवेत्। विपद्यतेगुरुस्तत्रदंपतीशिशुरन्ततः ॥ गर्भेमातुःकुमारस्यनकुर्याच्चौलकर्मतु ॥ पंचमासादधःकुर्यादतऊर्ध्वंनकारयेत् (गर्गः) ज्वरस्योत्पादनंयस्यलग्नंतस्यनकारयेत् । दोषनिर्गमनात्पश्चात्स्वस्थोधर्मंसमाचरेत् ॥ लग्नर्मितिमंगलोपलक्षणम् ( ज्योतिर्गर्गः ) विवाहोत्सवयज्ञेषुमातायदिरजस्वला। तदासमृत्युमाप्नोतिपंचमंदिवसंविना ( वशिष्ठः ) यस्यमांग

लिकंकार्यंतस्यमातारजस्वला । अर्थंतदेव ( तत्रैवबृहस्पतिः ) प्राप्तमभ्युदयश्रा द्धंपुत्रसंस्कारकर्मणि । पत्नीरजस्वलाचेत्स्यान्नकुर्यात्तत्पितातदा ॥ पितेतिक र्तृमात्रोपलक्षणं ( संकटेतुवाक्यसारेउक्तं ) अलाभेहमुहूर्तस्यरजोदोषेह्युप स्थिते । श्रियंसंपूज्यविधिवत्ततोमंगलमाचरेत् ॥ एतच्चमंडनोत्तरंनकार्यं ॥ नमं डनाच्चापिहिमुंडनंचगोत्रैकतायाअर्थादिनाब्दभेदइतिमदनरत्नेवशिष्ठोक्तेः ( तत्रैव कात्यायनः ) कुलेऋतुत्रयादर्वाङ् मण्डनान्नतुमुंडनं ॥ प्रवेशान्निर्गमोनेष्टोनकुर्या न्मंगलत्रयम् ( तथावृद्धमनुः ) एकमातृजयोरेकवत्सरेपुरुषस्त्रियोः । नसमा नक्रियांकुर्यान्मातृभेदेविधीयते ( आशौचेतुसंग्रहे ) संकटेसमनुप्राप्तेसूतकेस मुपागते । कूष्मांडाभिधं तंहुत्वागांचदद्यात्पयस्विनीं ॥ चूडोपनयनोद्वाह प्रतिष्ठादिकमाचरेदिति ( ज्योतिर्निबंधे ) षष्ठेब्देषोडशेवर्षेविवाहाब्देतथैव च । अंतर्वत्न्यांचजायायांनेष्यतेमुंडनंक्वचित् ॥ अन्योपिविशेषोविवाहप्र करणेवक्ष्यते ( दीपिकायां ) नचूडाजन्मभाग्नेयदाररणेषुशनौकुजे ॥ प्रतिपद्व द्रिक्तासुविद्यारंभस्तुपंचमे ( प्रयोगरत्ने ) मध्येशिरसिचूडास्याच्छिखानांतुद क्षिणे । उभयोःप्रवरयोर्वैकल्पप्यपानांशिखामता ॥ माधवीयेप्येवं ॥ आपस्तं बस्त्वाह ॥ तूष्णींकेशान्विनीययथर्षिशिखानिदधाति ॥ यथर्षिप्रवरसंख्यया तासांमध्येशिखावर्जमुपनयनेवपनंकार्यं ॥ प्रतिदिशंप्रवपतीत्युपनयनेतेनैवोक्तेः रिक्तोवाएषोनपिहितोयन्मुंडस्तस्मैतदपिधानंयच्छिखेतिश्रुतेः ॥ विशिखो व्युपवीतश्चयत्करोतिनसत्कृतमितिनिषेधाच्च । सत्रेतुवचनात्सशिखंवपनमि तिसुदर्शनभाष्येउक्तं (यत्तु) कुमाराविशिखाइवेतिलिंगंतच्छंदोगपरं (अपरार्के मदनरत्नेचलौगाक्षिः ) दक्षिणतःकमुंजावशिष्ठानामुभयतोत्रिकल्पयपानांमुंडाभृ गवः। पंचचूडाआंगिरसोवाजिमेके । मंगलार्थंशिखिनोऽन्येयथाकुलधर्मंवेति । कमुंजाशिखा । वाजिः केशपंक्तिः (स्मृतिदर्पणे) एकाशिखादक्षिणतोवशिष्ठगोत्रस्यपंचांगिरसोभृगोस्तु ॥ नैकाशिखाकश्यपगोत्रजानांशिखोभयत्रापि यथाकुलंच। एतच्छूद्रातिरिक्तविषयंशूद्रस्यानियताःकेशवेषाइतिवशिष्ठोक्तेः। ( यत्तुपाद्मे नशिखीनोपवीतीस्यान्नोच्चरेत्संस्कृतांगिरमितिशूद्रमुपक्रम्योक्तं

तदसच्छूद्रस्येतिकेचित् ॥ विकल्पइतितुयुक्तं ( अतएवहारीतः ) स्त्रीशूद्रौतुशि खांछित्वाक्रोधाद्वैराग्यतोपिवा । प्राजापत्यंप्रकुर्यातांनिष्कृतिर्नान्यथाभवेत् ॥ एततपरिग्रहपक्षे ॥ अत्रदेशभेदाद्व्यवस्थेतिदिक् ( इत्यौतिर्निबंधे ) नर्मदोत्तरदेशे तुसिंहस्थेदेवमंत्रिणि ॥ शुभकर्मनकुर्वीतनिषेधोनास्तिदक्षिणे ( अत्रभोजनेप्रा यश्चित्तमुक्तंपराशरमाधवीये ) निवृत्तेचूडहोमेतुप्राङ्नामकरणात्तथा । चरे त्सांतपनंभुक्त्वाजातकर्मणिचैवहि । अतोन्येषुतुसंस्कारेषूपवासेनशुद्ध्यति । एते संस्काराःस्त्रीणाममंत्रकाःकार्याः । होमस्तुसमंत्रकइतिप्रयोगपारिजाते ( आ श्वलायनोपि ) होमकर्मतुपुंवत्स्यात्स्त्रीणांचूडाकृतावपीति ( मनुरपि ) अमंत्रका तुकार्येयंस्त्रीणामावृदशेषतइति । होमोप्यमंत्रकइत्येकेसंस्काराः । स्त्रीणामहो मकास्तूष्णींस्युरितिस्मृत्यर्थसारेहोमोनेतिवृत्तिकृत ( अथविद्यारंभःमदनरत्ने नृसिंहः ) अक्षरस्वीकृतिंकुर्यात्प्राप्तेपंचमहायने । उत्तरायणगेसूर्येकुंभमासंविव र्जयेत् ( दीपिकायाम् ) वर्षेपर्जन्यकेकालेषष्ठींरिक्तांशनिंकुजं । अनध्यायान्विना नत्वादेवंग्रन्थकृतंगुरुं ( श्रीधरः ) हस्तादित्यसमीरमित्रपुरजितपौष्णाश्विचित्रा च्युतेऽर्कवारार्कशीदिनोदयादिरहितेराशौस्थिरेचोभये ॥ पक्षेपूर्णनिशाकरेप्र तिपदंरिक्तांविहायाष्टमींषष्ठींसप्तमशुद्धभाजिभवनेप्रोक्ताक्षरस्वीकृतिः ( विष्णुध र्मोत्तरे ) पूजयित्वाहरिंलक्ष्मींतथादेवींसरस्वतीं । स्वविद्यासूत्रकारांश्चस्वांवि द्यांचविशेषतः ॥ एतेषामेवदेवानांनाम्नातुजुहुयाद्घृतम् । दक्षिणाभिर्द्विजेंद्राणां कर्तव्यंचात्रपूजनमितिअथधनुर्विद्यादीपिकायां ) अदितिगुरुयमार्कस्वातिचि त्राश्विनीषुध्रुवहरिवसुमूलेष्विंदुभागांत्यभेषु । शनिशशिबुधवारेविष्णुबोधे पिपौषेशुभमयतिथियोगेचापविद्याप्रदानं ॥ अथानुपनीतस्यविशेषः ( गौतमः ) प्रागुपनयनात्कामचारवादभक्षाइति । भक्षणंलशुनादेरपीतिहरदत्तः ( अपरा र्केवृद्धशातातपः ) शिशोरभ्युक्षणंप्रोक्तंबालस्याचमनंस्मृतं । रजस्वलादिसंस्प र्शेस्नानमेवकुमारके । प्राक्चूडाकरणाद्बालःप्रागन्नप्राशनाच्छिशुः । कुमारक स्तुविज्ञेयोयावन्मौंजीनिबंधनं ( आपस्तंबोपि ) अन्नप्राशनातप्रभृतीभवत्यासं वत्सरादित्येकेइति ॥ गौतमोपि ॥ नतदुपस्पर्शनादाशौचम् । तस्यानुपनीतस्य

यंत्रितः॥नार्यंत्रितश्चतुर्वेदीसर्वाशीसर्वविक्रयी॥ काणाःकूटाश्चकुब्जाश्चदरि
द्राव्याधितास्तथा।सर्वेश्राद्धेनियोक्तव्यामिश्रितावेदपारगैः(अथर्वविप्रनिमंत्रणम
चंद्रिकायांवाराहे)वस्त्रशौचादिकर्तव्यंश्वःकर्तास्मीतिजानता॥ स्थानोपलेपनंकृ
त्वाततोविप्रान्निमंत्रयेत ॥ दंतकाष्ठंचविसृजेद्ब्रह्मचारीशुचिर्भवेत (तत्रैवप्रचे
ताः)दक्षिणांचरणांविप्रःसव्यंवैक्षत्रियस्तथा॥पादावादायवैश्योद्वौशूद्रःप्रणतिपू
र्वकम (बृहस्पतिः) उपवीतीततोभूत्वादेवार्थंतुद्विजोत्तमान ॥ अपसव्येनपित्र्ये
थस्वयंशिष्योथवासुतः(प्रचेताः) सवर्णंप्रेषयेदाप्तंद्विजानांतुनिमंत्रणे (पृथ्वीचं
द्रोदयेस्कांदे) राजकार्येनियुक्तस्यबंधनिग्रहवर्त्तिनः॥ व्यसनेषुचसर्वेषुश्राद्धंवि
प्रेणकारयेत (चंद्रिकायांयमः) अभोज्यंब्राह्मणस्यान्नंवृषलेननिमंत्रितम॥ तथै
ववृषलस्यान्नंब्राह्मणेननिमंत्रितम (तत्रैवपैठीनसिः )सप्तपंचद्वौवाश्रोत्रियान्नि
मंत्रयेत (अश्वलायनसूत्रेपि)एकैकमेकैकस्यद्वौद्वौत्रींस्त्रीन्वावृद्धौफलभूयस्त्वंद्वा
र्विति (वृद्धिश्राद्धेगौतमः)नवावरानभोजयेदयुजोवायथोत्साहम (याज्ञवल्क्यः)
द्वौदैवेप्राकत्रयः पित्र्येउदगेकैकमेववा । मातामहानामप्येवंतंत्रंवावैश्वदेविकम
(दीपकलिकायांपराशरः)संपत्तावर्थपात्राणामेकैकस्यत्रयस्त्रयः॥पित्रादेर्ब्राह्म
णाःप्रोक्ताश्चत्वारोवैश्वदेविके (वृद्धयाज्ञवल्क्यः) दशैकंपंचवाविप्रानपार्वणे
विनियोजयेत। अत्रवैश्वदेवेद्वौचतुरोवोपवेश्यपित्रादीनामेकैकस्यस्थानेएकंत्री
न्पंचसप्तनववोपवेशयेदितिनक्षुसार्यः ( मनुः) द्वौदैवेपितृकृत्येत्रीनेकैकमुभय
त्रवा । भोजयेत्सुसमृद्धोपिनप्रसज्येतविस्तरे। सत्क्रियांदेशकालौचशौचंब्राह्म
णसंपदम ॥ पंचैतान्विस्तरोहंतितस्मान्नेहेतविस्तरम(पृथ्वीचंद्रोदयेशातातपः)
द्वौदैवेथर्वणौ विप्रौप्राङ्मुखावुपवेशयेत ॥ पित्र्येतूदङ्मुखांस्त्रींश्च बह्वृचा
ध्वर्युसामगान (अत्यशक्तौहेमाद्रौदेवलः)एकेनापिहिविप्रेणषट्पिंडंश्राद्धमाचरे
त ॥ षडर्घ्यान्दापयेत्तत्रषड्भ्योदद्यात्तथाहविः(गोभिलः) यद्येकंभोजयेच्छ्राद्धे
छंदोगंतत्रभोजयेत । ऋचोयजूंषिसामानित्रितयंतत्रविद्यते ( अत्रवैश्वदेवेविशेष
माहतत्रैववशिष्ठः ) यद्येकंभोजयेच्छ्राद्धेदैवंतत्रकथंभवेत ॥ अन्नंपात्रेसमुद्धृत्यस
र्वस्यप्रकृतस्यच ॥ देवतायतनेकृत्वाततःश्राद्धंसमाचरेत ॥ प्रास्येदग्नौतदन्नंतुद

द्याद्ब्रह्मचारिणो ॥ एतच्चसपिंडीकरणवर्ज्यंज्ञेयम् । नत्वेवैकंसर्वेषांकाममना
द्येइत्याश्वलायनोक्तेः (अस्यार्थउक्तोनारायणवृत्तौ) आद्यंसपिंडीकरणंतद्वर्जेषु
श्राद्धेषुकामंत्रयाणामेकंभोजयेत् ॥ सपिंडीकरणेतुनियतंत्रिभिर्भवितव्यमिति ।
अनाद्येपार्वणवर्जितेवा । अभोजनेआमहेमश्राद्धादौवा । अन्नाभावेतिव्याख्यां
तरंतन्नैवज्ञेयम् (कारिकापि) दैवेपित्र्येथवैकैकंसपिंडीकरणंविनेति (अत्रैकवि
प्रेसाग्नेर्विशेषमाहपृथ्वीचंद्रोदयेप्रचेताः) एकस्मिन्ब्राह्मणेदैवेसाग्नेरग्निर्भवे
त्सदा ॥ अनग्नेःकुशमुष्टिःस्याच्छ्राद्धकर्मणिसर्वदा (सर्वथाविप्रालाभेतत्रैवहेमा
द्रौवसत्यव्रतः) निधायदर्भनिचयमासनेषुसमाहितः ॥ प्रैषानुप्रैषसंयुक्तंसर्वंश्रा
द्धंप्रकल्पयेत् ॥ अत्रप्राप्त्यभावात्सत्रेइवकर्तृत्वकार्येयजमानविधौनदक्षिणेतिके
चित्तन्न । अदृष्टार्थायाःदक्षिणायाःप्राप्तेः । सर्वतोत्विजरेतुभ्यंयच्चश्राद्धसदक्षिणा
मितिपाद्मात् ॥ विदध्याच्छ्रौत्रमन्यश्चेद्दक्षिणार्द्धहरीभवेत् ॥ स्वयंचेदुभयंकुर्याद
न्यस्मैप्रतिपादयेदितिछंदोगपरिशिष्टाच्च (एवंयतिश्राद्धेपिकात्यायनः) यज्ञ
वस्तुनिमुष्टौचस्तंबेदर्भवटौतथा ॥ दर्भसंख्यानविहितापिष्टरास्तरणेषुच (सति
श्राद्धेतुविप्रालाभेसुवासिन्योपिभोजनीयाइत्याहापरार्केवृद्धवसिष्ठः) सतिश्रा
द्धेतुविप्राणामलाभेपूजयेदपि ॥ पतिपुत्रान्विताभव्यायोषितोष्टौकुलोद्भवाइति॥
अथावितिवृद्धिश्राद्धविषयम् (पाद्मेउत्तरखंडे) सकृदभ्यर्चितंलिंगंशालग्रामशि
लांचयः ॥ पीठेसंस्थापयित्वातुश्राद्धंचक्रुःतेनरः ॥ पितरस्तस्यतिष्ठंतिकल्प
कोटिशतंदिवि (चंद्रिकायांमात्स्ये) पठन्निमंत्र्यनियमान्श्रावयेत्पैतृकान्बुधः ॥
अक्रोधनैःशौचपरैःसततंब्रह्मचारिभिः ॥ भवितव्यंभवद्भिश्चमयाचश्राद्धकारि
णा (यत्तुमनुः) सर्वायासविनिर्मुक्तैःकामक्रोधविवर्जितैः ॥ भवितव्यंभवद्भिर्नः
श्वोभूतेश्राद्धकर्मणीतितत्पूर्वेद्युर्निमंत्रणपरंनतदह्नः (तद्देवलः) असंभवेपरेद्यु
र्वाब्राह्मणांस्तान्निमंत्रयेत् । अज्ञातीनसमानार्षान्युग्मानात्मशक्तितः (कात्याय
नः) अनिंद्येनामंत्रितोनापक्रामेत्केतनंगृह्यशक्तःअथश्राद्धकर्तृभोक्तृनियमाः (त
त्रानिमंत्रितविप्रत्यागेऽपरार्केयमः) केतनंकारयित्वातुयोतिपातयतिद्विजम् ॥ ब्र
ह्महत्यामवाप्नोतिशूद्रयोनौचजायते ॥ आमंत्र्यब्राह्मणांयस्तुयथान्यायंनपूजये

त ॥ अतिकृच्छ्रात्सुघोरात्तु तिर्यग्योनिषु जायते (प्रमादात्त्यागेतुहारीतः) प्रमादा
द्विस्मृतंज्ञात्वाप्रसाद्यैनंप्रयत्नतः ॥ तर्पयित्वायथान्यायंसर्वंतत्फलमश्नुते (प्रमा
दाभावेतुनारायणः) एकस्मिन्नेनसिप्राप्तेब्राह्मणोनियतःशुचिः ॥ यतिचांद्रा
यणंकृत्वातस्मात्पापात्प्रमुच्यते ( यमः ) आमंत्रितस्तुयोविप्रोभोक्तुमन्यत्रग
च्छति ॥ नरकाणांशतंगत्वाचांडालेष्वभिजायते (तत्रैवदेवलः) पूर्वंनिमंत्रितो
ऽन्येननकुर्यादन्यप्रतिग्रहम् ॥ भुक्त्वाहारोऽथवाभुंक्तेसुकृतंतस्यनश्यति (यदिविप्रो
विलंबेततदोक्तमादित्यपुराणे) आमंत्रितश्चिरंनैवकुर्याद्विप्रःकदाचन ॥ देवता
नांपितॄणांचदातुरन्नस्यचैवहि ॥ चिरकारीभवेद्द्रोहीपच्यतेनरकाग्निना (पृ
थ्वीचंद्रोदयेयमः) निमंत्रितस्तुयोविप्रोह्यध्वानंयातिदुर्मतिः ॥ भवंतिपितरस्त
स्यतंमासंपांसुभोजनाः ॥ आमंत्रितस्तुयःश्राद्धेहिंसांवैकुरुतेद्विजः ॥ पितरस्त
स्यतंमासंभवंतिरुधिराशनाः ॥ आमंत्रितस्तुयोविप्रोभारमुद्वहतेद्विजः ॥ पितर
स्तस्यतंमासंभवंतिस्वेदभोजनाः ॥ निमंत्रितस्तुयोविप्रःप्रकुर्यात्कलहंयदि ॥ पि
तरस्तस्यतंमासंभवंतिमलभोजनाः (शंखः) निमंत्रितस्तुयःश्राद्धेमैथुनंसेवतेद्वि
जः ॥ श्राद्धंदत्वाचभुक्त्वाचयुक्तःस्यान्महतैनसा ॥ मैथुनंऋतावपिनिषिद्धं ।
ऋतुकालेनियुक्तोवानैवगच्छेत्स्त्रियंक्वचित् ॥ तत्रगच्छन्नवाप्नोतिह्यनिष्टानिफ
लानिवैतितत्रमाधवीयेचवृद्धमनूक्तेः ॥ श्राद्धंकरिष्यन्कृत्वावाभुक्त्वावापि
निमंत्रितः ॥ उपोष्यचतथाभुक्त्वानोपेयाचऋतावपि ॥ भोक्ष्यन्करिष्यन्श्वः
श्राद्धंपूर्वरात्रौप्रयत्नतः ॥ व्यवायंभोजनंचापिऋतावपिविवर्जयेदितितत्रैवाश्व
लायनोक्तेश्च (विज्ञानेश्वरस्तु) श्राद्धेऋतौगच्छतोपिनदोषइत्युक्तंतत्स्वगति
कगतित्वेज्ञेयं ( बृहस्पतिः) द्विनिशंब्रह्मचारीस्याच्छ्राद्धकृद्ब्राह्मणैःसह ॥ अ
न्यथावर्तमानौतुस्यातांनिरयगामिनौ ॥ पुनर्भोजनमध्वानंभारमायासमैथुनं ॥
श्राद्धकृच्छ्राद्धभुक्चैवसर्वमेतद्विवर्जयेत् ॥ स्वाध्यायंकलहंचैवदिवास्वापंतथैवच
(यत्तु श्राद्धकारिकायांपुराणसमुच्चये)कृत्वातुरुधिरस्रावंनदद्यान्नश्राद्धमाचरेत्॥
एकंद्वेत्रीणिवाविद्वान्दिनानिपरिवर्जयेदितितन्निर्मूलम् (पृथ्वीचंद्रोदयेयमः )
पुनर्भोजनमध्वानंभाराध्ययनमैथुनम् ॥ संध्यांप्रतिग्रहंहोमंश्राद्धभोक्ताऽष्टवर्जयेत्॥

इतिसंध्यानिषेधःप्रायश्चित्तात्पूर्वंज्ञेयः(यथाहोशना:)दशकृत्वःपिबेदापोगा यत्र्याश्राद्धभुग्द्विजः ॥ ततःसंध्यामुपासीतजपेच्चजुहुयादपि (गौडास्तु) सायंसं ध्यांपरान्नंचछेदनंचवनस्पतेः ॥ अमावास्यांनकुर्वीतरात्रिभोजनमेवच ॥ द्यूतंच कलहंचैवसायंसंध्यांदिवाशयं ॥ श्राद्धकर्ताचभोक्ताचपुनर्भुक्तिंचवर्जयेदिति कामधेनौवराहाद्युक्तेः ॥ श्राद्धकर्तुरपिसायंसंध्यानिषेधमाहुः ॥ शिष्टास्तुनि र्मूलत्वमाहुः॥ होमनिषेधस्तुस्वविषयः ॥सूतकेचप्रवासेचअशक्तौश्राद्धभोजने॥ एवमादिनिमित्तेषुहावयेन्नतुहापयेदितिच्छंदोगपरिशिष्टात्(तत्रैवादित्यपुराणे) निमंत्रितस्तुनश्राद्धे कुर्याद्भार्यादिताडनं (चंद्रिकायांप्रचेताः) श्राद्धभुक्प्रातरु त्थायप्रकुर्याद्दंतधावनं॥श्राद्धकर्तानकुर्वीतदंतानांधावनंबुधः(हेमाद्रौजाबालिः) दंतधावनतांबूलंतैलाभ्यंगमभोजनं॥रत्यौषधपरान्नंचश्राद्धकृत्सप्तवर्जयेदिति(वि ष्णुरहस्ये) श्राद्धोपवासदिवसेखादित्वादंतधावनं ॥ गायत्र्याशतसंपूतमंबुप्रा श्यविशुद्ध्यति ॥ पुनर्भोजनमध्वानंयानमायासमैथुनं ॥ दानप्रतिग्रहौहोमंश्राद्ध भुक्त्वष्टवर्जयेत(सोमोत्पत्तौ)वनस्पतिगतेसोमेयस्तुहिंस्याद्वनस्पतिम॥घोरायांभ्रू णहत्यायांयुज्यतेनात्रसंशयः ॥ एतद्विहितेध्माद्व्यतिरेकेण । वनस्पतिगते सोमेसंधानंयस्तुकारयेत ॥ गावस्तस्यप्रणश्यंतिचिरकालमुपस्थिताः ( वनस्प तिगतस्वरूपमाहपृथ्वीचंद्रोदयेव्यासः) त्रिमुहूर्तंवसेदर्केत्रिमुहूर्तंवसेज्जले॥ त्रिमु हूर्तंवसेद्गोषुत्रिमुहूर्तंवनस्पतौ ( कलिकायांवृद्धमनुः )निमंत्र्यविप्रांस्तदहर्वर्ज येन्मैथुनंक्षुरं ॥ प्रमत्ततांचस्वाध्यायंक्रोधशौचतथानृतम ॥ केचिन्निमंत्रणात्पू र्वंशुद्ध्यर्थंपूर्वेद्युर्हिक्षौरंकुर्वंतितन्नमूलंमृग्यम ( मरीचिः) षष्ठ्यांपर्वसुपक्षादौरि क्ताभद्रार्तिथिष्वपि ॥ पातेश्राद्धे व्रताहेचक्षौरंवर्ज्यंनिशासुच ॥ यदाकर्तुरश क्त्यातत्पुत्रशिष्यादिःश्राद्धंकरोतितदाकर्त्राप्रतिनिधिनाचप्रागुक्तानियमाःका र्याः ॥ नशक्नोतिस्वयंकर्तुंयदाह्यनवकाशतः ॥ श्राद्धं शिष्येणपुत्रेणतदान्येना पिकारयेत ॥ नियमानाचरेत्सोपिनियतांप्रचवसुंधरे ॥यजमानोपितान्सर्वाना चरेत्सुसमाहितइतिहेमाद्रौवाराहोक्तेः ॥ ( स्त्रियस्तुपाद्मे ) मुक्तकच्छातुयाना रीमुक्तकेशीतथैवच ॥ हसतेवदतेचैवनिराशाःपितरोगताः ( आश्वलायनः)

श्राद्धे द्विभोजयेद्वास्तौ न बालानपि यत्नतः ॥ प्राक्पिंडदानाद्गंधाद्यैर्नालंकुर्यात्स्वविग्रहम् ॥ वास्तौ गृहे (अथ श्राद्धवस्तूनि ॥ तत्रादौ कुशाः । पृथ्वीचंद्रोदये दक्षः) समित्पुष्पकुशादीनां द्वितीयः परिकीर्तितः ॥ अत्र धा भक्तदिने द्वितीयो भाग इत्यर्थः (तत्रैव यमः) समूलस्तु भवेद्दर्भः पितॄणां श्राद्धकर्मणि ॥ मूलेन लोकान्जयति शक्रस्य सुमहात्मनः (व्यासः) तर्पणादीनि कार्याणि पितॄणां यानि कानि चित् ॥ तानि स्युर्द्विगुणैर्दर्भैः सपत्रैर्विशेषतः (शालंकायनः) सपिंडीकरणं यावदृजुदर्भैः पितृक्रिया। सपिंडीकरणादूर्ध्वं द्विगुणैर्विधिवद्भवेत् (शंखः) अनन्तगर्भिणं साग्रं कौशं द्विदलमेव च ॥ प्रादेशमात्रं विज्ञेयं पवित्रं यत्र कुत्रचित् (हारीतः) पवित्रं ब्राह्मणस्यैव चतुर्भिर्दर्भपिंजुलैः ॥ एकैकं न्यूनमुद्दिष्टं वर्णे वर्णे यथाक्रमम् (स्मृत्यर्थसारे) सर्वेषां वा भवेत् द्वाभ्यां पवित्रं ग्रथितं नवम् (रत्नावल्याम्) द्वयोस्तु पर्वणोर्मध्ये पवित्रं धारयेद्बुधः (हेमाद्रौ स्कांदे) अनामिकाधृता दर्भा ह्येकानामिकयापि वा ॥ द्वाभ्यामनामिकाभ्यां तु धार्ये दर्भपवित्रके (पवित्राभावे तु तत्रैव सुमंतुः) समूलाग्रौ विगर्भौ तु कुशौ द्वौ दक्षिणे करे ॥ सव्ये चैव तथा त्रीन्वै बिभृयात्सर्वकर्मसु (बौधायनः) हस्तयोरुभयोर्द्वौ द्वावासने पि तथैव च (दर्भग्रहणे मंत्रमाह शंखः) विरिंचिना सहोत्पन्न परमेष्ठिनिसर्गज ॥ नुद सर्वाणि पापानि दर्भ स्वस्तिकरो भव (स्मृत्यर्थसारे) हुंफट्कारेण मंत्रेण सकृच्छित्वा समुद्धरेत् (भारद्वाजः) प्रेतक्रियार्थं पित्रर्थमभिचारार्थमेव च ॥ दक्षिणाभिमुखश्छिंद्यात्प्राचीनावीतिको द्विजः (कुशाभावे ऽपरार्के सुमंतुः) कुशाः काशाः शरो गुंद्रो यवा दूर्वा ऽथ बल्वजाः ॥ गोकेशमुंजकुंदाश्च पूर्वाभावे परः परः (काशादौ विशेषमाह शंखः) काशहस्तस्तु नाचामेत्कदाचिद्विधिशंकया ॥ प्रायश्चित्ते नियुज्येत दूर्वाहस्तस्तथैव च (पृथ्वीचंद्रोदये यमः) मासि मास्युद्धृता दर्भा मासि मास्येव चोदिताः (षट्त्रिंशन्मते) मासेनस्यादमावास्या दर्भा ग्राह्या नवाः स्मृताः (गृह्यपरिशिष्टे) ये च पिंडास्थिता दर्भा यैः कृतं पितृतर्पणम् ॥ अमेध्याशुचिलिप्ता ये तेषां त्यागो विधीयते (लघुहारीतः) पथि दर्भाश्चितौ दर्भा विदर्भा यज्ञभूमिषु ॥ स्तरणासनपिंडेषु षट्कुशान्परिवर्जयेत् ॥ ब्रह्मयज्ञे च ये दर्भा ये दर्भाः पितृतर्पणे ॥ हता

मूत्रपुरीषाभ्यांतेषांत्यागोविधीयते ( हेमाद्रौ ) अन्यानिचपवित्राणिकुशदूर्वा
त्मकानिच ॥ हेमात्मकपवित्रस्यह्येकांनार्हतिवैकलाम् ( अथर्ववि: ) ( हेमा
द्रौप्रचेता: ) कृष्णामाषास्तिलाश्चैवश्रेष्ठा:स्युर्यवशालय: ॥ महायवाव्रीहियवा
स्तथैवचमधूलिका: ॥ कृष्णा:श्वेताश्चलोहाश्चग्राह्या:स्यु:श्राद्धकर्मणि ॥ महा
यवावेणुबीजं । मधूलिकायावनालाइतिहेमाद्रि: ( कल्पतरुश्चभारते) वर्धमा
नंतिलंश्राद्धमक्षय्यंमनुरब्रवीत् ॥ सर्वकामै:सयजतेयस्तिलैर्यजतेपितृन् ( चंद्रि
कायांदेवल: ) इष्टापूर्तेमृताहेचदर्शवृद्ध्यष्टकासुच ॥ पात्रेभ्यस्तेषुकालेषुदेयं
नैवकुभोजनं( सायणीये )अगोधूमंचयच्छ्राद्धंमाषमुद्गविवर्जितं ॥ तैलपक्वेन र
हितंकृतमप्यकृतंभवेत् ( हेमाद्रावत्रि: ) अगोधूमंचयच्छ्राद्धंकृतमप्यकृतंभवेत्
( तत्रैवब्राह्मे ) यवैर्व्रीहितिलैर्माषैर्गोधूमैश्चणकैस्तथा । संतर्पयेत्पितृन्मुद्गै
श्श्यामाकै:सर्षपद्रवै: ॥ नीवारैर्हरिश्यामाकै:प्रियंगुभिरथार्चयेत् ॥(हेमाद्रौका
र्ष्णाजिनि:)यदिष्टंजीवतश्चासीत्तद्द्यात्तस्ययत्नत: ॥ सत्वनोदुत्तरंमार्गंततोया
तिनसंशय: (कालिकायामाश्वलायन:)कदल्यादिफलै:शस्तैर्मूलैरार्द्रादिकैरपि
गोरसैर्मधुनादध्नाश्राद्धेसंतर्पयेत्पितृन् ॥ कदल्याम्रफलादीनिश्राद्धेसंपादयेत्सु
धी: (हेमाद्रौपृथ्वीचंद्रोदयेचमार्कंडेय:) गोधूमैरिक्षुभिर्मुद्गै:सतीनैश्चणकैर
पि ॥ श्राद्धेषुदत्तै:प्रीयंतेमासमेकंपितामहा: ॥ विदारीचभरुंडैश्चतिलै:शृंगा
टकैस्तथा ॥ कंचुकैश्चतथाकंदै:कर्कंधूबदरैरपि॥ पालेवतैरारुकैश्चाप्यक्षोटै:
पनसैस्तथा ॥ काकोल्याक्षीरकाकोल्यातथापिंडालकै:शुभै: ॥ लाजाभिश्च
सधानाभिस्त्रपुसैश्चारुचिर्भटै: ॥ सर्षपाराजकाशाभ्यामिंगुदैराजजंबुभि: ॥
प्रियालामलकैर्मुख्यै:फल्गुभिश्चातिलंटकै: ॥ वेत्रांकुरैस्तालकंदैश्चक्रिका
क्षीरिकावचै: ॥ लोचै:समोचैर्लकुचैस्तथावैबीजपूरकै: ॥ कुंजातकै:पद्मकलै
र्भक्ष्यभोज्यैश्चसंस्कृतै: ॥ रागखांडवचोष्यैश्चत्रिजातकसमन्वितै: ॥ दत्तैस्तु
मासंप्रीयंतेश्राद्धेषुपितरोनृणाम् ॥ एषांकोशहेमाद्र्यादिव्याख्यावैद्यकाद्यनुसारे
णामध्यदेशभाषयानामान्युच्यंते । सतीनै:कलायै: । कलायस्तुसतीनकइत्यमर: ।
वटूरीतिप्रसिद्धे: ॥ विदारीतत्कंदेनभरुंडजलजं । मखाणाइतिश्राद्धमंजर्यां ।

भूकूष्मांडमित्यन्ये । शृङ्गाटकंसिंघाडा । कंचुकःकंचनारः । कंदःसूरणः । आर्शोघ्नःसूरणःकंदइत्यमरः । कर्कंधूःवन्यंसूक्ष्मंबदरं । पालेवतंकोशातकी । आरुकंआरूई । अक्षोटंअखरोटः । काकोलीक्षीरकाकोल्यौगौडेषुप्रसिद्धौ॥ पिंडालकंसुथनी । महाराष्ट्राणांमोहलकंदइतिप्रसिद्धम् । त्रपुसादयस्त्रयःकर्कटीभेदाः । चिर्भटंखर्बुजम् । सर्षपाइतिदीर्घश्छांदसः । प्रियालंचिरौंजी । फल्गुउदुंबरं । तिलंटकंपटोलकं । तालकंदःकंदविशेषः । चक्रिकांतितिणीबिंबा । क्षीरिकाखीरिणी । मोचंकदलीफलं । लकुचंवडहरम् । सुजातकंगौडदेशेप्रसिद्धं । पद्मफलंगट्टा । रागखांडवःपिप्पलीशुंठियुक्तस्तुमुद्गयूषस्तुखांडवः॥ रागखांडवतांयातिशर्करासंयुतंतुतत् इत्युक्तःपानविशेषः ॥ त्रिजातंलवंगैलापत्रकाणि (मदनरत्नेकौर्मे) कालशाकंचवास्तूकंमूलकंकृष्णनालिका॥ प्रशस्तानीतिशेषः।(हेमाद्रौपृथ्वीचंद्रोदयेचवायुपुराणे) कालशाकंमहाशाकंद्रोणाशाकंतथार्द्रकम् ॥ बिल्वामलकमृद्वीकापनसाम्रातदाडिमं ॥ चव्यंपालिवटाक्षोटखर्जूरंचकसेरुकम् ॥ कोविदारश्चकंदश्चपटोलंबृहतीफलं ॥ पिप्पलीमरिचंचैवएलाशुंठीचसैंधवं ॥ शर्करागुडकर्पूरबदरीद्रोणपत्रकं (तथा) मधुकंरामठंचैवकर्पूरंगुडमेवच ॥ श्राद्धकर्मणिशस्तानिसैंधवंत्रपुसंतथा ॥ रामठंहिंगुः ॥ कसेरुःकोविदारश्चतालकंदस्तथाबिसम् ॥ तमालंशतकंदश्चमध्वालुःशीतकंदकम् ॥ कालेयंकालशाकंचसुनिषण्णंसुवर्चलं ॥ मांसंशाकंदधिक्षीरंचांबुवेत्रांकुरस्तथा ॥ कट्फलंकौंकणीद्राक्षालकुचंमोचमेवच ॥ अलाबुग्रीवकंचारंकर्कंधूर्मधुसाह्वयम् ॥ वैकंकतंनारिकेलंशृङ्गाटकपरूषकं ॥ पिप्पलीमरिचंचैवपटोलंबृहतीफलं ॥ एवमादीनिचान्यानिस्वादूनिमधुराणिच ॥ नागरंचार्द्रकंदेयंदीर्घमूलकमेवचेति (तथा) शर्करासीरसंयुक्ताःपृथुकानित्यमक्षयाः ॥ द्रोणशाकंगूमइतिप्रसिद्धम् । मृद्वीद्राक्षा । आम्रातंआंबाडाइतिप्रसिद्धोवृक्षः । तत्फलंचपालिवंतंजंबीरं । पालिआलनितिगौडप्रसिद्धंवा । खर्जूरंखजूरइतिप्रसिद्धम् । कसेरुःजलजःकंदः । कोविदारःकंचनारसदृशः । तालकंदःतालमूली । विसंभसींडं । शतकंदःशतावरी ॥ शीतकंदः । शालुकंसेरुकीतिप्रसिद्धम् । का

लेयंकरालसंज्ञःशाकः । दारुहरिद्रावेति ( पृथ्वीचंद्रोदयः ) सुनिषसांकर्कटी । सुदृशंसुलटीयाइतिगौडप्रसिद्धंसुवर्चलंशाकविशेषः । कट्फलंश्रीपर्णीवृक्षफलं। कौंकणीअम्लरसाद्राक्षा । तिंदुकंडिंडिसमितिकैदेवः । तिंदुफलंवा । ग्रीवकंफलविशेषः । चारंसुद्रतालं । मधुसाह्वयंमधूकपुष्पंफलंवा । वैकंकतंचैंचीतिगौडाख्यातम् । पद्मकंपद्मसमिति प्रसिद्धम् । नागरंशुंठी (पृथ्वीचंद्रोदयेब्राह्मे) आम्रमाम्रातकंबिल्वंदाडिमंबीजपूरकं ॥ प्राचीनामलकंक्षीरंनारिकेरंपरूषकं ॥ नारंगकंचखर्जूरंद्राक्षानीलकपित्थकम् ॥ पतालिफलजातानिश्राद्धेदेयानियत्नतः ( मात्स्ये ) अन्नंतुसदधिक्षीरंगोघृतंशर्करान्वितम् ॥ मासंप्रीणातिसर्वान्वैपितॄन्नित्याहकेशवः ( याज्ञवल्क्यः ) हविष्यान्नेनवैमासंपायसेनतुवत्सरम् ॥ मात्स्यहारिणकौरभ्रशाकुनच्छागपार्षतैः ॥ ऐणरौरववाराहशाशैर्मांसैर्यथाक्रमं ॥ मासवृद्ध्याभितृप्यंतिदत्तैरिहपितामहाः खड्गामिषंमहाशल्कंमधुमुन्यन्नमेवच ॥ लोहामिषंकालशाकंमांसंवाध्रीणसस्यच ( निगमः ) त्रिःपिबंतींद्रियक्षीणंश्वेतंवृद्धमजापतिम् ॥ वाध्रीणसंतुतंप्राहुर्याज्ञिकाःश्राद्धकर्मणि ॥ वाध्रीणसोजरच्छागइतिमेधातिथिःकात्यायनः । छागोस्तनपानालभ्यःशेषाणिक्रीत्वालब्ध्वावास्वयंमृतानांवाहृत्यपचेत । (कौर्मे ) क्रीत्वालब्ध्वास्वयंवाथमृतानाहृत्यवाद्विजः ॥ दद्याच्छ्राद्धेप्रयत्नेनतदस्याक्षय्यमुच्यते ( श्राद्धेदत्तस्यमांसस्याभक्षणेदोषमाहमनुः ) नियुक्तस्तुयथान्यायंयोमांसंनात्तिमानवः । सप्रेत्यपशुतांयातिसंभवानेकविंशतिम् ॥ अत्रबहुवचनेषुश्राद्धेमांसमधुनोःप्राशस्त्योक्तेः ॥ विनामांसेनयच्छ्राद्धंकृतमप्यकृतंभवेदिति हेमाद्रौदेवलोक्तेः । यच्छ्राद्धंमधुनाहीनंतद्रसैःसकलैरपि ॥ मिष्टान्नैरपिसंयुक्तंपितॄणांनैवतन्मये ॥ अणुमात्रमपिश्राद्धेयदिनस्याच्चमाक्षिकम् ॥ नामापिकीर्तनीयस्यात्तत्पितॄणांप्रीतयेतत्त्वइतिहेमाद्रौब्राह्मोक्तेश्च॥ मांसमधुनोःश्राद्धेनियतत्वंगम्यतेगौडनिबंधेमात्स्यसुमंतूक्तेः ॥ मध्वाभावेगुडोदेयःक्षीरस्यचतथादधि ॥ नलभ्यतेघृतंयत्रकुर्यात्घृतवतीजपं ( श्राद्धकालिकायांनागरखंडे ) कथंचिद्यदिविप्रेभ्योनदत्तंभोजनेमधु ॥ पिंडास्तुनैवदातव्याःकदाचिन्मधुनाविना ॥ वृहत्प

रागरस्तुमांसंनिषेधति ॥ यस्तुप्राणिवधंकृत्वामांसैस्तर्पयतेपितॄन ॥ सविद्वां श्चंदनंदग्ध्वाकुर्यादंगारविक्रयम ॥ क्षिप्त्वाकूपेयथाकंचिद्वालमादातुमिच्छति ॥ पतत्यज्ञानतःसोपिमांसेनश्राद्धकृत्तथा ( सएव ) सर्वथान्नंयदानस्यात्तदैवामिषमाश्रयेत ॥ ब्राह्मणश्चस्वयंनाद्यात्तच्चश्रादिहतंयदि ( भागवतेपि ) नदद्यादामिषंश्राद्धेनचाद्याद्धर्मतत्त्ववित मुन्यन्नैःस्यात्पराप्रीतिर्यथानपशुहिंसया ॥ तथेतिशेषः । अत्रकेचित । मुन्यन्नंब्राह्मणस्योक्तंमांसंक्षत्रियवैश्ययोः॥ मधुप्रदानंशूद्रस्यसर्वेषांवाविरोधियदितिहेमाद्रौपुलस्त्योक्त्याःव्यवस्थामाहुः (पृथ्वीचंद्रोदयस्तु ) अक्षतागोपशुश्चैवश्राद्धेमांसंतथामधु ॥ देवराच्चसुतोत्पत्तिःकलौपंचविवर्जयेदितिनिगमोक्तेः ॥ वरातिथिपितृभ्यश्चपशूपाकरणक्रियेतिकलिवर्ज्येषुहेमाद्रावादित्यपुराणात (बृहन्नारदीये) मांसदानंयथाश्राद्धेवानप्रस्थाश्रमस्तथे त्युक्त्वाइमान्धर्मान्कलियुगेवर्ज्यानाहुर्मनीषिणइतिवृहन्नारदीयेभिधानाच्चमांसविधिःकलिव्यतिरिक्तविषयः ॥ कलौमांसनिषेधानांचदेशाचारातव्यवस्था ॥ तथाचभृहन्नारदीयेश्राद्धंप्रकृत्य । यथाचारंप्रदेयंतुमधुमांसादिकंतथा ॥ देशाचाराःपरिग्राह्यास्तत्तद्देशीयजैर्नरैः ॥ अन्यथापतितोज्ञेयःसर्वधर्मबहिष्कृतइति ॥ यस्मिन्देशेपुरेग्रामेत्रैविद्येनगरेपिवा ॥ योयत्रविहितोधर्मस्तंधर्मनविचारयेदितिभृगूक्तेश्चेत्याहुस्तन्न ॥ होलिकाधिकरणन्यायेनदेशविशेषव्यवस्थापकपदकल्पनायोगात । निरूपितंचतत्रपितामहचरणैर्मांसमीमांसायामित्यादिक् ॥ ( मनुः ) संवत्सरंतुगव्येनपयसापायसेनच ॥ वार्ध्रीणसस्यमांसेनतृप्तिर्द्वादशवार्षिकी । त्रिपिबंत्विंद्रियक्षीणंश्वेतंवृद्धमजापतिं । वार्ध्रीणसंतुतंप्राहुर्याज्ञिकाःश्राद्धकर्मणि ॥ ( क्षीरादौविशेषमाहहेमाद्रौसुमंतुः ) पयोदधिघृतं चैवगवांश्राद्धेषुपावनम ॥ महिषीणांघृतंप्राहुःश्रेष्ठंनतुपयःक्वचित(याज्ञवल्क्यः)संधिन्यनिर्दशावत्सागोपयःपरिवर्जयेत ॥ औष्ट्रमैकशफंस्त्रैणमारण्यकमथाविकम ( हेमाद्रौहारीतः ) नवसूतायाःसप्तरात्रादित्येकेदशरात्रादित्यपरेमासेनोपेयुषंभवतीतिधर्मविदः ॥ एतद्रजोभावपरम ( देवलः ) अजाविमहिषीणांतुपयःश्राद्धेषुवर्जयेत । विकारान्पयसश्चैवमाहिषंतुघृतंहितम ( तत्रै

वब्राह्मे ) माहिषं चामरं मार्गमाविकैकशफोद्भवम् । स्त्रैणामौष्ट्रं पाचितं च दधि क्षीरं त्यजेद्घृतम् ॥ सगुडं मरिचाक्तं तु तथा पर्युषितं दधि । दीर्णं तक्रमपेतं च नष्टास्वादं च फेनवत् ( माहिषापवादोपरार्के ब्राह्मे ) देयं तक्रं तु सद्यस्कं नवनीतादनुद्धृतम् । आरण्यमहिषीक्षीरं शर्करासुतिसंयुतम् ॥ मध्वक्तं तु हितं चैव दद्यात्तदमृतं यतः ॥ सुतिः क्षीरसारः । आढकीमुद्गां चैवम् ( यद्यपि याज्ञवल्क्येन ) अन्नं पर्युषितं भोज्यं स्नेहाक्तं चिरसंस्थितम् । अस्नेहा अपि गोधूम यवगोरस विक्रिया इति पर्युषितं दध्यादि भोज्यमुक्तं तथापि गुडमरीचाक्तस्य पर्युषितदोषो ऽभिधीयत इति हेमाद्रिः ( तत्रैव ब्राह्मे ) कालं शाकं तंदुलीयं वास्तुकं मूलकं तथा ॥ शाकमारण्यकं चैव दद्याच्छ्राद्धेषु नित्यशः ॥ तन्दुलीयं सूक्ष्मपत्रमिति हेमाद्रिः ॥ महाराष्ट्राणां माठ इति प्रसिद्धम् ॥ आरण्यकं कांजीचूचादि ( तत्रैव ) दाडिमं मागधीं चैव नागरार्द्रकतिन्तिणीः । आम्रातकं जीरकं च कुवरं चैव योजयेत् ॥ मागधी पिप्पली । नागरं शुंठी । कुवरं कुस्तुम्बरं । धणाया इति प्रसिद्धम् ( वायवीये ) अगस्तस्य शिवास्ताम्राः काथायाः सर्वशश्च । शिवा नवपल्लवाः ( प्रभासखंडे ) आरामस्य तुलसीसंताः कलापाः सर्वशश्च ॥ सोमन्ता नवपल्लवाः ( कौर्मे ) तमालं शतकन्दं च मध्वालुं शीतकन्दली । मध्वालुः मोहलकन्दः । शीतकन्दली रातालु इति प्रसिद्धम् ( अथवर्ज्यं मार्कण्डेयपुराणे ) यच्चोत्कोचादिना प्राप्तं पतिताद्यदुपार्जितम् । अन्यायकन्याशुल्कार्थं द्रव्यं चात्र विगर्हितम् ॥ पित्रर्थं मे प्रयच्छ स्वेत्युक्त्वाथ चाप्युपाहृतं ( चन्द्रोदये शंखः ) भूस्तृणं शिरसा शिग्रु पालक्यं मृचुकन्तथा । कूष्माण्डालाम्बुवार्त्ताक कोविदारांश्च वर्जयेत् ॥ पिप्पलीं मरिचं चैव तथा वै पिण्डमूलकम् । कृतं च लवणं सर्वं वंशाग्रं च विवर्जयेत् ॥ राजमाषान् मसूरांश्च कोद्रवान्कोरदूषकान् । लोहितान्वृक्षनिर्यासान्श्राद्धकर्मणि वर्जयेत् ॥ भूस्तृणं काश्मीरदेशे प्रसिद्धम् । सुरसा निर्गुण्डीति माधवः ॥ तुलसीति पृथ्वीचन्द्रोदयः । सा च भक्ष्यत्वेनानिषिद्धानप्रदत्वेनेति गौडाः ॥ पालंकी पालक इति प्रसिद्धा । मृचुकं जलजः शाकः । समुकमिति पाश्चात्या दरशाक इति हेमाद्रिः । मरीचान्यार्द्राणीति हेमाद्रिः । कृतं लवणं सांभरभिन्नम् । सैंधवं लवणं चैव तथा

मानसहम्भवम । यच्चसामुद्रिकंभवेदिति मूलपाणीपाठः । पवित्रेपरमेह्येतेप्रत्य क्षेऽपिनित्यशइतिवायवीयोक्तेः । मानससाम्भरम ( यत्तुभविष्यम ) तर्जन्या दन्तकाष्ठञ्चप्रत्यक्षंलवणंतथेति । तत्रक्षारलवणंवारिरितिप्रसिद्धंनिषिद्धं ॥ भुक्त्वा तुक्षारलवणंत्रिरात्रन्तुवनेवसेदिति ब्राह्मोक्तेरिति मूलपाणिः । क्षीरलवण मितियावत । क्षीरमिश्रंलवणंनिषिद्धमितिवाचस्पतिः ॥ राजमाषाःरक्तराइति प्रसिद्धाः । कोरदूषकः चणकोद्रवः ( चन्द्रिकायांशंखः ) पिण्डालकंचतुंडी रंकरमर्दञ्चनालिकं । कूष्माण्डंबहुबीजानिश्राद्धेदत्त्वाव्रजत्यधः । पिण्डालकंम हाराष्ट्रे पेण्डरमितिप्रसिद्धम । तुण्डीरंबिम्बीफलमितिकेदेवः । करमर्दंकरवं दमितिप्रसिद्धम । तत्रैव । बिडालोच्छिष्टमाघ्रातंश्राद्धेयत्नेनवर्जयेत । कूष्माण्डं माहिषीक्षीरमाढक्योराजसर्षपाः ॥ चणकाराजमाषाश्चघ्नन्तिश्राद्धंनसंश यः ( वृद्धपराशरः ) करीरफलपुष्पाणि विडंगमरिचानिच । जम्भारिकाम जम्बीरासपक्वम्बीजपूरकम ॥ जंब्वलाबूनिपिप्पल्यःपटोलंपिण्डमूलकम । म सूरांजनपुष्पंचश्राद्धेदत्त्वापतत्यधः ॥ जम्बुसूक्ष्मा ( माधवीयेचतुर्विंशतिमते यावनालान्कुलित्थांश्च वर्जयन्तिविपश्चितः ॥ यावनालाजोंधला ॥ अत्र यानिचशाकादीनिविहितनिषिद्धानितेषांविकल्पः । अन्यथा । श्यामाकैश्च शाकैःशाकैर्नीवारैश्चप्रियंगुभिः । गोधूमैश्चतिलैर्मुद्गैर्मासंप्रीणयतेपितॄ नि ति । गोधूमैरिक्षुभिर्मुद्गैःसतीनैश्चशाकैरपीतिहेमाद्रौकौर्मविष्णुधर्मादिविरो धःस्यात ॥ पिप्पलीमरीचादेस्तुप्रत्यक्षस्यनिषेधोनत्वन्यद्रव्यमिश्रस्य ॥ सौवी रतिकतैलवणादिभिस्तुपाकस्यसिद्धिर्महतीहयैस्तु । तद्बीजपूरानमरिचादि योगात्सिद्धम्प्रदेयंनतुदुष्यतीहेतिपृथ्वीचन्द्रोदयेवृद्धपराशरोक्तेः ( तत्रैव ) दा तुश्चयस्मिंमनसोभिलाषः श्रद्धाभवेद्यच्चदीयमाने । श्राद्धेषुदेयंविधिवत्तदेव तद्दत्तमक्षय्यमितिब्रुवन्ति ॥ एतन्निषिद्धेतरविषयम ( चन्द्रिकायां ) कृष्ण धान्यानिसर्वाणिवर्जयेच्छ्राद्धकर्मणि । नवर्जयेत्तिलांश्चैवमुद्गमाषांस्तथैवच ( मात्स्ये ) मसूरशणनिष्पावराजमाषकुसुम्भिकाः । पद्मबिल्वार्कधत्तूरपारि भद्राटरूषकाः ॥ नदेयाःपितृकार्येषुपयश्चाजाविकन्तथा । कोद्रवोदारवरक

कपित्थमधुकातसी॥ एतान्यपिनदेयानिपितृभ्यःश्राद्धमिच्छता॥ निष्पावाःव
ल्लाः ( यत्तुमार्कंडेयः ) प्रियंगवः कोविदारानिष्पावाश्चात्रशोभनाइतितत्रनि
ष्पावःश्वेतशिंबीतिदानसागरेश्राद्धप्रकाशेचोक्तम् ॥ बिल्वंचरिक्तंनिषिद्धं ॥ जं
बीरंरक्तबिल्वंचशालस्यापिफलंत्यजेदितिब्राह्मोक्तेः ॥ पारिभद्रोनिंबतरुरि
त्यमरः ( रक्तमंदारइतिहेमाद्रिः) आटरूषोवासातपुष्पं । उद्दारःकांचनारः ।म
धूकंज्येष्ठीमधवीतिचंद्रिका । चरकावनमुद्गाः (हेमाद्रौब्रह्मांडे) आसनारूढ
मन्नाद्यंपादोपहतमेवच । अमेध्यैर्जंगमैःस्पृष्टंशुष्कंपर्युषितंचयत् । द्विःस्विन्नंप
रिदग्धंचतथैवाग्रावलेहितम् ॥ शर्कराकीटपाषाणैःकेशैर्यच्चाप्युपद्रुतम् ॥ पि
ण्याकंमथितंचैवतथातिलवणंचयत् ॥ सिद्धाःकृताश्चयेभक्ष्याःप्रत्यक्षलवणी
कृताः । वाससाचावधूतानिवर्ज्यानिश्राद्धकर्मणि ॥ द्विःस्विन्नंयत्सकृत्पाकेनभ
क्ष्यमपिहिंगुजीरकादिसंस्कारार्थंपुनःवच्यतेतद्वर्ज्यम् ॥ यत्तुतिक्तशाकान्नवि
कारादिद्विःपाकेनैवभक्षणार्हंतन्ननिषिद्धम् ॥ अग्रावलेहितमास्वादितपूर्वं । प
र्युषितस्यतदानिषेधेपिपुनर्वचनम् । अपूपाश्चकरंभाश्चधानावटकसक्तवः ।
शाकंमांससमूरंचसूपंकृसरमेवच । यवागूःपायसंचैवयच्चान्यत्स्नेहसंयुतम् । स
र्वंपर्युषितंभोज्यंशुष्कंचेत्परिवर्जयेदितिमाधवीयेयमोक्तावटकादेरपिपर्युषि
तस्यनिषेधार्थमितिचंद्रिकादयः (वर्ज्येषुविश्वामित्रः) कपित्थंकुरुकंचैवनालि
केरंचपैत्तिकम् । जंबूफलादिपक्वंचपिण्याकंतंदुलीयकम् (हेमाद्रौषट्त्रिंशन्म
ते) वर्ज्यामर्कटकाःश्राद्धेराजमाषास्तथैवच ॥ मर्कटकाःनाकाइतिप्रसिद्धाः
(पैठीनसिः) वृत्ताकंनालिकापोतकुसुंभाश्मंतकानिच । शाकानामभक्ष्याइति ।
पोतंपोईतिप्रसिद्धम् (मार्कंडेयः) वर्ज्याश्चाभिषवानित्यंशतपुष्पागवेधुकाः ।
जंबीरकंफलंवर्ज्यंकोविदाराश्चनित्यशः ॥ अभिषवःशुक्ताइतिचंद्रिका । सं
धानकमितिपृथ्वीचंद्रः । शतपुष्पाशोवाइतिप्रसिद्धम् (शाठ्यायनः) मारिषं
नालिकाचैवरक्तायाचकलंबिका । असुरान्नमिदंसर्वंपितॄणांनोपतिष्ठते ॥ मा
रिषंमध्यदेशेमरुसाइतिमहाराष्ट्रे घुराजगिराइतिचप्रसिद्धम् ॥ कलंबिकावेरावा
कृतिपत्रा ॥ तथैवगांधारिकापटोलानिश्राद्धकर्मणिवर्जयेत् ॥ गांधारिकातंदु

लीयमितिचंद्रिका । जवासाख्यादुरालभेतिकैदेवः (भारते) हिंगुद्रव्येषुशाके षुअलाबुंलशुनंतथा । कुकुंडकान्यलाबूनिकृष्णांलवणमेवच । पुनरलाबुग्रहणामु भयालाबुनिषेधार्थमितिपृथ्वीचंद्रः ॥ कुकुंडकंवर्तुलकुष्मांडम ( तत्रैव ) कुस्तुंबु रुंकलिंगोत्थंवर्जयेदाम्लवेतसं (हेमाद्रौब्राह्मे ) वार्ताकंपंचर्णिंबंचलोमशानिफ लानिच । कलिंगंरक्तचारंचवीणाकंघृतचारकम ॥ कपालंकाचमारिंचकरंजं पिडमूलकम । गृञ्जनंचुलिकांचैवगाजरंजीवकंतथा॥ वृन्ताकंश्वेतं । कंडूरांश्वेत वृन्ताकंकूष्मांडंचविवर्जयेदितिदेवलोक्तेः ॥ तेनकृष्णस्यनिषेधइतिचंद्रिकामा धवौवस्तुतस्तुसदाश्वेतनिषेधात्पुनःश्राद्धेनिषेधोव्यर्थः । तेनभक्ष्यस्यकृष्णवृन्ता कस्यापि निषेधार्थमिदमितिवयम ॥ कंडूराकपिकच्छूः । कुंभांडंवृत्तालाबुः । पंचणिंबंवल्लमसूरराजमाषमठकुलित्थाः। लोमशानिकपित्थानि । रक्तचारंलो हितचारफलम । वीणाकंकृष्णादीर्घकर्कटी। घृतचारकंचिरस्थितचारफलम । चारोलीतिप्रसिद्धम । कपालंनारिकेलम। काचंकचूवृक्षफलं। मारीचंआर्द्र मरीचानि । गृञ्जनंपलांडुभेदः । पर्पिचमर्दिशिप्रसिद्धः । नतुगाजरम । तस्यपृ थगुक्तेः । हेमाद्रिणातुगृञ्जनंगाजरमेवोक्तम । गौडश्राद्धकौमुद्यामप्येवंतच्चिंत्य म ॥ चुक्रिकाचिरकालशुक्तं पानकम (चंद्रिकायांहारीतः) नवटप्लक्षोदुंबरपी लुदधित्थनीपमातुलिंगानिभक्षयेत ॥ शेलुःभोकरसंज्ञः । दधित्थंकपित्थं (स्मृ तिसारे) क्षीरेतुलवणंदत्वाउच्छिष्टे पिचयद्घृतम । स्नानंरजकतीर्थेषुताम्रे ग व्यंक्षुरासमम (गौडनिबंधसागरेस्मृतिः) नारिकेरोदकंकांस्ये ताम्रपात्रेस्थितंम धु । गव्यंचताम्रपात्रस्थंमद्यतुल्यंघृतंविना ॥ ताम्रपात्रेघृतंमांसंपंचगव्यंघृतेतरत आमिषंतुगवांमांसंदधिमद्यंपयोरजः ॥ द्रव्यांतरयुतंमांसंपयसासंयुतंदधि ॥ पयो नुघृतसारंचताम्रपात्रेनदुष्यति ( अथजलम याज्ञवल्क्यः ) शुचिगोतृप्तिकृत्तोयंप्र कृतिस्थंमहीगतं ( वर्ज्यंजलमुक्तंहेमाद्रौब्रह्माण्डे ) दुर्गंधिफेनिलंक्षारंपंकिलं पल्वलोदकम । नभवेद्यत्रगोतृप्तिर्नक्तंयच्चाप्युपाहृतम ॥ यच्चसर्वार्थमुत्सृष्टंयच्चा भोज्यनिपानजम ॥ तद्वर्ज्यंसलिलंतातसदैवश्राद्धकर्मणि ॥ निषिद्धोजलाशयः ( शुद्धितत्त्वेशंखः ) स्नानमाचमनंदानं देवतापितृतर्पणम । शूद्रोदकैर्नकुर्वीतत

थामेध्यादिनिःसृतैः (हेमाद्रावादित्यपुराणे) चिरंपर्युषितंवापिशूद्रस्पृष्टमथापि
वा ॥ जाह्नव्याःस्नानदानादौपुनात्येवसदापयः (कात्यायनः) अपोनिशिनगृ
ह्णीयाच्चापिवैचकदाचन । उद्धृत्यापिनमुपर्यग्नेर्धाम्नोधाम्नइतीरयेत् (रजोदो
षेतुप्रागुक्तंनारदीये) त्यजेत्पर्युषितंपुष्पंत्यजेत्पर्युषितंजलम् । नत्यजेज्जाह्न
वीतोयंतुलसीबिल्वपद्मकम् (अन्यान्यपिपृथ्वीचंद्रोदयेमात्स्ये) मध्याह्नः
खड्गपात्रंचतथानेपालकंबलः । रौप्यंदर्भास्तिलागावोदौहित्रश्चाष्टमःस्मृतः ॥
पापंकुत्सितमित्याहुस्तस्यसंतापकारिणः । अष्टावेतेयतस्तस्मात्कुतपाइतिविश्रु
ताः (ब्राह्मे) यतिस्त्रिदंडःकमलंराजतंपात्रमेवच । दौहित्रंकुतपःकालश्छागःकृ
ष्णाजिनंतथा ॥ भस्मानीतिशेषः ॥ दौहित्रंखड्गपात्रमितिकल्पतरुः (अपरा
र्केस्मृत्यंतरे) अपरंदुहितुश्चैवखड्गपात्रंतथैवच । घृतंचकपिलायागोर्दौहित्र
मितिकीर्तितम् (ब्रह्मांडे) अमावास्यागतेसोमेयातुस्त्रवतिगोस्तनात् । तस्या
गोर्यद्भवेत्क्षीरंतद्दौहित्रमुदाहृतम् (स्मृतिसंग्रहे) उच्छिष्टंशिवनिर्माल्यंवांतंचमृ
तकर्पटम् । श्राद्धेसप्तपवित्राणिदौहित्रःकुतपस्तिलाः ॥ उच्छिष्टंवत्सस्यदुग्ध
मित्यर्थः ॥ शिवनिर्माल्यंगंगोदकं । वांतंमधु । मृतकर्पटंतसरीपट्टम् (तिलेष्वा
पस्तंबः) अरण्यांयेसमुत्पन्नाअकृष्टफलितास्तथा । तेवैश्राद्धेपवित्राःस्युस्तिला
स्तेनतिलास्तिलाः ॥ अभावेग्राम्याः ॥ गौराःकृष्णास्तथारण्यास्तथैवत्रिविधास्ति
लाइतिब्राह्मोक्तेः (अथवर्ज्यानिचंद्रिकायांयमः) कुक्कुटोविड्वराहश्चकाक
श्चाथविडालकः । वृषलीपतिश्चवृषलःषंढोवीरारजस्वला ॥ एतेतुश्राद्धकाले
वैवर्जनीयाःप्रयत्नतः ॥ खंजःकाणःकुणिःश्वित्रीदातुःप्रेष्यकरस्तथा । न्यूनांगो
ह्यतिरिक्तांगस्तमप्यपनयेत्ततः (वायवीये) अन्नंपश्येयुरेतेतुर्यदिवैहव्यकव्य
योः । तत्सृष्टव्यंप्रधानार्थसंस्कारस्त्वाप्रदिस्मृतः (सुमंतुः) चांडालादिवीक्षितम
न्नमभोज्यमन्यत्रभृङ्गस्यहिरण्योदकस्पर्शात् (तत्रैवजमदग्निः) शुद्धंस्यादथकू
ष्मांड्यःपावमान्यस्तरत्समाः । पूतेनवारिणाचैभिर्नदोषमपानुदेत् (चंद्रोदये)
पादुकोपानहौछत्रंचित्ररक्तांबरंतथा । रक्तपुष्पंचमार्जारंश्राद्धभूमौविवर्जयेत्
(निर्णयदीपे) घंटानिनादोहयसंनिधानंभूकांबकंदलीदलंच । उन्मत्तजात्य

कंहयारिजानिश्राद्धस्यवैगुण्यकराणयमूनि ॥ हयारिजंमहिषीक्षीरादि । अ
थश्राद्धदिनकृत्यम् (चन्द्रोदयेउशना:) गोमयोदकैर्भूमिभाजनशौचंकुर्यात् (प
राशरः) कांजिकंदधितक्रंचशृतंवाशृतमेवच । पूर्वमेवनदातव्यमेकोद्दिष्टेथपार्व
णे (हेमाद्रौपराशरः) गृहाग्निशिशुदेवानांब्रह्मचारितपस्विनाम् । तावन्नदीय
तेकिंचिद्यावत्पिंडान्ननिर्वपेत् ॥ (कौर्मे) तिलान्विकिरेत्तत्रसर्वतोबंधयेदजान्
(तत्रैवदेवलः) तथैवयंत्रितोदाताप्रातःस्नात्वासहांबरः । आरभेतनवैःपात्रैरन्नारं
भंचबांधवैः ॥ अत्रात्मनेपदात्स्वयमेवपाकःकार्यः ॥ अशक्तौपत्न्यातदभावेबां
धवैः ॥ ततस्तुनिपुणाचाशुसीताजनकनंदिनीतिपाद्मलिंगादितिहेमाद्रिः (श्राद्ध
दीपकलिकायामाश्वलायनः) समानप्रवरैर्मित्रैःसपिंडैश्चगुणान्वितैः । कृतोप
कारिभिश्चैवपाककार्यंप्रशस्यते (व्यासः) गृहिणीचैवसुस्नाताप्राकंकुर्यात्प्रय
त्नतः । निष्पन्नेषुचपाकेषुपुनःस्नानंसमाचरेत् (पृथ्वीचंद्रोदयेब्राह्मे) रजस्व
लांचपाखंडांपुंश्चलींपतितांतथा । त्यजेच्छूद्रांतथावंध्यांविधवांचान्यगोत्रजाम् ॥
न्यंगकर्णींचतुर्थाहःस्नातामपिरजस्वलाम् । वर्जयेच्छ्राद्धपाकार्थंसमातृपितृवं
शजाम् ॥ मातृपितृवंशजभिन्नांत्यजेदित्यर्थः (स्मृतिसारे) नपाकंकारयेत्पुत्री
मन्यांवाप्यन्यगोत्रजाम् । मृतवंध्यांचगर्भघ्नीं गर्भिणींचैवदुर्मुखीम् (पाक
भांडानितुहेमाद्रौनागरखंडे) सौवर्णान्यथरौप्याणिकांस्यताम्रोद्भवानिच ।
मार्तिकान्यपिभव्यानि नूतनानिदृढानिच (तत्रैवादित्यपुराणे) पचेदन्नानि
सुस्नातःपात्रेषुशुचिषुस्वयं । स्वर्णादिधातुजातेषुमृन्मयेष्वपिवाद्विजः ॥ अच्छि
द्रेष्वविक्लिन्नेषुतथानुपहतेषुच । नायसेषुनभिन्नेषुदूषितेष्वपिकर्हिचित् ॥ पूर्वं
कृतोपयोगेषु मृन्मयेषुनतुकर्हिचित् (वायुपुराणे) नकदाचित्पचेदन्नमयस्था
लीषुपैतृकं । अयसोदर्शनादेवपितरोपिद्रवन्तिहि ॥ कालायसंविशेषेणनिंदंति
पितृकर्मणि । फलानांचैवशाकानांछेदनार्थनियोजितु ॥ महानसेपिशस्त्राणि
तेषामेवहिसन्निधिः । दृश्यतेनेतरस्यात्रआयसस्यदर्शनं ॥ श्राद्धदेशेतुनिदुखा
पितृणांतृप्तिमिच्छता । महानसेपिशुक्लानांसर्वकार्यनदर्शनम् (तत्रैव) पचमा
नस्तुभांडेषुभक्त्यातास्रमयेषुच । समुद्धरतितान्घोरात् पितॄन्दुःखमहार्णवात् ॥

तैजसानामभावेतुपिठरेमृन्मयेपिच । नवेशुचौप्रकुर्वीतपाकंपित्रर्थमादरात्
( तत्रैवादित्यपुराणे ) पक्वान्नस्थापनार्थंतुशस्यन्तेदारुजान्यपि । दर्व्यादीन्य
पिकार्याणियज्ञियैरपिदारुभिः ( यमः ) विवाहेप्रेतकार्येचमातापित्रोःक्षये
हनि । नवभाण्डानिकुर्वीतयज्ञकालेविशेषतः ( अथपाकाग्निः ) हेमाद्रौप्रजा
पतिः ) औपासनेनान्नसिद्धिरग्नौकरणमेवच (पृथ्वीचंद्रोदयेंगिराः ) शाला
ग्नौतुपचेदन्नंलौकिकेवापिनित्यशः । यस्मिन्नग्नौपचेदन्नंतस्मिन्होमोविधीय
ते ( मनुः ) वैवाहिकेग्नौकुर्वीतगृह्यंकर्मयथाविधि । पंचयज्ञविधानंचपंक्ति
ञ्चान्वाहिकींद्विजः ॥ श्राद्धस्यगृह्यत्वंचोक्तमपरार्केण(अत्रविशेषःकर्मप्रदीपे)
प्रातर्होमन्तुनिर्वर्त्यसमुद्धृत्यहुताशनात् । शेषंमहानसेकृत्वातत्रपाकंसमाचरेत्॥
पाकांतेग्निंतमाहृत्यगृह्याग्नौतुपुनःक्षिपेत् । ततोस्मिन्वैश्वदेवादिकर्मकुर्यादतं
द्रितः ॥ तदभावेलौकिके । ततःपचेयुरन्नानिनिर्वापानंतरंशनैः । वैवाहिकेग्ना
वन्यत्रलौकिकेवापिसंयत इतिकालिकायांसंग्रहोक्तेः ॥ पित्रर्थनिर्वापंकृत्वेत्य
र्थः ( अतएवहेमाद्रौवायुपुराणे ) पित्रर्थंनिर्वपेद्भूमौकूर्चेवादर्भसंस्कृते ( तत्रैव
पाद्ममात्स्ययोः ) अग्निमान्निर्वपेत्पैत्र्यंचरुंवासममुष्टिभिः । पितृभ्योनिर्वपामी
तिसर्वंदक्षिणतोन्यसेत् ॥ चरुग्रहणाच्चशाकादावितिहेमाद्रिः ॥ पिण्डपितृय
ज्ञार्थपाकविषयोयंनिर्वापइतितुयुक्तं ॥ अयंचेतरेषामग्निः ॥ आश्वलायनाना
न्तुगुरुणाभिसृताअन्यतोवापक्षीयमाणाअमावास्यायांशान्तिकर्मकुर्वीरन्नि
त्यादिसूत्रेणापचनाग्नेस्त्यागमुक्त्वा इहैवायमितरोजातवेदाइत्यर्धर्चेन शामामयी
श्रामरणाभ्यामग्निंमंथेत्सपचनाग्निर्भवतीतिसूत्रेणतौचोक्तेः ॥ पचनाग्नावे
वपाकः॥ बौधायनेनाप्युक्तंआहृतपचनाग्निमौपासनंवाभिप्रव्रजन्तीति ॥ स्मा
र्ताग्नौपाकस्त्वन्यशाखाविषयइतिकेचित् ॥ वस्तुतस्तुपूर्वोक्तस्यसर्वाधानवि
षयत्वंयुक्तम् ॥ शिष्टाचारेपिनपचनोदृश्यते ॥ अपर्डक्त्वाग्निमपिसर्वाधानप
क्षेवैश्वदेवश्राद्धंचपचनेकुर्यादन्यथौपासनेइत्युक्तं ॥ अग्नौकरणन्तुप्रयोगपारि
जातादिभिरानिष्कादिसर्वश्राद्धेषु पिण्डपितृयज्ञव्यतिषंगोक्तेर्लौकिके पचने
वापाकेकृतेपिगृह्याग्नौपक्वचरुणैवकार्यमितिप्रतिभाति ॥ मदनरत्नेप्येवम् ॥

विधुरेत्सन्नाग्न्यादेस्तुपृष्टोदिविविधानेनाग्निसम्पादनमित्युक्तंहरिहरभाष्ये
इतिपाकाग्निः ( चन्द्रिकायांमार्कंडेयः ) अह्नःषट्सुमुहूर्त्तेषु गतेषुप्रयतान्द्वि
जान् । प्रत्येकंप्रेषयेत्तेषां प्रदायामलकोदकम् ( देवलः ) ततोनिवृत्तेमध्याह्ने
कृत्तरोमनखान्द्विजान् । अभिगम्ययथान्यायंप्रयच्छेद्दंतधावनम् ॥ तैलमभ्य
ञ्जनंस्नानंस्नानीयंचपृथग्विधम् । पात्रैरौदुंबरैर्दद्याद्वैश्वदेविकपूर्वकम् ॥ औदुम्ब
रैस्ताम्रमयैः । अत्रक्षौरामलकस्नानादेर्निषिद्धतिथ्यादिव्यतिरिक्तविषयमि
तिहेमाद्रिमाधवश्च (यत्तुचन्द्रिकायांप्रचेताः) तैलमुद्वर्तनंस्नानंदद्यात्पूर्वाह्णए
वच । श्राद्धभुग्भ्योनखश्मश्रुच्छेदनंतुनकारयेदितितन्निषिद्धतिथ्यादिविषयम्
निषिद्धतिथ्यादितुप्रागुक्तम् (अभ्यंगेतुकालिकायांकात्यायनः) तैलमुद्वर्तनेदेये
ब्राह्मणेभ्यःप्रयत्नतः । तैरभ्यंगश्चकर्तव्योवर्ज्यकालंनचिन्तयेत् ( अपरार्केप्र
चेताः) स्नातोधिकारीभवतिदैवेपित्र्येचकर्मणि । श्राद्धकृच्छुक्लवासाःस्यान्मौ
नीचविजितेन्द्रियः ( हेमाद्रौजाबालिः ) ताम्बूलंदन्तकाष्ठंचस्नेहस्नानमभोज
नम् । रत्यौषधंपरान्नानि श्राद्धकर्ताविवर्जयेत् ( वस्त्रेविशेषमाहतत्रैवभृगुः )
नग्नःस्यान्मलवद्वासा नग्नःकौपीनकेवलः । द्विकच्छोनुत्तरीयश्चअकच्छो
वस्त्रएवच ॥ नग्नःकाषायवासाःस्यान्नग्नश्चार्द्रपटःस्मृतः । नग्नोद्विगुण
वस्त्रःस्यान्नग्नोरक्तपटःस्मृतः ॥ नग्नस्तुस्निग्धवस्त्रःस्यान्नग्नःस्यूतपटस्तथा ॥
ततःकर्ताऊर्ध्वपुंड्रं कुर्यात् ॥ जपेहोमेतथादानेस्वाध्यायेपितृकर्मणि । त
त्सर्वंनश्यतिक्षिप्रमूर्ध्वपुंड्रं विनाकृतमितिहेमाद्रावुक्तेः ॥ यज्ञोदानंजपोहोमः
स्वाध्यायःपितृकर्मच । वृथाभवतिविप्रेंद्रऊर्ध्वपुंड्रं विनाकृतमितिबृहन्नारदीया
त् ॥ ऊर्ध्वंचतिलकंकुर्यात्दैवेपित्र्येचकर्मणीतिवृद्धपराशरोक्तेश्च(अन्येतु)
ऊर्ध्वपुंड्रं द्विजातीनामग्निहोत्रसमोविधिः । श्राद्धकालेतुसंप्राप्तेकर्ताभोक्ताच
तत्त्यजेत् ॥ वामहस्तेचदर्भास्तुगृहेरंगावलिंतथा । ललाटेतिलकंदृष्ट्वानिराशाः
पितरोगताइतिसंग्रहोक्तेः ॥ ऊर्ध्वपुंड्रं त्रिपुंड्रं वाचंद्राकारमथापिवा । श्राद्धक
र्तानकुर्वीतयावत्पिंडान्ननिर्वपेदितिविश्वप्रकाशेवचनाच्चनकार्यमित्याहुः ॥ अ
त्राचाराद्व्यवस्था ( अतएवबृहन्नारदीये ) ऊर्ध्वपुंड्रं चतुलसींश्राद्धेनेच्छंतिकेच

नेति ॥ ऊर्ध्वपुंड्रविधिर्विप्रविषयः ॥ निषेधःकर्तृपरइतिपृथ्वीचन्द्रः ( यत्तु हेमाद्रौदेवलः ) ललाटेपुंड्रकंदृष्ट्वास्कंधेमाल्यंतथैवच ॥ निराशाःपितरोयांति दृष्ट्वाचवृषलीपतिमितितद्गंधेनत्रिपुंड्रविषयम् ॥ प्राक्पिंडदानाद्गंधाद्यैर्नालंकुर्यात्स्वविग्रहमित्याश्वलायनोक्तेः ॥ पुंड्रं वर्तुलमित्यपरार्केमदनरत्नेच ॥ पृथ्वीचंद्रस्तुपुंड्रं त्रिपुंड्रम् ॥ ऊर्ध्वंचतिलकंकुर्याच्चकुर्याद्वैत्रिपुंड्रकम् । निराशाःपितरोयांतिदृष्ट्वाचैवत्रिपुंड्रकमितिबृहत्पराशरोक्तेः ॥ भोक्तुस्तिर्यग्लेपोभवत्येव ॥ वर्जयेत्तिलकंभालेश्राद्धकालेचसर्वदा । तिर्यगप्यूर्ध्वपुंड्रं वाधारयेत्तुप्रयत्नतइतिव्यासोक्तेरित्याह (पृथ्वीचन्द्रोदयेब्राह्मे) सदर्भेणतुहस्तेनयःकुर्यात्तिलकंबुधः । आचम्यसर्वशुद्ध्येतदंभत्यागेनचैवहि (श्राद्धारंभकालमाहापरार्के गौतमः) आरभ्यकुतपेश्राद्धंकुर्यादारोहणंबुधः । विधिज्ञोविधिमास्थायरौहिणंतुनलंघयेत् ॥ एतदेकोद्दिष्टे ( पार्वणेतूक्तंमात्स्ये ) ऊर्ध्वंमुहूर्तात्कुतपाद्यन्मुहूर्तचतुष्टयम् । मुहूर्तपंचकंह्येतत्स्वधाभवनमिष्यते ( तथा ) मध्याह्नेसर्वदा यस्मान्मन्दीभवतिभास्करः । तस्मादनंतफलदस्तत्रारम्भोविशिष्यते ( अथश्राद्धपरिभाषा ( चन्द्रिकायांकात्यायनः ) दक्षिणंपातयेज्जानुंदेवान्परिचरन्सदा । पातयेदितरंजानुंपितॄन्परिचरन्सदा (बौधायनः) प्रदक्षिणन्तुदेवानांपितॄणामप्रदक्षिणम् । देवानामृजवोदर्भाःपितॄणांद्विगुणास्तथा ( पृथ्वीचन्द्रोदयेशंखः) आवाहनार्घ्यसंकल्पेपिण्डदानान्नदानयोः । पिण्डाभ्यंजनकालेतुतथैवांजनकर्मणि । अक्षय्यासनयोःपाद्येगोत्रंनामप्रकाशयेत् (तत्रैवपरिशिष्टे ) क्षणोर्घपिण्डदानेचगन्धधूपाक्षयेतथा । संकल्पेचासनेदीपे अंजनाभ्यंजनेतथा । अन्नार्घ्यदानाद्यंतेषुगोत्रंनामचकीर्तयेत् (कलिकायांसंग्रहे) आसनावाहनेपाद्ये अन्नदानेतथैवच । अक्षय्येपिण्डदानेचषट्सुनामानिकीर्तयेत् ( मात्स्ये ) सम्बन्धंप्रथमंब्रूयाद्गोत्रंनामतथैवच । पश्चाद्रूपंविजानीयात्क्रमएषसनातनः ( तत्रैव ) सकारेणतुवक्तव्यंगोत्रंसर्वत्रधीमता । सकारःकुतपोज्ञेयस्तस्माद्यत्नेनतंवदेत् ॥ यथाकाश्यपसगोत्रेति ॥ पराशरसगोत्रस्यवृद्धस्यतुमहात्मनः । भिक्षोःपंचशिखस्याहंशिष्यःपरमधार्म्मिकइतिमोक्षधर्म्मेषुप्रयोगाच्च ॥ तेनगोत्रमगोत्र

योः पर्यायत्वाच्छाखाभेदाद्व्यवस्थेतिमूलपाणिः॥एतद्येषामाम्नातंतेषामेव(हेमाद्रौबृहत्प्रचेताः) गोत्रंस्वरांतंसर्वत्रगोत्रस्याक्षय्यकर्मणि। गोत्रस्तुतर्पणेप्रोक्तःकर्तादातानमुह्यति॥ सर्वत्रैवपितःप्रोक्तःपितातर्पणकर्मणि। पितुरक्षय्यकालेतुपित्र्येसंकल्पनेतथा॥ शर्मन्नर्घ्यादिकेकार्यंशर्मातर्पणकर्मणि। शर्मणोक्षय्यकालेतुपितॄणांदत्तमक्षयं। स्वरांतंसम्बुद्ध्यंतमितिहेमाद्रिः( तत्रैवचन्द्रिकायांचस्मृत्यंतरे) गोत्रस्यत्वपरिज्ञानेकाश्यपंगोत्रमुच्यते। यस्मादाहश्रुतिःसर्वाःप्रजाःकश्यपसम्भवाः (यत्तुसत्याषाढः) अथाज्ञातबन्धोःपुरोहितगोत्रेणाचार्यगोत्रेणवेतितद्विवाहपरम् (नामोच्चारणेविशेषमाहहेमाद्रौबौधायनः ) शर्मांतंब्राह्मणस्योक्तंवर्मांतंक्षत्रियस्यतु। गुप्तांतंचैववैश्यस्यदासांतंशूद्रजन्मनः(पित्रादिनामाज्ञानेतत्रैव) पृथिवीवत्पितावाच्यस्तत्पिताचांतरिक्षवत्। अभिधानापरिज्ञानेदिविवत्प्रपितामहः॥ पित्रादीनांनामयदापुत्रैर्नज्ञायतेतदा॥ आपस्तम्बसूत्रेप्येवम्॥ एतदन्यशाखापरम् (आश्वलायनानांतूक्तंतत्सूत्रे ) यदिनामान्यविद्वांस्ततपितृपितामहप्रपितामहेतिब्रूयात् ( तत्कारिकापि ) नामानिचेन्नजानीयात्तत्तेत्यादिवदेत्क्रमात्॥ तत्तेतिसंबंधमात्रपरम् ॥ तेनपितृव्यादावपितथेतिगौडाः ॥ स्त्रीणांदांतंनामज्ञेयम् ॥ दांतंनामस्त्रीणामितिपृथ्वीचंद्रोदयेगोभिलोक्तेः॥ केचिद्देवीशब्दांतमाहुः॥ अन्येतुदेवीदासीतिद्वयोःसमुच्चयमाहुः (हेमाद्रौनारायणः) विभक्तिभिस्तुयत्किंचिद्दीयतेपितृदैवते। तत्सर्वंसफलंज्ञेयंविपरीतंनिरर्थकम् (चंद्रिकास्मृत्यर्थसारयोश्चनारदीये) अक्षय्यासनयोःषष्ठीद्वितीयावाहनेतथा। अन्नदानेचतुर्थीस्याच्छेषाःसंबुद्धयःस्मृताः (यत्तुव्यासः) चतुर्थीचासनेनित्यंसंकल्पेर्घ्यविधीयते। प्रथमातर्पणेप्रोक्तासम्बुद्धिमपरेजगुरिति॥ अत्रशाखाभेदाद्व्यवस्थेतिहेमाद्रिः (हेमाद्रौभृगुः ) अर्घ्यावनेजनेपिंडमन्त्रंप्रत्यवनेजनम्। संबुद्धिंतत्रकुर्वीतशेषेषष्ठीविधीयते (तत्रैवमातुर्विशेषोनागरखंडे) मातर्मात्रेतथामातुरासनेकल्पनेक्षये । गोत्रेगोत्रायैगोत्रायाःप्रथमाद्याविभक्तयः (हेमाद्रौप्रभासखंडे) यज्ञोपवीतिनाकार्यंदैवंकर्मप्रदक्षिणम्। प्राचीनावीतिनाकार्यंपितृकर्माप्रदक्षिणं॥ अनुपनीतस्त्रीशूद्रादेस्तूत्तरीयेणैवसव्यापस

व्येन्नैये ॥ तस्योपवीतस्थानीयत्वात ॥ अपसव्यंक्रमाहस्त्रंकृत्वाकश्चित्सगोत्र
जइतिब्राह्माचेतिवाचस्पतिः ॥ यत्तुकेचित । सदोपवीतिनाभाव्यमित्यस्यपुरु
षार्थत्वात ॥ प्राचीनावीतिकालेप्युपवीतांतरेणतत्कार्यमेवेति तन्न ॥ विशेषे
णावाधात (जमदग्निः) सक्तस्तोत्रजपंत्यक्त्वापिंडाघ्राणंचदक्षिणाम ॥ आह्वानं
स्वागतंचार्घ्यंविनाचपरिवेषणम ॥ विसर्जनंसौमनस्यमाशिषांप्रार्थनंतथा ॥
विप्रप्रदक्षिणांचैवस्वस्तिवाचनकंविना ॥ पितॄनुद्दिश्यकर्तव्यंप्राचीनावीतिना
सदा (हेमाद्रौसंग्रहे) आदौविप्रांघ्रिशौचांतेभ्यर्चनेविकिरेकृते । पिंडानभ्यर्च
यित्वाचविसर्ज्यब्राह्मणांस्तथा ॥ आचमेच्छ्राद्धकर्ताचस्थानेष्वेतेषुसप्तसु । आ
द्यंतयोर्द्विराचामेच्छेषेषुतुसकृत्सकृत (तत्रैव) श्राद्धारंभेवसानेचपादशौचार्चनां
तयोः । विकिरेपिंडदानेचषट्स्वाचमनमिष्यते (आश्वलायनः) दानाध्ययनवे
दार्चाजपहोमव्रतादिकान । नकुर्याच्छ्राद्धदिवसेप्राग्विप्राणांविसर्जनात ॥ एत
च्चित्यवर्ज्यमिति । वोपदेवः ॥ इदंविष्णुभिन्नदेवपरम ॥ विष्णोर्निवेदितान्नेन
यष्टव्यंदेवतांतरम । पितृभ्यश्चापितद्देयंतदनंत्यायकल्पते ॥ पितृशेषंतुयोदद्याद्ध
रयेपरमात्मने । रेतोधाःपितरस्तस्यभवंतिक्लेशभागिनइतिस्कांदात ॥ पितरः
सर्वेमनुष्याविष्णुनाशितमश्नन्तीतिश्रुतेः ॥ यःश्राद्धकालेहरिभुक्तशेषंददातिभ
क्त्यापितृदेवतानाम । तेनैवपिंडांस्तुलसीविमिश्रानाकल्पकोटिंपितरस्तृप्तइ
तिब्राह्मोक्तेश्चेतिश्रीधरस्वामिनृसिंहपरिचर्यादयः ॥ एतत्सर्वनिबंधविरोधा
न्निर्मूलं (अत्रविशेषोहेमाद्रौविष्णुधर्मे) श्राद्धाह्नितुसमभ्यर्च्यनृवराहंजनार्दनम
( शिवपुराणे ) पूजयित्वाशिवंभक्त्यापितृश्राद्धंप्रकल्पयेत ॥ पूर्वनिषेधस्तुवि
हितभिन्नपरः(तथाहेमाद्रौ)देव्यर्चादक्षिणांगादिःपादजान्वंसमूर्धनि । शिरोंस
जानुपादेषुवामांगादिचपैतृकम ( कालिकायांस्मृत्यंतरे ) श्राद्धारंभेतुयेदर्भाःपा
दशौचेविसर्जयेत । अर्चनादौतुयेदर्भाउच्छिष्टांतेविसर्जयेत ॥ मार्जनादौतुये
दर्भाःपिंडोत्थानेविसर्जयेत ॥ उत्थानादौतुयेदर्भादक्षिणांतेविसर्जयेत ॥ प्रार्थ
नादौतुयेदर्भानमस्कारेविसर्जयेत ( ऊहमाहविष्णुः ) मातामहानामप्येवंश्राद्धं
कुर्याद्विचक्षणः ॥ मंत्रोहेनयथान्यायं शेषाणांमंत्रवर्जितम ॥ यथान्यायमितियत्र

बहुवचनांतःपितृशब्दस्तत्रसर्व्वपितृवाचित्वान्नोहः॥ तत्रापिशुंधंतांपितरइत्यत्रो
हएव। सर्व्वपितृवाचित्वेउत्तरमंत्रद्वयवैयर्थ्यात्॥ बहुवचनन्तुनोह्यते ॥ प्रकृ
तावसमर्थत्वात्पाशानितिवत्॥ ऋगंतेचनोहः ॥ तस्माद्दृचंनोहेर्दितिनिषेधात्
एकोद्दिष्टेप्येवम्॥ प्रेतैकोद्दिष्टेत्वेकवन्मंत्रानूहेनैकोद्दिष्टे इतिविष्णूक्तेरूहः॥
अत्रबहुवचनस्याप्यूहोवचनात्॥ वृद्ध्यादौतुविशेषंवक्ष्यामः॥ शेषाणामिति
पितृव्याद्येकोद्दिष्टेआवाहनादिमंत्रवर्ज्यंकार्यमितिकल्पतरुः॥ ऊहयोग्यपितृ
पदवान्मंत्रएवतत्रनप्रयोज्यः॥ नतूहः। नापिपितृपदरहितःप्रयोज्यइतिशूल
पाणिः॥ अर्थांतरंचोक्तंप्राक्(बह्वृचकारिकापि) अर्घ्यप्रदानमंत्रेतुमात्रादि
पदमावपेत्। शुंधंतामितिपित्रादौमात्रादिपदमावपेत्॥ मातृश्राद्धेपिंडदानेयेच
त्वामत्रान्वित्यत्रनोहइतिवृत्तिकृत्(तथा) मातुःश्राद्धेप्यनूहेनकुर्यात्पिंडानुमं
त्रणम्। दशादानमुपस्थानंतद्वत्कार्यमितिस्थितिः॥ प्रवाहणमनूहेनतद्वत्प्राशन
मिष्यते(तथा)आयंतुनस्तिलोसीतिउशंतस्त्वेतियानितु ॥ अनूह्यःपितृशब्दो
ऽपितृसामान्यवाचकः(आपस्तम्बानांतुवक्ष्यते। हेमाद्रौमार्कण्डेयः) स्नातः
स्नातान्समाहूतान्स्वागतेनार्चयेत्पृथक्(कालिकायांनारदीये) प्रायश्चित्त
विशुद्धात्मातेभ्योऽनुज्ञांप्रगृह्यच। दद्याद्ब्रह्मदण्डार्थेहिरण्यंकुशमेवच(तत्रैव
संग्रहे) तिथिवारादिकंज्ञात्वा संकल्प्यचयथाविधि। प्राचीनावीतिनाकार्य्यं
सर्वसंकल्पनादिकम्॥ सम्बन्धंप्रथमंब्रूयान्नामगोत्रेतथैवच। वस्त्रादिरूपतांचा
पिस्वपितॄणामनुक्रमात्(पृथ्वीचन्द्रोदयेनारदीये) श्राद्धार्थंसमनुप्राप्तान्वि
प्रान्भूयोनिमंत्रयेत्॥ आपस्तंबस्तुपूर्व्वेद्युर्निमंत्रणंपरेद्युर्द्वितीयंतृतीयमामंत्रण
मित्याह॥ यूयंमयानिमंत्रणीयाइतिनिवेदनरूपंआद्यम्(तद्विधिमाहशौनकः)
गृहीत्वामुकसंज्ञस्यामुकगोत्रस्यचामुकेः। श्राद्धेतुवैश्वदेवार्थंकरणीयःक्षणस्त्व
या॥ इत्येवंश्राद्धकृद्ब्रूयाद्दोंतथेतिवदेत्तुसः। श्राद्धस्यकर्तासब्रूयात्तंप्राप्नोतु
भवानिति॥ सवदेत्प्राप्नवानीतिइतरस्तंप्रतिद्विजः॥ देवौपार्वणेपुरूरवार्द्रवौ
वाच्यौ॥ पित्रादेरप्यनेनैववृणीतविधिनाद्विजान्। ततःकर्ताबह्वृचोऽनाहिता
ग्निःपिण्डपितृयज्ञंपरिस्तरणादीध्माधानांतंकुर्यात्॥ अथर्वणानेनाप्येवमिति

प्रयोगपारिजातेपरिशिष्टेच ॥ भाष्यकारमतेऽप्यन्दिकेप्येवम् ॥ वृत्तिकारमते नेदम् (हेमाद्रौभृगुः) समार्जितोपलिप्तेतुद्वारिकुर्वीतमण्डले॥उदक्प्लवमुदीच्यं स्याद्दक्षिणंदक्षिणाप्लवम् (व्याघ्रः) उत्तरेक्षतसंयुक्तान्पूर्वाग्रान्विन्यसेत्कुशान् । दक्षिणेदक्षिणाग्रांस्तुसतिलान्विन्यसेत्कुशान् (तत्रैवबौधायनः) चतुरस्रंत्रिकोणंचवर्तुलंचार्धचन्द्रकम् ॥ कर्तव्यमानुपूर्व्येणब्राह्मणादिषुमण्डलम्(तत्रैवलौगाक्षिः)हस्तद्वयमितंकार्यंवैश्वदेविकमंडलम् ॥ दक्षिणेचचतुर्हस्तंपितॄणांसंप्रशोधने (कालिकायांसंग्रहेतु ) प्रादेशमात्रंदेवानां चतुरस्रन्तुमण्डलम् ॥ त्यक्त्वाषडंगुलंतस्मा द्दक्षिणेवर्तुलन्तथेत्युक्तम् ( स्मृत्यन्तरे ) गर्तःपञ्चांगुलोविप्रे जानुमात्रोमहीभुजि । प्रादेशमात्रोवैश्येच साधिकःसतुशूद्रके ॥ तिर्यगूर्ध्वप्रमाणेन व्याख्यातोदैवपित्र्ययोः । चतुरस्रंवर्तुलञ्चकथितंगर्तलक्षणम् ॥ पादप्रक्षालनंप्रोक्त मुपवेश्यासनेद्विजान् । तिष्ठंचेत्क्षालनंकुर्य्या न्निराशाःपितरोगता इति तत्समूलत्वेमण्डलाग्रेपृथक्ज्ञेयम् ( तत्रगोमयेहेमाद्रौभृगुः ) अत्यन्तजीर्णदेहाया वन्ध्यायाश्चविशेषतः । आर्त्तायानवसूताया नगोर्गोमयमाहरेत् ( मात्स्ये ) अक्षताभिःसपुष्पाभिस्तदभ्यर्चापसव्यवत् । विप्राणांक्षालयेत्पादा नभिवन्द्यपुनःपुनः ॥ प्रत्यङ्मुखःस्थितःकुर्य्याद्विप्रपादाभिषेचनम् ( तत्रैव भविष्ये) प्रक्षालयेद्विप्रपादान् शन्नोदेवीरितित्यृचा (पृथ्वीचन्द्रोदयेवृद्धवशिष्ठः)नकुशग्रन्थिहस्तस्तु पाद्यंदद्याद्विचक्षणः ( कालिकायांसंग्रहे) ततःप्रक्षालयेत्पादौभार्यास्त्राविवारिणा ( तथा ) श्राद्धकालेयदापत्नीवामेनोरप्रदाभवेत् । आसुरन्तद्भवेच्छ्राद्धंपितॄणांनोपतिष्ठते (तत्रैव) नाधःप्रक्षालयेत्पादौकर्त्तापित्रादिकर्मसु ॥ पाद्यानंतरमर्घ्यमपिदद्यादितिहेमाद्रिः (तत्रैवलौगाक्षिः) मंडलादुत्तरेदेशेदद्यादाचमनीयकम् (तत्रैव) विधायक्षालनंतेषांद्विराचमनमिष्यते । स्वयं चापिद्विराचामेद्विधिज्ञःश्रद्धयान्वितः (हेमाद्रौनारदीये) यत्राचमनवारीणिपादप्रक्षालनोदकैः । संगच्छंतेबुधाःश्राद्धमासुरंतत्प्रचक्षते (हेमाद्रौव्यासः) सव्येनैवासनंदत्त्वादक्षिणेदक्षिणंकरम् ॥ व्याहृतीभिःसमस्ताभिरासनेषूपवेशयेत् ॥ समाध्वमितिचैवोक्त्वादक्षिणंजानुसंस्पृशन् । आस्यतामिति तान्ब्रूया दासनं

संस्पृशन्त्रपि (हेमाद्रौशातातपः) द्वौदैवेथर्वणौविप्रौप्राङ्मुखावुपवेशयेत्। पित्र्ये तदंमुखांस्त्रीन्‌ऋग्वबह्वृचाध्वर्युसामगान् (याज्ञवल्क्यः) द्वौदैवेप्राक्त्रयःपित्र्येउदगेकैकमेववा (यत्तुहेमाद्रौहारीतः) दक्षिणाग्रदर्भेषुप्राङ्मुखान्भोजयेदुदङ्मुखानित्येके तितन्मैत्रायणीयविषयम् ॥ प्राङ्मुखान्भोजयेदुदङ्मुखानित्येके इतितत्परिशिष्टात् ॥ विकल्पइतिहेमाद्रिः (माधवीयेयमः) भिक्षुकोब्रह्मचारी वाभोजनार्थमुपस्थितः।उपविष्टेष्वनुप्राप्तःकामंतमभिभोजयेत् (कौर्मे) अतिथिर्यस्यनाश्नातिनतच्छ्राद्धंप्रचक्षते (विप्रनियमेमाधवीये) पवित्रपाणयःसर्वेतेचमौनव्रतान्विताः ॥ उच्छिष्टोच्छिष्टसंस्पर्शंवर्जयंतःपरस्परम् (तत्रासनानिपृथ्वीचंद्रोदयेयमः) आसनंकुतुपंदद्यादितरद्वापवित्रकम् (हेमाद्रौचमत्कारखंडे) पितृणांघटितंहैमंराजतंवापिचासनम् ॥ येनताम्रमयंदत्तमासनंपितृकर्मणि ॥ सर्वेदिव्यासनारूढोनरिहप्रच्यवतेदिवः (हेमाद्रौनागरखंडे) अयःशंकुमयंपीठंप्रदेयंनोपवेशने (कालिकायांसंग्रहे) क्षौमंदुकूलंनैपालमाविकंदारुजंतथा ॥ तार्णंपार्णं बृसींचैवविष्टरादिचविन्यसेत् ॥ अग्निदग्धान्यायसानिभग्नानिचविवर्जयेत् (हेमाद्रौछागलेयः) पश्चाद्भागादुपक्रम्यप्राच्यांपंक्तिर्यथाभवेत् ॥ दक्षिणासंस्थिता ह्येषापितृणांश्राद्धकर्मणि (पुलस्त्यः) श्रीपर्णीवारुणीक्षीरीजंबुकाम्रकदंबकाः।सप्तमंवाकुलंपीठं पितृणांदत्तमक्षयं (संग्रहे) शमीचकाश्मरीशालुःकदंबोवारुणस्तथा । पंचासनानिशस्तानिश्राद्धेदेवार्चनेतथा (कारिका) द्वौदैवेप्राङ्मुखौपित्र्येत्रीन्विप्रानुदगाननान् (पैठीनसिः) कुतपःश्राद्धवेलायांश्रोत्रियोयदिदृश्यते (आश्वलायनः) नीवीवासोदशांतेनस्वरक्षार्थप्रबंधयेत् (वृद्धयाज्ञवल्क्यस्तु) दक्षिणेकटिदेशेतुतिलैःसहकुशत्रयम् (यस्तुकातीयम्) नीवीकार्या दशायुक्तिर्वामकुक्षौकुशैःसहेतितद्वृद्धिश्राद्धे ॥ पितॄणांदक्षिणेपार्श्वेविपरीतातुदैविकइतिस्मृत्यंतरात् ॥ वामेदक्षिणेवेत्याचाराद्व्यवस्थेतिमदनपारिजाते (आचार्यः) प्राणायामत्रयंकृत्वागायत्रीस्मरणंतथा । श्राद्धंकर्तास्मीतिवदेद्द्विप्रैर्वाच्यंकुरुष्वच (ब्राह्मे) ततस्तिलान्गृहेतस्मिन्विकिरेच्चाप्रदक्षिणम् । अश्द्धयापरयायुक्तोजपेदपहताइति (स्मृत्यर्थसारे) अपहताइतितिलान्विकीर्यउदी

रतामित्यृचाप्रोक्षेत् (पराशरः) तद्विष्णोरितिमंत्रेणगायत्र्याचप्रयत्नतः । प्रोक्षयेदन्नजातंतुशूद्रदृष्ट्यादिशुद्धये ( हेमाद्रौब्रह्मांडे) श्राद्धभूमौगयांध्यात्वाध्यात्वादेवंगदाधरम् । वस्वादींश्चपितॄन्ध्यात्वाततःश्राद्धंप्रवर्तते ॥ देवताभ्यःपितृभ्यश्चमहायोगिभ्यएवच । नमःस्वाहायैस्वधायैनित्यमेवनमोनमः ॥ आदिमध्यावसानेषुत्रिरावृत्तंजपेद्बुधः । पितरःक्षिप्रमायांतिराक्षसाःप्रवदंतिच (तत्रैव स्कांदे ) तिलारक्षंत्वसुरान्दर्भारक्षंतुराक्षसान् । पंक्तिंवैश्रोत्रियोरक्षेदतिथिःसर्वरक्षकः ( वसिष्ठः ) शुद्धवतीभिःकूष्मांडीभिःपावमानीभिश्चपाकादिप्रोक्षयेत् (अथदेवार्चा) तत्रप्रत्युपचारमाद्यंतयोरपोदद्यादित्युक्तंवृत्तौस्मृत्यर्थसारे च (हेमाद्रौब्राह्मे) आसनेष्वासनन्दद्याद्वामेवादक्षिणेपिवा । पितृकर्मणिवामे चदैवेदद्यात्तुदक्षिणे (प्रचेताः) आसनेष्वासनंदद्यान्नतुपाणौकदाचन । धर्मासीत्यथमंत्रेणगृह्णीयुस्तेतुतान्कुशान् ॥ धर्मासिविशिराजाप्रतिष्ठितइतिमंत्रः (गालवः ) दर्भानादायहस्ताभ्यांगृहीत्वादक्षिणेकरे । दैवेक्षणःक्रीयतांतुनिरंगुष्ठं करंततः ॥ ओंतथेतिद्विजाब्रूयुस्तेप्राप्नोतुभवानिति ॥ कर्ताब्रूयात्ततोविप्रःप्राप्नवानीतिवैवदेत् ( पृथ्वीचन्द्रोदयेबृहन्नारदीये ) यवैर्दर्भैश्चविश्वेषांदेवानामिदमासनम् । दत्त्वेतिभूयोदद्याद्वैदैवेष्वाइतिक्षणम् ॥ तच्चस्वस्थाच्चतुर्थ्यावाकार्यमितिसएव ॥ ततोर्घ्यंकल्पयेदितिमन्वादयः ॥ शौनकजयंताभ्यामर्घ्यरहितस्येदवार्चनस्योक्तेः ॥ आश्वलायनानांदैवेर्घ्यदानंवोपदेवस्तन्न ॥ परिशिष्टप्रयोगपारिजातविरोधात् ॥ वृद्धिश्राद्धेतुदैवेप्यर्घ्यंदद्यात् ॥ देवेभ्योपिपृथग्दद्यादित्याहार्घ्यंश्रुतिचोदनादिति शौनकोक्तेः ( अथार्घ्यपात्रपृथ्वीचन्द्रोदयेमात्स्यपाद्मयोः ) पात्रंत्रनस्पतिमयंतथापर्णमयंपुनः । जलजंवापिकुर्वीततथासागरसंभवम् ( ब्राह्मे) सौवर्णताम्ररौप्याश्मस्फाटिकंशंखशुक्तयः । भिन्नान्यपि हियोज्यानि पात्राणिपितृकर्मणि ( हेमाद्रौप्रजापतिः ) सौवर्णराजतंताम्रंखाङ्गंमणिमयंतथा । यज्ञियंचसमंवापिअर्घ्यार्थंपूरयेद्बुधः ॥ अत्रविप्रैकत्वाहित्वचतुष्वादावर्घ्यपात्रेद्वेएव ॥ मानवसूत्रेतुद्वेवैश्वदेविकेत्रीणिपित्र्येएकैकस्मिन्यत्रचेत्युक्तंतदेकविप्रपरम् ॥ पात्रालाभपरंचेतिहेमाद्रिः ॥ मदनरत्नेतुदैवेए

कपात्रमुक्तम् ॥ पृथ्वीचन्द्रोदयेपिश्रीगणपतेत्कपात्राणि द्वेदैवेवैश्वदेविकइति बृह त्पराशरोक्तेर्द्वेएवेत्याह ॥ बह्वृचानांतुदैवेविप्रद्वित्वेप्येकमर्घ्यपात्रमश्वगोदद्या दित्युक्तंपरिशिष्टेप्रयोगपारिजातेच (कलिकायांहारीतः) दत्तमक्षय्यतांयाति खड्गेनार्घ्यंतुयत्कृतम् (वृद्धमनुः) मृन्मयंदारुजंपात्रमयःपात्रंचयद्भवेत् । राजतन्दै विकेकार्येशिलापात्रंचवर्जयेत् (पुराणसमुच्चये) मृत्स्नाभवंतथाकांस्यम् रक्तंजतु संभवम् । त्रपुसीसलोहभवंसदापात्रंविवर्जयेत् (तत्रैव) अष्टांगुलंभवेत्पात्रंपितृणां राजतंशुभम् । दशांगुलंतुदेवानांसौवर्णंशक्तितःकृतम् ॥ स्थापयेदर्घ्यपात्रेद्वेन्युब्जे तत्रकुशोपरि । द्वेद्वेपवित्रेविधिवत्पात्रयोश्चोपरिक्षिपेत् (यज्ञपार्श्वः) पवित्रस्ये तिमंत्रेणपवित्रेछेदयेत्तुते । ओषधीमंतरेकृत्वाअंगुष्ठांगुलिपर्वणोः । स्फ्येनका ष्ठेनलोहेननमृन्मयनखादिभिः (वशिष्ठः) तूष्णींप्रोक्ष्यांभसापात्रेकुर्याद्दूर्ध्वंबिले ततः । पूरयेत्पात्रयुग्मंतुकृत्वोपरिपवित्रके (वृद्धपराशरः) पात्रद्वयमथार्घ्यार्थं तैजसंचैकवस्तुनः । प्राङ्मुखोमरतीर्थेनशन्नोदेव्योदकंक्षिपेत् । यवोसीतियवां स्तत्रतूष्णींपुष्पाणिचंदनम् (मानवसूत्रे) सुमनसःप्रक्षिप्योत्पूयवान्प्रक्षिप्येति (य वोसीतिमंत्रःपाद्मे) यवोसिधान्यराजोवावारुणोमधुमिश्रितः । निर्णोदःसर्वपा पानांपवित्रमृषिभिःस्मृतः ॥ राजोवावारुणोमधुसंयुतइतिपरिशिष्टपाठः ॥ गो भिलेनतुयवोसिसोमदेवत्यइतितिलमंत्रोत्रस्वाहायुक्तउक्तः (हेमाद्रौयमः) यवह स्तस्ततोदेवान्विज्ञाप्यावाहनंप्रति । आवाहयेत्यनुज्ञातोविश्वेदेवासइत्यृचा (वृ द्धपराशरः) ततःसव्यकरंन्यस्यविप्रदक्षिणजानुनि । देवानावाहयिष्येहमिति वाचमुदीरयेत् ॥ आवाहयेत्यनुज्ञातो विश्वेदेवासआगत । विश्वेदेवाःशृणुतेममि तिमंत्रद्वयंपठेत् (श्राद्धविशेषेविप्रवेदेवानामज्ञानेहेमाद्रौबृहस्पतिः) उत्पत्तिंनाम चैतेषांनविदुर्येद्विजातयः । अयमुच्चारणीयस्तैर्मंत्रःश्रद्धासमन्वितैः ॥ आगच्छंतु महाभागाविश्वेदेवामहाबलाः । येअत्रविहिताःश्राद्धेसावधानाभवंतुते ॥ इदंचा वाहनमर्घ्यपत्रासादनात्प्राक्हेमाद्रिणोक्तम् ॥ तत्रकातीयैःप्राक्कार्यंतथैवतत्सूत्रा त ॥ अन्यैस्तदुत्तरम् (पृथ्वीचंद्रोदयेशंखः) सयवंपुष्पमादायचरणादिशिरोंतिं कम् । अर्चतेत्यर्चनंकुर्यादंतरेचोदकंतथा । पिञ्येतुमूर्द्धादिपादांतम् ॥ पादप्रभृति

मूर्द्धांतंदैविकेपूजनंभवेत् । शिरःप्रभृतिपादांतंनमोवइतिपैतृकेइतिमदनरत्नेप्रचेत
सोक्तेः(कालिकायांसंग्रहे) तिष्ठन्कृतांजलिर्भूत्वापठेन्मंत्रंसमाहितः । विश्वेदेवाः
शृणुतेइत्यागच्छत्वपरंततः (हेमाद्रौजातूकर्ण्यः) ततोर्घ्यपात्रसंपत्तिंवाचयित्वा
द्विजोत्तमान् । तदग्रेचार्घ्यपात्रंतुस्वाहार्घ्याइतिविन्यसेत् (गार्ग्यः) दत्वाहस्तेप
वित्रंचकृत्वापूजांचपादतः । यादिव्याइतिमंत्रेणहस्तेत्वर्घ्यंविनिक्षिपेत्(संग्रहे)
विश्वेदेवाइदंवोर्घ्यमितिदानंसमादिशेत् । तदंतेस्वाहानमइतिवाच्यम्॥ यादिव्या
इतिमंत्रेणस्वाहाकारंनमोंतकमितिहेमाद्रौनागरखंडात्(आथर्वणसूत्रेतु)पाद्यम
र्घ्यमाचमनीयमितिद्विजकरेनिनयेदित्यस्यैवत्रयमुक्तम्(गभस्तिः) अर्घ्यंचपिंड
दानंचस्वस्त्यक्षय्येतथैवच। गंधपुष्पादिकंसर्वंहस्तेनैवतुदापयेत्॥प्रतिविप्रंयादि
व्येत्यावृत्तिः॥ बहृचानांत्वनेनदत्तार्घ्यानुमंत्रणम्॥ततःपात्रंदक्षिणेदेवेभ्यःस्था
नमसीतिन्युब्जमुत्तानंवाकार्यमितिगारुडेउक्तम्॥एतदापस्तंबानांनियतमन्येषां
न(हेमाद्रौविष्णुधर्मे) गंधैःपुष्पैश्चधूपैश्चवस्त्रैश्चाप्यथभूषणैः । अर्चयेद्ब्राह्म
णान्शक्त्याश्रद्दधानःसमाहितः(पृथ्वीचंद्रोदयेमार्कंडेयः) चंदनागरुकर्पूरकुंकु
मानिप्रदापयेत्(विष्णुः)चंदनकुंकुमकर्पूरागरुपद्मकान्यनुलेपनार्थेति(व्यासः)
अपवित्रकरोगंधैर्गंधद्वारेतिपूजयेत् (कालिकायांस्मृतिः)गंधद्वारेतिवैगंधमायने
तेचपुष्पकम् । धूरसीत्यमुनाधूपमुद्दीप्यस्वेतिदीपकम् ॥ युवंवस्त्राणिमंत्रेणव
स्त्रंदद्यात्प्रयत्नतः । आसनेस्त्वासनंब्रूयादर्घ्येस्त्वर्घ्यंद्विजोत्तमः ॥ सुगंधिश्चपुष्पु
ष्पाणिसुमाल्यानिसुधूपकः ॥ सुज्योतिश्चैवदीपेतुस्वाच्छादनमितिक्रमः ॥ वि
प्राणांगंधेनवर्तुलंत्रिपुंड्रं वानकार्यम् (हेमाद्रौदेवलः)ललाटेपुंड्रकंदृष्ट्वास्कंधेमा
लांतथैवच । निराशाःपितरोयांतिदृष्ट्वाचवृषलीपतिम् ॥ पुंड्रं वर्तुलमित्यपरा
र्केमदनरत्नेच । पुंड्रं त्रिपुंड्रं वर्तुलमर्धचंद्रंच ॥ ऊर्ध्वंचतिलकंकुर्यान्नकुर्याद्वैत्रिपुं
ड्रकं॥ऊर्ध्वंचतिलकंकुर्याद्दैवेपित्र्येचकर्मणि । निराशाःपितरोयांतिदृष्ट्वाचैव
त्रिपुंड्रकमितिवृद्धपराशरोक्तेस्तिर्यक्लेपोभवत्येव॥ वर्जयेत्तिलकंभालेश्राद्धका
लेचसर्वदा। तिर्यगप्यूर्ध्वपुंड्रं वाधारयेत्तुप्रयत्नतइतिव्यासोक्तेरितिपृथ्वीचंद्रः
(यत्तुबृहन्नारदीये)ऊर्ध्वपुंड्रं चतुलसींश्राद्धेनेच्छंतिकेचनेतितत्कर्तृपरम् ( हेमा

द्रौब्राह्मे) पूतिकंमृगनाभिंचरोचनंरक्तचंदनम् । कालेयकंतुग्रगंधंतुरुष्कंचापिव र्जयेत् ॥ कस्तूर्यांविकल्पइतिहेमाद्रिः (वृद्धशातातपः) पवित्रंतुकरेकृत्वायःस मालभतेद्विजान् । राक्षसानांभवेच्छ्राद्धंनिराशैःपितृभिर्गतैः ( पुष्पंतुब्राह्मे ) जा तीचंपकलोध्रश्चमल्लिकाबाणबर्बरी । चूताशोकाटरूषंचतुलसीशतपत्रकं ॥ कुब्जकंतगरंचैवभृंगमारण्यकेतकी । यूथिकामतिमुक्तंचश्राद्धेयोग्यानिभोद्वि जाः ॥ कमलंकुमुदंपद्मंपुंडरीकंचयत्नतः ॥ इंदीवरंकोकनदंकह्लारंचनिवेदयेत् ( हेमाद्रौवायुभविष्ययोः ) सुकुमारैःकिसलयैर्यवदूर्वांकुरैरपि । संपूजनीयाः पितरःश्रेयस्कामेनसर्वदा ( स्कांदे ) जातिश्चसर्वादातव्यामल्लिकाश्वेतयूथि का । जलोद्भवानिसर्वाणिकुसुमानिचचंपकम् ( तत्रैववृद्धमनुः ) ननियुक्तःशि खावर्ज्यंमाल्यंशिरसिधारयेत् ( वर्ज्यानिपृथ्वीचंद्रोदयेभविष्ये ) केतकींतुल सीपत्रंबिल्वपत्रंचवर्जयेत् । द्रोणांचकरवीरंच धत्तूरंकिंशुकंतथा ( माधवीये स्मृत्यर्थसारेतुलसीनिषिद्धा ) तुलसीनिषेधोनिर्मूलइतिहेमाद्रिः ॥ समूलत्वेपि पिंडपरः ॥ तुलसीगंधमाघ्रायपितरस्तुष्टमानसाः । प्रयांतिगरुडारूढास्तत्पदं चक्रपाणिनइतिप्रयोगपारिजातेपाद्मोक्तेरितिबोपदेवः ( वृद्धपराशरः ) नजा तीकुसुमैर्विद्वान्बिल्वपत्रैश्चनार्चयेत् । जपादिकुसुमंभिंटीरूपिकासकुरंटिका पुष्पाणिवर्जनीयानिश्राद्धकर्मणिनित्यशः(हेमाद्रौशंखः) उग्रगंधीन्यगंधीनिचै त्यवृक्षोद्भवानिच । पुष्पाणिवर्जनीयानिरक्तवर्णानियानिच ॥ जलोद्भवानिदेया नि रक्तान्यपिविशेषतः ( अंगिराः ) नजातीकुसुमानिदद्यान्न कदलीपत्रमि तिजातांविकल्पइतिहेमाद्रिः ॥ निषेधःपिंडविषयः ॥ कुंदंशंभौचनोदद्यान्नो न्मत्तं गरुडध्वजे । पिंडेजातीचनोदद्याद्देवीमर्केणनार्चयेदिति वृद्धयाज्ञवल्क्यो क्तेरितिबोपदेवः ( स्मृतिसारे ) आगस्त्यंभृंगराजंचतुलसीशतपत्रिका । चं पकंतिलपुष्पंचषडेतेपितृवल्लभाः ॥ केतकींकरवीरंचबकुलंकुंदकंतथा । पाट लांचैवजातींचश्राद्धेयत्नेनवर्जयेत्(केचित्पिंडेतुलसीमाहुः) पितृपिंडार्चनंश्राद्धे यैःकृतंतुलसीदलैः ॥ पीडिताःपितरस्तैस्तुयावच्चंद्रार्कमेदिनीति मार्कंडेयोक्तेः ( धूपस्तत्रैवविष्णुधर्मे ) धूपस्तुगुग्गुलुर्देयस्तथाचंदनसारजः । अगरुश्चसकर्पू

रस्तुरुष्कस्त्वक्तथैवच ( विष्णुः ) घृतमधुयुक्तंगुग्गुलुंश्रीखंडदेवदारुसरला
दिदद्यादिति (तत्रैवदेवलः) येहिप्राण्यंगजाधूपाहस्तवाताहताश्चये ॥ नतेश्रा
द्धेनियोक्तव्यायेचकेचोग्रगंधयः ॥ घृतंनकेवलंदद्याद्दुष्टंवातृणगुग्गुलुम् ( दीपमा
हविष्णुः)घृतेनदीपोदातव्यस्तिलतैलेनवापुनः । वसामेदोद्भवंदीपंप्रयत्नेनविवर्ज
येत् ( वस्त्रंब्राह्मे ) कौशेयंक्षौमकार्पासंदुकूलमहतंतथा । श्राद्धेष्वेतानियोदद्या
त्कामानाप्नोतिचोत्तमान् (हेमाद्रौब्रह्मवैवर्ते ) यज्ञोपवीतंदातव्यंवस्त्राभावेविजा
नता । पितृभ्योवस्त्रदानस्यफलंतेनाश्नुतेखिलम् ( तत्रैवपाद्मे ) निष्क्रयोवाय
थाशक्तिवस्त्राभावेप्रदीयते । अन्यान्यपिचदेयानि ( तत्रैवकालिकापुराणेधा
त्वादिनिर्मितारम्यादीपिकाःश्राद्धकर्मणि । पितॄनुद्दिश्ययोदद्यात्सभवेद्भाज
नंश्रियः ॥ योधूपदानपात्रंतु पात्रमारार्तिकस्यच । दद्यात्पितृभ्यःप्रयतस्तस्य
स्वर्गेक्षयागतिः(विष्णुधर्मे) यःकंचुकंतथोष्णीषंपितृभ्यःप्रतिपादयेत् । ज्वरोद्भ
वानिदुःखानिसकदाचिन्नपश्यति। स्त्रीणांश्राद्धेतुसिंदूरंदद्युश्चंडातकानिच॥नि
मंत्रिताभ्यःस्त्रीभ्योयेतेस्युःसौभाग्यसंयुताः(हेमाद्रावादित्यपुराणे) नक्तश्यावर्णं
दातव्यंनापिकार्पाससंभवम् । पितृभ्योनापिमलिनंनोपयुक्तंकदाचन ॥ नच्छि
द्रितंनापदशांनधौतंकारुणापिच । कार्पासनिषेधोन्यसंभवे ( तत्रैव ) पितॄनस
त्कृत्यवासोभिर्दद्याद्यज्ञोपवीतकम् । यज्ञोपवीतदानेनविनाश्राद्धंतुनिष्फलम् ॥ स
तद्यतिस्त्रीशूद्रश्राद्धेपिदेयमितिहेमाद्रिः ( तत्रैवनृसिंहपुराणे ) कमंडलुंताम्रमयं
श्राद्धेषुप्रददातियः ॥ काष्ठेर्निर्मितंवापिनारिकेलमथापिवा ॥ दद्यात्कमंडलुं
श्राद्धेसःश्रीमानभिजायते । योमृत्तिकाविरचितान्श्राद्धेषुचघटान्शुभान् ॥ प्रद
द्यात्करकान्वापिसोऽक्षयंविंदतेसुखम् (तत्रैव) उपानच्छत्रवस्त्राणिभुक्तिपात्रंक
मंडलुम् । शयनासनयानानिदर्पणव्यजनानिच ॥ अन्नंसुसंस्कृतंगंधांस्तांबूलंदी
पचामरम् । पितृभ्योयःप्रयच्छेत्तुविष्णुलोकंसगच्छति ( सौरपुराणे ) चाम
रंतालवृन्तंचश्वेतच्छत्रंचदर्पणम् । दत्त्वापितॄणामेतानिभूमिपालोभवेदिह (तत्रै
वनंदिपुराणे) अलंकाराःप्रदातव्यायथाशक्तिहिरण्मयाः ॥ केयूरहारकटक
मुद्रिकाकुंडलादयः(तथा) स्त्रीश्राद्धेषुप्रदेयाःस्युरलंकारास्तुयोषिताम् । मंजीर

मेखलादामकर्णिकाकंकणादयः ॥ आदर्शव्यजनच्छत्रशयनासनपादुकाः ॥
मनोज्ञाःपट्टवासाश्चसुगंधाश्चूर्णमुष्टयः । अंगारधानिकाःशीतेयोगपट्टाश्चवृ
ष्टयः ॥ कटिसूत्राणिरौप्याणिमेखलाश्चैवकंबलाः ॥ कर्पूरादेश्चभांडानितां
बूलायतनंतथा ॥ भोजनाधारयंत्राणिपतद्ग्रहांस्तथैवच । तथांजनशलाकाश्च
केशानांचप्रसाधनम् ॥ एतान्दद्यात्तु यःसम्यक्सोश्वमेधफलंलभेत् (स्कांदे) सौ
वर्णंराजतंवापिकांस्येनाप्यथनिर्मितम् । दत्वाभोजनपात्रंतुसम्राट्भवतिभूतले॥
( वामनपुराणे ) बंदीकृतास्तुयेकेचित्स्वयंवायदिवापरैः । येनकेनाप्युपायेन
यस्तान्मोचयतेनरः ॥ पितरस्तस्यगच्छंतिशाश्वतंपदमव्ययम् (पराशरः) वाच
येत्पारिपूर्णत्वंवासोदत्वाविधानतः (नारदीये) दैवैश्चसमनुज्ञातोयजेत्पितृगणां
स्तथ ॥ तत्रपित्र्येआसनाद्यशेषमर्चनकांडवैश्वदेविकंज्ञेयं ( विशेषस्तूच्यते॥तत्रा
सनेद्विगुणभुग्नाः कुशाः) अत्रावाहनमासनात्पूर्वंवार्घ्यपूरणोत्तरंवाग्नौकरणो
त्तरंवेतिस्मृतिषुपक्षाउक्ताः ॥ एषांशाखाभेदेनव्यवस्था ॥ द्वितीयपक्षएवबहुसं
मतः (तत्रार्घ्यमाश्वलायनः) तैजसाश्ममयमृन्मयेषुत्रिषुपात्रेष्वेकद्रव्येषुवादर्भां
तर्हितेष्वपःप्रसिच्य । शन्नोदेवीरित्यनुमंत्र्यतिलानावपति । तिलोसिसोमदेव
त्योगोसवेदेवनिर्मितः । प्रत्नवद्भिःप्रत्तस्स्वधयापितॄनिमांल्लोकान्प्रीणयाहिनः
स्वधानमइति ॥ अश्ममयंस्फाटिकादिमृन्मयंहस्तकृतमेव ॥ कुलालचक्रनिष्प
न्नमासुरंदैविकंनतत् ॥ तदेवहस्तघटितंदैविकंकेवलंतथेतिच्छंदोगपरिशिष्टात् ॥
( अन्यान्यपिपात्राणिपूर्वमुक्तानिमनुः )अन्नाभावेद्विजाभावेयद्येकोब्राह्मणोभ
वेत् । पात्राण्यासादयेत्त्रीणिनतुब्राह्मणसंख्यया ॥ दत्तकादेःकर्तुर्द्विपितृत्वादा
वपिवचनात् ॥ त्रीण्येवपात्राणीतिहरिहरः ( माधवीयेबैजवापः ) अर्घ्येपि
तॄणांत्रीण्येवकुर्य्यात्पात्राणिधर्मवित् ॥ एकस्मिन्वाबहुषुवाब्राह्मणेषुयथा
विधि ॥ हेमाद्रावप्येवम् ॥ अत्रानुमंत्रणंसकृत् ॥ तिलोसीत्यस्यप्रतिपात्रमावृत्तिः
पितृशब्दस्यानुहश्चेतिवृत्तिकृत् ॥ दर्भांश्चत्रिगुणांपवित्रम् ॥ तिस्रःशलाकास्तु
पितृपात्रेषुपार्वणे । एकोद्दिष्टेशलाकैकां निधायोदकमाहरेदिति हेमाद्रौचतु
र्विंशतिमतात् ( तत्रैवविष्णुः ) दक्षिणाग्रदर्भेषुदक्षिणापवर्गंचमसेषु पवित्रं

तर्हितिष्ठपत्र आसिंचेच्छन्नोदेवीतिमंत्रेणजलसेचनंबह्वृचभिन्नविषयम् ॥ अत्रा
स्मिन्पक्षेप्रतिपात्रंमंत्रावृत्तिः (कारिकायाम्) गंधपुष्पाणिचैतेषुपात्रेषुप्रक्षिपेद
थ (ब्राह्मे) जलंक्षीरंदधिघृतंतिलतंडुलसर्षपान्। कुशाग्रमधुपुष्पाणिदत्त्वाचामे
त्ततःस्वयम् (जातूकर्ण्यः) ततोर्घ्यपात्रसंपत्तिंवाचयित्वाद्विजोत्तमान् ॥ तदग्रे
ऽर्घ्यपात्राणिस्वधाऽर्घ्याइतिविन्यसेत् ॥ ततस्तिलहस्तोविप्रसव्यजानौदक्षिण
करंन्यस्यावाहनंपृच्छेत् ॥ अत्रगोत्रसम्बन्धनामानिद्वितीयांतत्त्वंचप्रागुक्तम् (बैज
वापगृह्ये) तिष्ठन्पितॄनावाहयिष्यामीत्यामंत्र्य (कौर्मे) अपसव्यंततःकृत्वापितॄ
णांदक्षिणामुखः आवाहनंततःकुर्यादुशंतस्त्वेत्यृचाबुधः ॥ आवाह्यतदनुज्ञातोज
पेदायंतुनस्ततः। अत्रसव्यस्यापिप्रागुक्तेर्विकल्पः ॥ अत्राद्यमंत्रावृत्त्याऽस्मत्पित
रममुकशर्म्माणममुकगोत्रंवसुरूपमावाहयामीत्युक्त्वामूर्धादिपादांततिलान्वि
कीर्यायंतुनइतिसर्वांतेसकृज्जपेदितिनिबंधाः ॥ अत्रोपवेशनसंवेशनपाद्यार्घ्याच
मनीयान्यपिहेमाद्रिणोक्तानितान्यथर्ववेदिनांनियतानिनान्येषाम् ॥ तेषांच
प्रपितामहादिपत्रंतंप्रातिलोम्येनसर्वःप्रयोगः (वाराहे) गंधपुष्पार्चनंकृत्वादद्या
द्धस्तेतिलोदकम् (गार्ग्यः) शिरस्तःपादतोवापिसम्यगभ्यर्चयेत्ततः ॥ ततःस्वधा
ऽर्घ्याइतिपितृपितामहादिविप्राग्रेप्रत्येकंनिवेदयेदितिकारिकायांवृत्तौच (आ
श्वलायनः) प्रसव्येनेतरपाणयंगुष्ठांतरेणोपवीतीत्वादक्षिणेनवासव्योपगृहीतेन
पितरिदंतेअर्घ्यंपितामहेदंतेअर्घ्यंप्रपितामहेदंतेअर्घ्यमित्यप्पूर्वताःप्रतिग्राहयि
ष्यन्सकृत्सकृत्स्वधाअर्घ्याइतिप्रसृष्टाअनुमंत्रयीत ॥ यादिव्याआपःपृथिविसं
बभूवुर्याअंतरिक्ष्याउतपार्थिवीर्याः ॥ हिरण्यवर्णायज्ञियास्तानआपःशंस्यो
नाभवंतु ॥ अर्घ्यादिप्राग्गंधादेर्यज्ञोपवीतमेव ॥ अर्घ्यदानात्प्रागन्याअपो
दद्यात् ॥ यद्यप्यत्रसव्येनदक्षिणेनवाऽर्घ्यंदद्यादित्युक्तंतथापिदक्षिणेनेत्यभिमतो
र्थः ॥ कारिकायांवृत्तौचैवम् ॥ पित्रादेस्त्रिभिःपात्रैर्दद्यात् ॥ पितुःस्थानेविप्र
त्रयंचेदेकमर्घ्यंविभज्यदद्यात् ॥ त्रयाणांस्वधाअर्घ्याइतिसकृन्निवेदनम् ॥ एवं
पैतामहादावपि ॥ अन्यजलदानमर्घ्यमंत्राश्चप्रतिविप्रमावर्तंते ॥ तेषुगंधादौच
प्रतिविप्रंपदार्थानुसमयःकाण्डानुसमयोवापित्रादित्रयाणामेकविप्रपक्षेत्रिभिः

पात्रैरेकस्यैवार्घ्यंदद्यादितिवृत्तिः (कारिकापि) स्वधाऽर्घ्यइत्यपोर्घ्यस्ताउपवी तीनिवेदयेत् ॥ निवेदनात्प्राक्प्राचीनावीतमेवेत्यर्थः ॥ अर्घ्यंसशेषमादाय दक्षिणेनतुपाणिना । सव्यहस्तगृहीतेनर्नानयेत्पितृतीर्थतः ॥ दत्वादत्वानिनीतास्तायादिव्याचानुमंत्रयेत् ( यत्तु ) यादिव्याइतिमंत्रेणहस्तेऽर्घ्यंविनिक्षिपेदिति (यच्चवाराहे ) तिलांबुनाचापसव्यंदद्यादर्घ्यादिकंद्विजइति (यच्चव्यासः) गोत्रसंबंधनामानिपितॄणामनुकीर्तयन् एकैकस्यतुविप्रस्यअर्घ्यपात्रंविनिक्षिपेदितितद्धस्तचार्तिरिक्तविषयम् ॥ ततआचामेत् ॥ एवंमातामहेष्वपि (आश्वलायनः) संस्रवान्समवनीयताभिरद्भिःपुत्रकामोमुखमनक्ति । संस्रवशेषः । संस्रवोहिपरिशिष्टोभवतीतिमातपथश्रुतेः॥केचित्तुहस्तगलितांबुवदंति॥ समवनीयात्येकैपात्रेपितृपात्रंआसिंचेत्तिवृत्तिःप्रथमेपात्रे संस्रवान्समवनीयेति कातीयसूत्राच्च ॥ ब्राह्मेतुप्रतिबिंबावलोकनमुक्तम् ॥ स्कांदेत्वायुःकामस्यनेत्रासेचनमुक्तम् ॥ पित्र्यविप्रैःप्राङ्मुखस्यकर्तुरभिषेकःकार्यइतिकेचित् (आश्वलायनः) नोद्धरेत्प्रथमंपात्रंपितॄणामर्घ्यपातितम् । आवृतास्तत्रतिष्ठंतिपितरःशौनकोऽब्रवीत् ॥ यावद्विप्रविसर्जनमितितुर्यपादेयमोयःपाठः (अत्रवृत्तिः) पितृपात्रंसमवनयनदेशान्नचालयेदाश्राद्धसमाप्तेः । यस्मात्तत्रतृतीयपात्रेणावृत्ताइति॥ यद्वा । प्रथमपात्रमेवन्यग्विलंकुर्यादिति॥ कामाभावेपीदमेवशेषप्रतिपादनम्(हेमाद्रौकौर्मे) संस्रवांश्चततःसर्वान्पात्रेकुर्यात्समाहितः । पितृभ्यःस्थानमसीतिन्युब्जंपात्रंनिधापयेत्(शूलपाणीयमस्तु) पैतृकंप्रथमंपात्रंतस्मैपैतामहंन्यसेत्।प्रपितामहंततोन्यस्यनोद्धरेन्नचचालयेदित्याह ॥ अथसंस्रवानातृतीयतृतीयेनाच्छाद्यन्युब्जीकुर्यादितिसर्वैकवाक्यतयार्थ इति केचित् ( अत्रिः ) गंधादिभिस्तदभ्यर्च्यतृतीयेनापिधापयेत् पितृभ्यःस्थानमसीतिशुचौदेशेऽर्चितेऽर्चयेत्॥ अर्चनंन्युब्जीकृतेपितुल्यंन्युब्जमुत्तरतोन्यसेदितिप्रचेतसोक्तेः ॥ सर्वविप्रोत्तरतोन्यसेदिति हेमाद्रिकल्पतरुः ॥ विप्रवामेइतिहलायुधः ॥ कर्तुर्वामेइतिशूलपाणिः ॥ उत्तानंविवृत्तंवापिपितृपात्रंनतद्भवेदित्युशनसोक्तेर्न्युब्जतैवसाधुः॥मातामहादिसंस्रवानपिपितृपात्रएवगृहीत्वाप्रयजवत्तन्त्रेणान्युब्जीकुर्यादिति शूलपाणिःसंक्षे

न्निष्टेतुहेनन्युब्जतेतिपितृभक्तौश्रीदत्तः(यमोपि) स्पृष्टमुत्तानमन्यत्रनीतमुद्घाटितंतथा॥ पात्रंदृष्ट्वाव्रजंत्याशुपितरस्तंशपंतिच(वैश्वदेवेउत्तानमितिमदनपारिजातःवैजवापः)तस्योपरिकुशान्दत्वाप्रदद्याद्देवपूर्वकंगंधपुष्पाणिधूपंचदीपंवस्त्रोपवीतके॥ अत्रगंधादेर्देवेपित्र्येचपदार्थानुसमयस्ययाज्ञवल्क्योक्तकांडानुसमयेनविकल्पोज्ञेयः॥ बह्वृचानांतुसूत्रेदेवानुक्तेःकांडानुसमयएव॥ अत्रप्राचीनावीतीनामगोत्रसंबुद्ध्याद्युक्तंप्राक्॥ अन्यद्दैववत्तदंतेआचमनंच(हेमाद्रौकालिकापुराणे)निर्वर्त्यब्राह्मणादेशात्क्रियामेवंयथाविधि ।भाजनानिततोदद्याद्धस्तशौचंपुनःक्रमात्॥ आदेशात्पात्राणिदद्यादित्यन्वयः॥ तेनतत्रापिप्रश्नानुज्ञेज्ञेये। (तत्रैवब्राह्मे) मंडलानिचकार्याणिनैवारैश्चूर्णकैःशुभैः। गौरमृत्तिकयावापिभस्मनागोमयेनवा(भृगुः)भस्मनावारिणावापिकारयेन्मंडलंततः। चतुःकोणंद्विजाग्र्यस्यत्रिकोणंक्षत्रियस्यतु। मंडलाकृतिवैश्यस्यशूद्रस्याभ्युक्षणंस्मृतं॥ (बह्वृचपरिशिष्टेतु) दैवेचतुरस्रंपित्र्ये वृत्तंमंडलंकृत्वाक्रमेणासयवान्सतिलांश्चदर्भान्दद्यादित्युक्तम् (मार्कंडेयः) यातुधानाःपिशाचाश्चक्रूरायेचैवराक्षसाः। हरंतिरसमन्नस्यमंडलेनविवर्जितम् (हेमाद्रौहारीतः) भूमावेवनिदध्याच्चोपरिपात्राणीति (तानिचहेमाद्रावत्रिराह) भोजनेहैमरौप्याणिदैवेपित्र्येयथाक्रमम् (हारीतः) राजतपर्णताम्रकांस्यपात्राणिभोजनेइति(तत्रैववाराहे) सौवर्णानिहरौप्याणिकांस्यानितदसंभवे। अन्यान्यपिहिकार्याणिदारुजान्यपिजानता॥ नायसान्यपिकार्याणिपैत्तलानिनतुक्वचित्। नचसीसमयानीष्टशस्यंतेत्त्रपुजान्यपि (अत्रिः) पंचाशत्पलिकंकांस्यंह्यधिकंभोजनायवै। गृहस्थैस्तुसदाकार्यमभावेहेमरौप्ययोः॥ पालाशेभ्योविनानस्युःपर्णपात्राणिभोजने (पृथ्वीचंद्रस्तु) कांस्यपात्रेहविर्दृष्ट्वानिराशाःपितरोगताइतिब्राह्मोक्तेःकांस्यपात्रनिषेधमाह (बोपदेवस्तुस्मृतिसंग्रहमुदाजहार) श्राद्धेपलाशपात्राणिमधुकौदुंबराणिच। पारिकाकुटजप्लक्षकंकचानिक्रमाज्जगुः॥ कदलीचूतपनसजंबुपुन्नागचंपकाः। अलाभेसुखपात्राणांग्राह्यास्युःपितृकर्मणीति (हेमाद्रौतुकदलीपात्रनिषेधमाहांगिराः) नजातीकुसुमानिदद्यान्नकदलीपात्रमिति

(क्रतुः) असुराणांकुलेजातारंभापूर्वपरिग्रहे । तस्यदर्शनमात्रेणनिराशाःपित रोगताः ॥ एवंपात्राणयासाद्यभस्ममर्यादांकृत्वाविप्रहस्तशोधनंकुर्यात् ॥ तत्रापि शंगरक्षणोइतिमंत्रद्वयंकेचित्पठंति (मात्स्ये) अकृत्वाभस्ममर्यादांयःकुर्या त्पाणिशोधनम् । आसुरंतद्भवेच्छ्राद्धंपितॄणांनोपतिष्ठते (तत्रैवब्रह्मांडे) प्रक्षाल्य हस्तपात्रादिपश्चाद्दद्याद्विधानवत् । प्रक्षालनजलंदर्भैस्तिलैर्मिश्रंक्षिपेच्छुचौ ॥ मंडलोपरीतिहेमाद्रिः (अथाग्नौकरणं ॥ हेमाद्रौमार्कंडेयः) आहिताग्निस्तु जुहुयाद्दक्षिणाग्नौसमाहितः । अनाहिताग्निश्चौपसनेऽग्न्याभावेद्विजेप्सु वा ॥ (वायवीये) आहृत्यदक्षिणाग्निंतुहोमार्थंवैप्रयत्नतः । अग्न्यर्थंलौकिकेवापि जुहुयात्कर्मसिद्धये ॥ आहिताग्निःसर्वाधानी ॥ अर्धाधानीतुगृह्यएवेतिचंद्रि कापरार्कमिताक्षरामाधवादयः ॥ तस्यापिदक्षिणाग्नौलौकिकोगृह्यइतिहेमा द्रिःकल्पतरुश्च ॥ आद्यपक्षएवतुयुक्तोबहुसंमतश्च ॥ यद्यपिस्मार्ताग्नौकर णंश्रौतेदक्षिणाग्नौनयुक्तंतथापिवचनाद्भवतीतिहेमाद्रिचंद्रिकादयः ॥ इदंदर्श श्राद्धएव ॥ आब्दिकादिषुतुसर्वाधानीपाणावर्धाधानीगृह्येकुर्यादितिहेमाद्रिमा धवादयश्च ॥ पक्षांतंकर्मनिर्वर्त्यवैश्वदेवंचसाग्निकः । पिंडयज्ञंततःकुर्यात्ततोन्वा हार्यकंबुधइतिलौगाक्ष्यादिभिःक्रमोक्तेर्विहृतदक्षिणाग्निसत्त्वात् ॥ अतएवात्र वचनेसाग्निकआहिताग्निरुक्तोहेमाद्रिणा ॥ एतदापस्तंबादीनामेव ॥ आ श्वलायनस्याहिताग्नेःपाणावेवेतिवृत्तिः ॥ अर्धाधानिनोगृह्यएवव्यतिषंगेणेति प्रयोगपारिजातेपरिशिष्टेच ॥ बोपदेवस्त्वाहहोमशब्दःपिंडपितृयज्ञपरःपितृ यज्ञेतुजुहुयाद्दक्षिणाग्नौसमाहितः । श्राद्धेत्वौपासनाग्नौतुनिरग्निर्लौकिकेन ले ॥ अनग्निर्दूरभार्यश्चपार्वणेसमुपस्थिते । संध्यायाग्निंततःकुर्याद्धोममग्निं समुत्सृजेदितित्रिकांडमंडनोक्तेः ॥ श्राद्धेगृह्याग्नावेवेतिलौकिकाग्न्यादिवि धानंचतैत्तिरीयादिविषयम् ॥ बह्वृचस्यत्वनग्नेरपिपाणिहोमएवअग्निपाणि विनासूत्रेविधानांतरानुक्तेः ॥ अग्न्यभावेतुविप्रस्यपाणावेवोपपादयेदितिमनू क्तेश्च ॥ वृत्तावप्येवम् ॥ क्वचित्साग्नेरपिपाणिहोमउक्तोगृह्यपरिशिष्टे ॥ अन्वष्टक्यंचपूर्वेद्युर्मासिमास्यथपार्वणम् । काम्यमाभ्युदयेऽष्टम्यामेकोद्दिष्टमथाष्ट

मम ॥ चतुर्थ्याद्येषुचाग्नीनांवह्नौहोमोविधीयते । पित्र्ययत्राह्मणहस्तेस्यादुत्तरेषुचतुर्थ्यपीति ॥ एकोद्दिष्टंसपिंडीकरणंमुद्वेतन्निषेधात् ॥ बह्वृचभाष्यकारास्तुसर्वैकोद्दिष्टेषुपाणिहोममाहुः ॥ इदंबह्वृचानामेव॥ अत्र दंतःस्वत । स्थालीपाकेनसहपिंडार्थमुद्धृत्येतिसूत्रेनानापूर्वःस्थालीपाकश्चोद्यते ॥ सर्वश्राद्धेषुप्रसंगात्तेनानुवादोयमितिवृत्तिकारोक्तेः ॥ पार्वणेश्राद्धिकस्याग्नेःस्यव्यतिषंगस्यवार्त्तिकादिष्ववीतिदेशादधीधानिनोपिपाणिहोमएवेतिवृत्तिस्वरसः ॥ एवंमासिकादावपि ॥ षोडशेमासिकेश्राद्धे सपिंडीकरणेतथा । पाणावेवतुहोतव्यमन्यत्राग्नौतुहूयतेइतिबोपदेवोदाहृतवचनाच ( भाष्यकारमतेतु ) सूत्रेस्थालीपाकेनेतिकरणत्वान्निरवत्कृतश्राचपार्वणेप्रसंगम ॥ ततःकाम्यादिषुतदभावेकार्यस्यपिंडदानस्याप्यभावः ॥ एतदेवानुसृत्यविकृतावपिवार्षिकादौव्यतिषंगउक्तःप्रयोगपारिजातेपरिशिष्टेच॥ तेनैतन्मतेऽर्धाधानिनोग्नावेव॥ वस्तुतस्तुस्थालीपाकेसहशाखयाप्रस्तरंप्रहरतीतिवत्सहभावमात्रश्रुतेः ॥ पत्नीवतेत्वस्तुरूपलक्षणमिवनांगत्वम ॥ तस्त्वेवानांगानुरोधेनप्रधानभूतपिंडदानत्यागोयुक्तः ॥ तेनव्यतिषंगाभावेप्यग्नौहोमोभवतीतिबोपदेवः ॥ अनाहिताग्नेर्गृह्याग्निमतस्तुसर्वमतेग्नावेव ॥ वार्षिकादौवृत्तिमतेव्यतिषंगोन ॥ अन्यमतेत्वस्ति ॥ अत्रयथाचारमनुष्ठेयम ( आश्वलायनः ) उद्धृत्यघृताक्तमन्नमनुज्ञापयत्यग्नौकरिष्ये । करवैकरवाणीतिवाप्रत्यनुज्ञा । क्रियतांकुरुष्वकुर्वित्यथाग्नौजुहोतियथोक्तंपुरस्तादिति ॥ व्यतिषंगपक्षेइदमितिवृत्तिः ॥ करवैकरवाणीत्यत्राग्नाविःअनुषंगःपुरस्तात्पिंडपितृयज्ञे ॥ तचैवम्। मेक्षणेनावदायावदानसंपदाजुहुयात्सोमायपितृमतेस्वधा नमोग्नयेकव्यवाहनायस्वधानमइति स्वाहाकारेणवाग्निंपूर्वंयज्ञोपवीतीमेक्षणमनुप्रहृत्येति ॥ अवदानसंपदाउपस्तरणाद्यपेक्षयेत्यर्थः ॥ व्यतिषंगपक्षेश्रितिप्रणीतेयंहोमोन्यथामुख्येश्रितिप्रणीतेग्नाविध्ममुपसमाधायेतिबह्वृचपरिशिष्टात् ॥ केचित्तस्यरक्षोनिबर्हणार्थत्वान्मुख्येवदंति ॥ तदेतद्विरोधाचिंत्यमप्रयोगपारिजातेप्येवम (शौनकः) स्वाहाकारेणहोमेतुभवेद्यज्ञोपवीतवान्तत्रप्रागग्नयेहुत्वापश्चात्सोमायहूयते ॥ अग्नौयज्ञोपवी

त्येवप्रक्षिपेन्मेक्षणांततः (छंदोगपरिशिष्टे)अग्नौकरणहोमश्चकर्तव्यउपवीतिना। अपसव्येनवाकार्योदक्षिणाभिमुखेनच॥ कातीयानांत्वपसव्यमेवपिंडपितृयज्ञवद्धुत्वेतिसर्वातिदेशात्॥ सव्यंतुछंदोगपरम्॥ गोभिलेनैतदुत्तरमेवापसव्योक्तेः॥ छंदोगाजुहुयुःसव्येनापसव्येनयाजुषाइतिवृद्धयाज्ञवल्क्योक्तेश्च (अथपाणिहोमः॥ आश्वलायनः)अभ्यनुज्ञायांपाणिष्वेवेति॥ पिंडपितृयज्ञकल्पाभावेनाग्न्यभावेकाम्यादिविषयोऽयम्॥ तेनबह्वृचानामेकोद्दिष्टेपाणिहोमोभवत्येव॥ निषेधोऽन्यपरः॥ पाणिष्वितिबहुवचनात्सर्वविप्रपाणिषुहोमइतिवृत्तिः॥ एवंमातामहेऽपि (शौनकोऽपि) सर्वेषामुपविष्टानांविप्राणामथपाणिषु।
विभज्यजुहुयात्सर्वंन्सोमायेत्यादिमंत्रतः (यत्तुहेमाद्रौकात्यायनः) पित्र्येयःपंक्तिमूर्धन्यस्तस्यपाणावनग्निकः॥ हुत्वामंत्रवदन्येषांतूष्णींपात्रेषुनिक्षिपेदितिबह्वृचातिरिक्तानाम् (यत्तु तत्रैवमात्स्ये) अग्न्यभावेतुविप्रस्यपाणौवाथजलेपिवा॥ अजकर्णेश्वकर्णेवागोष्ठेवाथशिलान्तिकइतितत्तीर्थश्राद्धविषयम्॥ तद्यदापांसमीपेस्याच्छ्राद्धंजेयोविधिस्तदेतितत्रैवकात्यायनोक्तेः॥ निर्जलेत्वजकर्णे (यत्तुचन्द्रोदयेयमः)देवविप्रकरेऽग्निः कृत्वाग्नौकरणंद्विजइतितदभार्यपरम्॥ अपत्नीकोयदाविप्रःश्राद्धंकुर्वीतपार्वणम्॥ पित्र्यविप्रैरनुज्ञातोविश्वेदेवेषुहूयते इतितत्रैवकात्यायनोक्तेः॥ हूयतेइतिच्छान्दसोव्यत्ययः (हेमाद्रौवायवीये) विष्णुरेवैकेकुर्याच्छेषंपित्र्येनिवेदयेत् (दैवविप्रानेकत्वेतत्रैव)
विप्रवेदेवयद्येकस्मिन् भवेयुद्वर्ज्यदयोद्विजाः॥ कदैकपाणौहोतव्यंस्याद्विधिर्विहितस्तदा॥ सोप्याद्यःप्रथमंवाजियन्यत्रेतिन्यायात्॥ तेनमृतभार्यस्यदैवेहोमः॥ अनुपनीतब्रह्मचार्यादेस्तुपित्र्ये॥ अग्न्याभावःस्मृतस्तावद्यावद्भार्यांनविन्दतीतिहेमाद्रौजातूकर्ण्योक्तेः॥ सभार्यस्यनष्टाग्नेरपिपित्र्यविप्रकरेइतिपृथ्वीचन्द्रः॥ उपवीतित्वेनदैवेहोमः प्राचीनावीतेनपित्र्ये॥ यद्वासर्वत्रदैवपित्र्यकरयोर्विकल्प इति हेमाद्रौमदनरत्नेपारिजातेच॥ यदातुपितृमातामहयोर्दैवपित्र्यविप्रभेदस्तदाभेदेनपाणिहोमइत्यपरार्कचन्द्रिकादयः॥ यदातुदेवन्तंत्रंतदातंत्रेणासकृदेवपाणिहोमइतिकेचित् (हेमाद्रिस्तु) मातामहस्यभेदे

पिकुर्यात्तन्त्रेणासाग्निकः इतिकातीयस्मृतेर्भेदमाह ॥ एवंपिण्ड्येपि ॥ माधवी
येप्येवम् ॥ एवंसाग्नेरपिविदेशादौपाणिहोमोज्ञेयः ॥ यत्तु कर्केणाग्निंविनाश्रा
द्धमेवनास्तीत्युक्तंतत्सपिंडीकरणवार्षिकाद्यकरणापत्तेर्यत्किंचिदेव (यत्तु वृ
हन्नारदीये) अनग्निर्दूरभार्यश्चपार्वणेसमुपस्थिते । भ्रातृभिःकारयेच्छ्राद्धंसा
ग्निकैर्विधिवद्द्विजाः ॥ क्षयाहदिवसेप्राप्तेस्वस्याग्निर्दूरगोयदि । तथैवभ्रातरः
स्युश्चेल्लौकिकाग्नाविति स्थितिः ॥ औपासनाग्नौदूरस्थेसमीपेभ्रातरिस्थि
ते । यद्यग्नौजुहुयाद्वापिपाणौवासहिपातकी ॥ औपासनाग्नौदूरस्थेकेचिदि
च्छंतिसत्तमाः ॥ पाणावेवतुहोतव्यमितितेनैतत्समंजसमितितद्बहूनानादरादुपेक्ष्य
म् (हेमाद्रौयमः) अग्नौकरणवत्तत्रहोमोविप्रकरेभवेत् । पर्युक्ष्यदर्भानास्तीर्य
यतोह्यग्निसमोद्विजः ॥ मेक्षणेनकरेणवाहोमः ॥ मेक्षणप्रहरणंनेतिवृत्तिः ॥
(स्मृतिरत्नावल्याम्) नानुज्ञापाणिहोमेस्यात्त्वस्तःपर्यहनोक्षणे । नाग्नेतमद्यादि
तिचनस्थातासिध्ममेक्षणे ॥ कर्काचार्योप्येवमाह ॥ माधवीयेचंद्रिकायांचानु
ज्ञादिसर्वंभवतीत्युक्तं (पाणिहोमेप्रश्नाद्याहापरार्के शौनकः) अनग्निश्चेदाज्यं
गृहीत्वाभवत्स्वेवाग्नौकरणमितिपूर्ववत्तथास्त्विति (आश्वलायनः) यदिपा
णिठवाचांतेठवन्यदन्नमनुदिशत्यन्नमन्नेसृष्टंदत्तमक्षु वमिति ॥ पाणौहुतंपात्रे
निधायविप्रैराचम्यभोजनार्थमन्नेपरिविष्टेहुतशेषंपात्रेषुदद्यादित्यर्थः ॥ सृष्टंप्र
भूतं ॥ नैमित्तिकंचेदमाचमनंनहुतभक्षणनिमित्तम् । अन्नंपाणितलेदत्तंपूर्वमश्नं
त्यबुद्धयः । पितरस्तेनतृप्यंतिशेषान्नंनलभंतिते ॥ यच्चपाणितलेदत्तं यच्चान्यदु
पकल्पितम् ॥ एकीभावेनभोक्तव्यंपृथग्भावोनविद्यतेइतिबह्वृचपरिशिष्टात् ॥
हेमाद्रावप्याचमनेहेत्वर्थवादउक्तःपाण्यास्योहिद्विजःस्मृतइति ॥ भाठयेत्वाचां
तेषुभक्षितेषु ॥ चमुभक्षणेइति ॥ भक्षणोत्तरंचनाचमनमग्निसाम्यात् ॥ पूर्वनि
षेधस्तुसपिंडीकरणेज्ञेयः ॥ ददातिचोदितत्वान्नत्वत्रजुहोतिचोदितत्वादित्यु
क्तं ॥ नत्वेतद्बहुसंमतम् (यत्तु बौधायनेन) तास्मस्तुप्राशितेदद्याद्यदन्नंप्रकृतंभवे
दितिभक्षणमुक्तंतत्तच्छाखीयानामेवेतिहेमाद्रिः ॥ (तत्रैवयमः) पिण्ड्यपा
णिहुताच्छेषंपात्रपात्रेषुनिक्षिपेत् । अग्नौकरणशेषंतुनदद्याद्वैश्वदेविके ॥

एतदग्निहोमेपिसमम् ॥ तथाकर्कस्तुसूत्रेहुतशेषंदत्त्वेत्यविशेषात्सर्वविप्रेषुदद्या
दित्याह ( तत्रैवरुद्रधरमिश्रः ) पित्र्यविप्रकरेहुत्वाशेषंपात्रेषुनिक्षिपेत् । पिंडे
भ्यःशेषयेत्किंचिन्नदद्याद्वैश्वदेविके ( अथापस्तंबानांसूत्रे ) उद्धीयतामग्नौच
क्रियतामित्यामंत्रयते ॥ काममुद्धीयतांकाममग्नौचक्रियतामित्यतिसृष्टउद्धरे
ज्जुहुयाच्च (नष्टाग्निविधुरादेर्विशेषोवृहन्नारदीये) नष्टाग्निर्दूरभार्यश्चपार्वणे
समुपस्थिते ॥ संधायाग्निंततोहोमंकृत्वातंविसृजेत्पुनः ॥ अथापूर्वेतितत्काले
ग्निंसंधायहुत्वात्यजेदित्यर्थः ॥ एतदापस्तंबानामेव ॥ पाणिहोमस्तुछंदोगादी
नाम् (विश्वप्रकाशेपि) साग्निरौपासनेनाग्निरग्नौकुर्वीतलौकिके ॥ पाणौहो
मंप्रशंसंतिनत्वापस्तंबशाखिनाम्॥स्नातकाविधुरावास्युर्यदिवाब्रह्मचारिणः ।
अग्नौकरणहोमंतुकुर्युस्तेलौकिकेनले॥ अथापूर्वाग्नेर्मनोज्योतिरुद्बुध्यव्याहृ
तीर्हुनेत्॥ततोनुज्ञातोऽग्नींधनाद्याज्यभागांतेयन्मेमातेत्याद्यैर्जुहुयात् ॥ तत्रसप्ता
न्नाहुतयःषडाज्यस्येतित्रयोदश ॥ व्यत्ययोवा (यथा) यन्मेमाताप्रलुलोभतन्मे
रेतःपितावृंक्तामास्तष्ठतीतिद्वाभ्यामसुष्मैस्वाहेतिपितुर्नाम्नाद्वौहोमौ ॥ यन्मे
पितामहीप्रलुलोभतन्मेरेतःपितामहोवृंक्तामंतर्दधेइतितन्नाम्नापितामहायद्वौ॥
यन्मेप्रपितामहीप्रलुलोभतन्मेरेतः प्रपितामहोवृंक्तामंतर्दधेऋतुभिरितितन्ना
म्नाप्रपितामहायद्वौ (मातामहेषूहः) यन्मेमातामहीतन्मेमातामहोवृंक्तां ॥
अन्यंमातामहाद्वृद्धमित्यादौ ॥ यन्मेमातुःपितामहीप्रलुलोभतन्मेरेतोमातुः॥
पितामहोवृंक्तां ॥ अन्यंमातुःपितामहाद्वृद्धम् ॥ यन्मेमातुःप्रपितामही
प्रलुलोभतन्मेरेतोमातुःप्रपितामहोवृंक्तां । अन्यंमातुःप्रपितामहाद्वृद्धमसर्व
त्राप्यमुष्ठ्याइत्यत्रङेंतंतन्नामयोज्यम् ( तत्रगृह्यसंग्रहे ) योज्यःपित्रादिशब्दानां
स्थानेमातामहादिकः । अन्नहोमेतथास्पर्शेजलपिंडादिदानके ॥ यन्मेमातामही
त्यादितत्रोदाहरणंभवेत् । ततोयेकेचेत्येकान्नाहुतिः ॥ ततःस्वाहापित्र्येइत्या
द्यैराज्यंहुत्वास्विष्टकृतंहुत्वासर्वभक्ष्यंकिंचिदादायोद्धुण्णांभस्मापोह्यतत्रतूष्णी
मस्वाहाकारेणजुहोति ॥ परिषेचनांतंस्थालीपाकवत् ॥ अयमग्नौकरणहोमो
मासिकश्राद्धएव ॥ तच्चस्मार्ताग्न्यभावेनकार्यमितिकेचित्॥कार्यमेवेतिबहवः॥

अतएवसर्वाधानिनोहोमवर्ज्यंमासिकश्राद्धमुक्तंसुदर्शनभाष्ये॥ महालयेतद्वदित्ये
के॥ प्रकरणांतरत्वात॥ कर्मांतरत्वेनस्मार्तपार्वणवत्कार्यमितित्वस्मद्गुरवः॥
आब्दिकादिषुतुस्मार्तपार्वणविधिरेव॥ एवंमातृवार्षिकादिषु॥ मासिश्राद्धवि
कृतावष्टकायांमातृश्राद्धेवैकृतहोमेनप्राकृतहोमबाधः॥ अन्वष्टकासुमातृश्राद्धंने
तिभाष्ये॥ तत्रापिश्राद्धांतरवत॥ क्रियमाणेतुयन्मेमातेत्यादौगुणत्वेपिमातृप्रा
धान्यंविवक्षितं॥ मासिश्राद्धेनकल्पोव्याख्यातइतिसूत्रात॥ अग्नयेप्येवमनेोता
कार्यमितिवचनादग्निशब्दस्यैववैकृतदेवताभिधायित्वम॥ तेनामुष्याइत्यत्रामु
कशर्मभ्यांपितृभ्यामित्याद्यूहःकार्यः॥ तच्चमासिश्राद्धंजीवत्पित्रादीनांव्युत्क्र
ममृतपित्रादीनांचकार्यमित्युक्तंसुदर्शनभाष्ये॥ तत्प्रकारस्तुवक्ष्यते॥ माता
पित्रोर्द्वित्वादौतुनोहः॥ तस्माद्बहुवचनेनोहेदितिनिषेधात॥ प्रकृतावूहाभावाच्चप
त्नीःसन्नह्येतिवत॥ उपदेशमतेतूहः॥ यथायन्मेमातरोप्रलुलोभतुश्चरत्यावन
नुव्रतेइत्याद्यस्मत्पितृकृतमासिश्राद्धनिर्णयेज्ञेयमितिदिक्॥ अन्यतप्राग्वत (अ
थपरिवेषणं) तच्चोपवीत्येवाज्येनदेवपूर्वमामासुपक्वमितिपात्राणयुपस्तीर्यकु
र्यादितिहेमाद्रिः (भारतेदानधर्मेपि) आज्याहुतिंविनानैवयत्किंचित्परिविष्य
ते। दुराचारैश्चयद्भुक्तंतंभागंरक्षसांविदुः (तत्रैवशौनकः) विधिनादेवपूर्वंतुप
रिवेषणमाचरेत (तत्रैवधर्मः) फलस्यानंतताप्रोक्तास्वयंचपरिवेषणे (तत्रैववायु
भविष्ययोः) भार्यायाःश्राद्धकालेतुप्रशस्तंपरिवेषणम (ब्रह्मांडे) नापवित्रेणनै
केनहस्तेननविनाकुशम। नायसेनायसेनैवश्राद्धेतुपरिवेषयेत (वशिष्ठः) आय
सेनतुपात्रेणयदन्नंसंप्रदीयते। भोक्ताविष्ठासमंभुंक्तेदाताचनरकंव्रजेत (पैठीन
सिः) सीसकायसरीतीपात्राणयर्ज्ञियानि (तत्रैवहारीतः) सौवर्णराजता
भ्यांचखड्गेनौदुंबरेणवा। दत्तमक्षय्यतांयातिफल्गुपात्रेणवापुनः (काष्र्णाजि
निः) दर्व्यादेयंघृतंचान्नंसमस्तव्यंजनानिच। उदकंचैवपक्वान्नंनोदर्व्यातुकदा
चन(यमः)पंक्त्यांविषमदातुश्चनिष्कृतिर्नैवविद्यते (पृथ्वीचन्द्रोदयेपराशरः)
सर्वदार्चतिलाग्राह्याःपितृकृत्येविशेषतः। भोज्यपात्रेतिलान्दृष्ट्वानिराशाःपितरो
गताः (चन्द्रिकायांवृद्धशातातपः) हस्तदत्तास्तुयेस्नेहालवणव्यंजनादयः।

पितृणां नोपतिष्ठंति भोक्ता भुंजीत किल्बिषम् (घृतपात्रविशेषो ग्रन्थांतरे) ओदनेपरमान्ने च पात्रमासाद्य मुद्रधीः । घृतेन पूरयेत्पात्रं तद्घृतं रुधिरं भवेत् ॥ घृतादिपात्राणि भूमौ स्थापयेन्न भोजनपात्रे इति मदनरत्ने (संग्रहे) हस्तदत्तं तु नाश्नीयाल्लवणव्यंजनादिकम् ॥ अपक्वं तैलपक्वं च हस्तेनैव प्रदीयते ( पात्रालंभनमुक्तं चतुर्विंशतिमते ) उत्तानं दक्षिणं सव्यं नीचं पात्रार्णयुपस्पृशेत् ( याज्ञवल्क्यः ) दत्वान्नं पृथिवीपात्रमिति पात्राभिमंत्रणम् । कृत्वेदं विष्णुरित्यन्ने द्विजांगुष्ठं निवेशयेत् (बौधायनः) विप्रांगुष्ठेनानखेनानुदिशति ॥ पृथिवीते पात्रं द्यौरपिधानं ब्राह्मणस्य मुखेऽमृतेऽमृतं जुहोमि ॥ ब्राह्मणानां त्वा विद्यावतां प्राणापानयोर्जुहोम्यक्षितमसि मा मे पितॄणां क्षेष्ठा अत्रामुत्रिमल्लोके इति ॥ अग्न्युजुहोम्यग्रे स्वाहाशब्दः कातीयसूत्रे उक्तः ॥ पैत्रे स्वधाशब्दः (अंगुष्ठे विशेषमाह हेमाद्रौ धौम्यः) परिवृत्य नवांगुष्ठं द्विजस्थानेनिवेशयेत् (तथा) उत्तानेन तु हस्तेन द्विजांगुष्ठनिवेशनम् । यः करोति द्विजो मोहात्तद्वै रक्षांसि भुंजते (तत्रैव यमः) विष्णोर्हव्यं च कव्यं च ब्रूयाद्रक्षस्व च क्रमात् ॥ दैवेपित्र्ये चेत्यर्थः ( तत्रैवात्रिः) सम्बन्धनामगोत्राणि इदमन्नं ततः स्वधा । पितृक्रमादुदीर्येति स्वसत्तां विनिवर्तयेत् ॥ हस्तेनाभुक्तमन्नाद्यमिदमन्नमुदीरयेत् । अत्रान्नदाने चतुर्थी स्यादित्यादिविशेषाः पूर्वमुक्ताः ॥ अत्र पूर्वोक्तमंत्रांते पुरूरवार्द्रवसंज्ञका विश्वेदेवा देवता इदमन्नं सपरिकरं हव्यं अयं ब्राह्मणस्त्वाहवनीयार्थे दत्तं दास्यमानं चातृप्तेः । मयेयं भूः गदाधारो भोक्ता इदमन्नं ब्रह्मसौवर्णपात्रस्थमन्नमक्षय्यवटच्छायास्थं अमुकेभ्यो विश्वेभ्यो देवेभ्य इदमन्नममृतंरूपं परिविष्टं परिवेक्ष्यमाणं चातृप्तेः स्वाहा नमो न ममेति बह्वृचपरिशिष्टहेमाद्र्यनुमतः प्रयोगः ॥ सर्वपित्र्ये अमुकगोत्र वसुरूपादितत्तन्नामज्ञेयम् ॥ ततो येदेवास इति दैवे ये चेह पितर इति पित्र्ये केचिज्जपंति ॥ ततो छिद्रं वाचयेत् ( तत्रैव प्रचेताः) आपोशानकरे विप्रे संकल्प्याच्छिद्रभाषणात् । निराशाः पितरो यांति देवैः सह न संशयः (पारस्करः ) संकल्प्य पितृदेवेभ्यः सावित्रीमधुमज्जपः । आर्द्रं निवेद्यापोशानं जुयप्रेयोऽथ भोजनम् ॥ निवेद्येति ब्रह्मार्पणं कृत्वेत्यर्थः ॥ अत एव बृहन्नारदीये त्यागमुक्त्वोक्तम् ॥ दत्तं हविः च तत्कर्म विष्णावेवै समर्पयेदिति

(यत्तुकृत्यरत्नेकार्ष्णाजिनिः) अपसव्येनकर्तव्यं पितृकृत्यमशेषतः । अन्नदाना दृतेसर्वमेवंमातामहेष्वपि (तत्र) ब्रह्मार्पणंब्रह्महविः हरिर्दाताहरिर्भोक्ताचतु र्भिश्चेतिकेचित्पठंति (धर्मप्रदीपे) ततोऽन्नंपितृदेवेभ्यःसंकल्प्यचयथाविधि । दत्तंयद्दास्यमानंच आतृप्तेर्नममेतिच (तथा) आर्द्रीआन्नस्यसंकल्पोभूमावेवप्रदी यते ॥ हस्तेपुदीयमानंतुपितॄणांनोपतिष्ठते ॥ वैश्वदेवस्यवामेतुपितृपात्रस्यद क्षिणे । संकल्पोदकदानेस्यान्नित्यश्राद्धेयथारुचि (प्रचेताः) आपोशानंप्रदाया थसावित्रींत्रिर्जपेदथ । मधुवाताइतित्र्यचंमध्वित्येतत्त्रिकंतथा (मिताक्षरायां पारस्करः) संकल्प्यपितृदेवेभ्यःसावित्रीमधुमज्जपः । श्राद्धेनिवेद्यापोशानंतु यथैवाथभोजनम् ॥ गायत्रींत्रिःसकृद्वापिजपेद्व्याहृतिपूर्विकाम् । मधुवाताइतित्र्य चंमध्वित्येतत्त्रिकंतथा ॥ (याज्ञवल्क्यः) सव्याहृतिकांगायत्रीं मधुवाताइतित्र्य चम् । जप्त्वायथासुखंवाच्यंभुंजीरंस्तेपिवाग्यताः ॥ अथाप्युक्तंजुषध्वमितिवा च्यम् (अत्रिः) असंकल्पितमन्नाद्यंपाणिभ्यांयदुपस्पृशेत् । अभोज्यंतद्भवेदन्नंपि तॄणांनोपतिष्ठते ॥ अन्नंदत्तंनगृह्णीयाद्यावत्तोयंनसंपिबेत् ( अपोशानेविशेष माहस्मृतिसमुच्चये) आपोशानंवामभागे सुरापानसमंभवेत् । दक्षभागेतुयःकुर्या त्सोमपानसमंभवेत् (तथा) पुनरापूर्यपोशानंसुरापानसमंभवेत् (हेमाद्रावत्रिः) दत्तेवाप्यथवादत्तेभूमौयोनिक्षिपेद्बलिम् । तदन्नंनिष्फलंयातिनिराशैःपितृ भिर्गतैः ॥ केचिदाज्येनकुर्वंतितन्न । पायसेनतथाज्येन माषान्नेनतथैवच । नकु र्याद्बलिदानंतुओदनेनप्रकल्पयेदितिस्मृतिसारेनिषेधात् (शंखः) श्राद्धेनियु क्तान्भुंजानान्नपृच्छेल्लवणादिषु । उच्छिष्टाःपितरोयांतिपृच्छतोनात्रसंशयः (कात्यायनः) अन्नवत्सुजपेत्सव्याहृतिकांगायत्रींसकृत्तत्रिर्वाराक्षोघ्नीःपौरुषं सूक्तमप्रतिरथमिति (हेमाद्रौसौरपुराणे) ऐंद्रञ्चपौरुषंसूक्तंश्रावयेद्ब्राह्मणां स्ततः (मात्स्यपाद्मयोः) ब्रह्मविष्ण्वर्करुद्राणांस्तोत्राणिविविधानिच । इंद्रेश सोमसूक्तानिपावमानीश्चशक्तितः ॥ मंडलंब्राह्मणांतद्वत्प्रीतिकारिचयत्पुनः । अभावेसर्वविद्यानांगायत्रीजपमाचरेत्(पृथ्वीचंद्रोदयेब्राह्मे) वीणावंशध्वनिंचा थविप्रेभ्यःसंनिवेदयेत् ॥ जपेच्चपौरुषंसूक्तंनाचिकेतत्रयंतथा॥ त्रिमधुत्रिसुपर्णंच

पावमानीर्यजूंषिच (हेमाद्रावत्रिः) हुंकारेणापियोब्रूयाद्धस्तावापिवदेद्गु
णान्। भूतलाच्चोद्धरेत्पात्रंमुंचेद्धस्तेनवापिवेत्॥ प्रौढपादोबहिःकच्छोबहिर्जानु
करोपिवा। अंगुष्ठेनविनाश्नातिमुखशब्देनवापुनः॥ पीतावशिष्टतोयानिपुनरु
द्धृत्यवापिवेत्। खादितार्धंतुपुनःखादेन्मोदकानिफलानिच॥ मुखेनवाधमेदन्नं
निष्ठीवेद्भाजनेपिवा। इत्थमश्नन्द्विजःश्राद्धंहत्वागच्छत्यधोगतिम् (जाबालिः)
इष्टमुद्यांहविष्यंचदद्यादन्नंशनैःशनैः(वृद्धशातातपः)अपेक्षितंयाचितव्यंश्राद्धार्थ
मुपकल्पितम्। नयाचतेद्विजोमूढःसभवेत्पितृघातकः (यत्तुयमः) श्राद्धेद्विजोनै
वदद्यान्नयाचेन्नैवदापयेदितितदसंपादितवस्तुविषयमितिहेमाद्रिः (हारीतः)ऊ
र्ध्वंपाणिश्चविहसन्सक्रोधोविस्मयान्वितः। भुक्तपृष्टप्रचयद्भुक्तेनतत्प्रीणा
तिवैपितॄन् (प्रचेताः) नस्पृशेद्वामहस्तेन भुंजानोन्नंकदाचन। नपादौनशिरोव
स्तिंनपदाभाजनंस्पृशेत् (शंखः) श्राद्धपंक्तौतुभुंजानोब्राह्मणोब्राह्मणंस्पृशेत्॥
तदन्नमत्यजन्भुक्त्वागायत्र्यष्टशतंजपेत् (उशनाः) भोजनंतुनिःशेषंकुर्यात्प्रा
ज्ञःकथंचन॥ अन्यत्रदध्नः क्षीराद्वा क्षौद्रात्सक्तुभ्यएवच (ब्राह्मे) नचाश्रुपा
तयेज्जातुनशुष्कांगिरमीरयेत्॥ नचोद्वीक्षेतभुंजानान्नचकुर्वीतमत्सरम्(यमः)
स्वाध्यायंश्रावयेत्सम्यग्धर्मशास्त्राणिचैवहि (प्रचेताः) भुंजानेषुतुविप्रेषुऋचय
जुःसामलक्षणम्। जपेदभिमुखोभूत्वापित्र्यंचैवविशेषतः॥ यजूंषिचैवरुद्रंचरा
क्षोघ्नीश्चसवथ। राक्षोघ्नीःकृणुष्वरक्षोहणमित्याद्याः (तत्रैवनिगमः) भुंज
त्सुजपेत्पावमानीरुदिरतामध्वन्नवतीश्च॥ अन्नवत्यःपितुंनुस्तोषमिति(पृथ्वी
चंद्रोदयेभरद्वाजः) भुंजानेषुतुविप्रेषुप्रमादात्स्रवतेगुदम्। पादकृच्छ्रं ततःकृत्वा
अन्यंविप्रंनियोजयेत्। क्षणापाद्यादिसत्त्वेत्यर्थः(विप्रवमनेतत्रैवदक्षः) निमंत्रित
स्तुयःश्राद्धेभोजनेमुखनिःसृते। तदैवहोमंकुर्वीतस्नातोविप्रःसमाहितः॥ प्रा
णादिपंचभिर्मंत्रैर्यावद्द्वात्रिंशसंख्यया॥ ब्राह्मणस्तुततःकृत्वाघृतप्राशनमा
चरेत्॥ (ऋग्विधानेतु) इंद्रायसोमसूक्तेनश्राद्धविघ्नोयदाभवेत्। अग्न्यादिभि
र्भोजनेनश्राद्धंसंपूर्णमेवहीत्युक्तम्॥ अग्न्यादिभिरितिलौकिकाग्निस्थापनचरु
निर्वापाज्यभागांतेनामगोत्रपूर्वमग्नौपितॄनावाह्यसंपूज्यान्न त्यागंकृत्वाप्राणा

दिभिर्द्वात्रिंशदाहुतीर्हुनेदित्यर्थः ॥ भोजनेनपुनःश्राद्धेन ॥ तेनहोमःपुनःश्राद्धंचे
तिपक्षद्वयमुक्तम् ॥ सूक्तजपस्तूभयानुगतः (स्मृतिसंग्रहे) प्राधान्यंपिंडदानस्यभो
जनस्यतदंगता । अतोभुक्तिक्रियाहानौ श्राद्धवृत्तिं नमन्वते ॥ पिंडदानोत्तरंवां
तौहोमएवनावृत्तिः ॥ पिंडदानात्प्राग्वांतौतद्दिनेउपवासंकृत्वापरेद्युःपुनःश्राद्धं
कार्यमित्यर्थः (तत्रैव) श्राद्धपंक्तौतुभुंजानोब्राह्मणोवमतेयदि ॥ लौकिकाग्नौ
प्रतिष्ठाप्यअर्चयेच्चहुताशनम् (तथा) एकएवयदाविप्रोभोजनेछर्दितोयदि । तदै
वाग्निंसमाधायहोमंकुर्याद्यथाविधि (द्वितीयपक्षेऋग्विधाने) भोजनोपक्रमादू
र्ध्वंप्रक्रमात्पूर्वतोयदि ॥ श्राद्धविघ्नेपुनःकार्यंजपहोमौनदृष्टिदौ (स्मृतिसंग्रहे)
अकृतेपिंडदानेतु भुंजानोब्राह्मणोवमेत । पुनःपाकात्तुकर्तव्यंपिंडदानंयथावि
धि(पिंडदानंश्राद्धम्)अकृतेपिंडदानेतुपितार्थदिवमेत्तदा । पुनःपाकंप्रकुर्वीतश्रा
द्धंकुर्याद्यथाविधीतितत्रैवोक्तेः (तथा) पित्रार्थानांत्रयाणांचपिताच्चवमतेयदि ।
तद्दिनेचोपवासःस्यात्पुनःश्राद्धंपरेहनि ॥ वमनेवाविरेकेवातद्दिनंपरिवर्जयेत् ॥
एषुवचनेषुसूलंचिंत्यं ॥ इदंमासिकाब्दिकविषयम् ॥ दर्शादौतुवांतावामेनतदैव
कार्यम् ॥ श्राद्धविघ्नेद्विजातीनामामश्राद्धंप्रकीर्तितम्॥अमावास्यादिनियतंमास
संवत्सरादृतमरीचिस्मृतेः ॥ श्राद्धेपिंडदानमेवप्रधानमितिकर्काचार्याः ॥ तन्म
तेदक्षोक्तोहोमएवनावृत्तिः ॥ विप्रभोजनमितिमेधातिथिः ॥ भोजनंपिंडदाना
ग्नौकरणानीतिकपर्दिधूर्तस्वामिहेमाद्र्यादयः॥ श्राद्धस्यहोमदानोभयरूपत्वात्सं
प्रदानलाभाद्भोजनस्यांगत्वेपिसोमवमतेइतियुक्तम्॥तन्मतेपूर्वोक्तोनिर्णयः॥
अन्नत्यागमात्रंप्रधानम्॥भोजनंतुप्रतिपत्तिरूपमंगमतोवांतौतद्धानेपिनावृत्तिरिति
गौडमैथिलादयः ॥ नैमित्तिकविधानमित्युक्तंप्रतीमः ॥ अत्रेदंतत्त्वम् । वैश्व
देविकस्यवमनेहोमएवनावृत्तिः । अंगत्वात् । तच्चरक्षार्थत्वादिष्टिश्राद्धेक्रतुदक्ष
इत्यादिस्मृतेश्च ॥ तत्रजयानजुहुयादितिवत् । पितामहादेरपितथा । पितेत्युक्ते
रितिकेचित् । तस्यापिप्रधानत्वात्पितृवदितियुक्तम् । सपिंडीकरणादौवार्षि
कवत्सपिंडीकरणादीनियानिश्राद्धानिषोडश ॥ तत्पिंडप्रधानत्वंप्रेतत्वविनि
वर्तकमितिस्मृते ॥ महैकोद्दिष्टादौतूभयप्राधान्यादावृत्तिरेव । एकएवद्विजोभो

ड्यः पिंडोप्येकोविधीयतइतिस्मृतेः ॥ वृद्धिसंकल्पनित्यश्राद्धादौतुभोजनप्राधा न्यादंतावावृत्तिरेव ॥ वृद्धिश्राद्धेविकल्पेनपिंडदानंबुधैःस्मृतम् । नित्यश्राद्धमदैवंस्यात्पिंडदानविवर्जितमितिस्मृतेः ॥ भुक्तिक्रियायाःप्राधान्यंश्राद्धेसंकल्पसंज्ञके । तत्रैवपितृविप्रस्यतूपघातेपुनःक्रियतेतिसंग्रहोक्तेश्च ॥ मघादावप्येवम् ॥ तीर्थमहालयादौदर्शवदित्याशार्कोद्यालोचनेनप्रतीमः (आश्वलायनः) तृप्तान्ज्ञात्वामधुमतीः श्रावयेदक्षन्नमीमदंतेति चसंपन्नंस्पृष्ट्वा यद्यदन्नमुपभुक्तंतत्तत्स्थालीपाकेनसह पिंडार्थमुद्धृत्यशेषंनिवेदयेत् ॥ अभिमतेनुमतेचेति ॥ अत्रगायत्रीमध्वितित्रिकजपोपिज्ञेयःतृप्तान्बुध्वान्नमादायसतिलंपूर्ववज्जपेदितिप्रचेतसोक्तेः (व्यासः) तृप्ताःस्थेतितुपृष्टास्तेब्रूयुस्तृप्ताःस्मइत्यथ । अभिमतेविप्रैःस्वीकर्तुमीष्टे (शौनकोपि) अन्नशेषैश्चकिंकार्यमितिपृच्छेत्ततांस्ततः । तेइष्टैःसहभोक्तव्यमितिप्रत्युक्तिपूर्वकम् ।प्रदद्युःसकलंतस्मैस्वीकुर्युर्वायथारुचि (श्राद्धविशेषेप्रश्नभेदमाहहेमाद्रौविष्णुः) पित्र्येस्वदितमित्तिगोष्ठ्यांसुशृतंसंपन्नंनित्यभ्युदयेदैवेरोचतइतिआयुष्यमितिस्वैरिषु । स्वैरमिच्छाश्राद्धम् (याज्ञवल्क्यः) अन्नमादायतृप्ताःस्थ शेषंचैवानुमान्यच । तदन्नंप्रकिरेद्भूमौदद्यादापःसकृत्सकृत् । इदंचाग्रविकिरदानमन्यशाखिनाम् ॥ आश्वलायनानांतुपिंडांतएवसूत्रकृतोक्तम् (कात्यायनस्तु) विकिरोत्तरंगायत्र्यादिजपंतृप्तिप्रश्नंचाह (हेमाद्रौदेवलः) ततःसर्वाशनंपात्रेगृहीत्वाविविधंबुधः । तेषामुच्छेषणस्थानेविकिरंभुविनिक्षिपेत् ( माधवीयेप्रचेताः ) सार्ववर्णिकमादायये अग्नीतिभुविक्षिपेत् । सचकुशेकार्यः ॥ दर्भेषुविकिरश्चयइत्युक्तः ॥ मंत्रःकातीयः ॥ अग्निदग्धाश्चयेजीवायेप्यदग्धाःकुलेमम । भूमौदत्तेनतृप्यंतुतृप्तायांतुपरांगतिमिति (अन्येतु) असोमपाश्चयेदेवायज्ञभागविवर्जिताः । तेषामन्नंप्रदास्यामिविकिरंवैश्वदेविकमितिहेमाद्रौगोभिलोक्तेनदैवे॥असंस्कृतप्रमीतायेत्यागिन्योयाःकुलस्त्रियः।दास्यामितेभ्योविकिरमन्नंताभ्यश्चपैतृकमित्यग्निपुराणोक्तेनपित्र्येन्नंविकीर्ययेअग्निदग्धाइत्युच्छिष्टपिंडंकुशोपरिपृथग्दद्यादित्याहुः ॥ पृथ्वीचंद्रोदयेप्येवम् (ब्राह्मे) ततःप्रक्षाल्यहस्तौचद्विराचम्यहरिंस्मरेत् (माधवीयेगौतमः) विकिरमुच्छिष्टैःप्रतिपादयेत् ॥

(हेमाद्रौव्यासः) उच्छिष्टैरेवविकिरंसदैवप्रतिपादयेत् (भृगुः) पिंडवत्प्रतिपत्ति
स्याद्विकिरस्येतितौल्वलिः ( श्राद्धकारिकायाम् ) यजमानस्यदासादीनुद्दिश्य
द्विजसत्तम । तस्माद्दन्नंत्यजेद्भूमौवामभागेषुपैतृके ( मनुः ) उच्छेषणंभूमिगतम
जिह्मस्याशठस्यच । दासवर्गस्यतत्पित्र्येभागधेयंप्रचक्षते ( विष्णुः ) उदङ्मु
खेष्वाचमनमादौस्यात्ततः प्राङ्मुखेषुपित्र्येदेवेचेत्यर्थः (शातातपः) विश्वेदेव
निविष्टानांचरमंहस्तधावनम् (हेमाद्रौवाराहे) हस्तंप्रक्षाल्ययपश्चापःपिवेद्भुक्त्वा
द्विजःसदा ॥ तदन्नमसुरैर्भुक्तंनिराशाःपितरोगताः ( मरीचिः ) हस्तंप्रक्षाल्यगं
डूषंयःपिवेदविचक्षणः । आसुरंतद्भवेच्छ्राद्धंपितॄणांनोपतिष्ठते ( तत्रैवसंग्रहे) प
वित्रग्रंथिमुत्सृज्यमंडलेभुविनिक्षिपेत् । हस्तादीन्क्षालयेद्विद्वान्शरावादीनकुत्र
चित् (व्यासः) तांबूलोद्गिरणंचैवगंडूषोद्गिरणंतथा । कांस्यपात्रेतथाताम्रे न
कुर्वीतकदाचन ॥ उष्णोदकैर्धान्यचूर्णैःकरौस्मश्रूणिशोधयेत् (अथपिंडदानम्)
तच्चार्चनोत्तरमग्नौकरणोत्तरंभोजनोत्तरं विकिरोत्तरंस्वधावाचनोत्तरंविप्रविस
र्जनोत्तरंचेतिहेमाद्रौस्मृतिषुचपक्षाउक्ताः॥ तेषांशाखाभेदेनव्यवस्था॥ प्रेतश्राद्धे
षुपूर्वमन्येषुभोजनोत्तरमितिचंद्रिकामाधवौ ॥ सर्वत्रभोजनोत्तरमितिबहवः
( आश्वलायनः )भुक्तवत्स्वनाचांते षुपिंडान्दद्यादाचांतेष्वेके ॥ भुक्तवत्स्व
तिपूर्वनिषेधार्थम् । साग्निररितिप्रणीतसमीपेऽनग्निर्द्विजसमीपे(हेमाद्रौजातूक
र्ण्यः) व्यासमात्रंसमुत्सृज्यपिंडांस्तत्रप्रदापयेत् । प्रसारितभुजांतरंव्यामः(संक
टेतुव्यासः)अरत्निमात्रमुत्सृज्येति )( यत्तुतत्रैव ) सिकताभिमृदावापिवेदीद
क्षिणानिम्नगेतितदन्यशाखिपरम् ( देवलः ) ततस्तैरभ्यनुज्ञातोदक्षिणांदिशमे
त्यत्र (चंद्रिकायाम्) पिंडनिर्वपणंकार्यंकुशाभावेविचक्षणैः । काशेषुराजदू
र्वासुपवित्रेपरमेहिते(आश्वलायनः) स्फ्येनरेखामुल्लिखेत्॥अपहताअसुरारक्षां
सिवेदिषदइतितामभ्युक्ष्यसकृदाच्छिन्नैरवस्तीर्य प्राचीनावीतीरेखांत्रिरुदकेनो
पनयेच्छुंधंतांपितरःशुंधंतांपितामहाःशुंधंतांप्रपितामहा इतितस्यांपिंडान्निपृ
णीयात्पराचीनपाणिःपित्रेपितामहायप्रपितामहायैतत्तेसौयेचत्वामत्रान्विति
( हेमाद्रौपारस्करः ) कराभ्यामुल्लिखेत्स्फ्येनकुशैर्वापिमहींद्विजःबह्वृचानां

तृप्त्यययथाशक्तिप्राणानासित्वाऽभिपर्यावृत्त्याऽमीमदंतपितरो यथाभागमावृ
षायीषतेतिचरोःप्राणभक्षंभक्षयेन्नित्यंनिनयनमिति ॥ नित्यग्रहणांशेषाभावेपि
कुर्यादित्यर्थः(शौनकः)अथैषामत्रपितरइत्याद्येनानुमन्त्रणम् ॥ अमीमदन्तेत्या
द्येनमन्त्रेणाप्यनुमन्त्रयताम् ॥ पिण्डशिष्टचरोरन्नंकिञ्चिदाघ्रायतत्त्यजेत् ॥ प्र
क्षाल्याचम्यशुंधंतामित्याद्यैर्वपूर्ववत् ॥ मन्त्रैः पिण्डेषुपानीयंनिषिंचेत्पितृतीर्थ
तः (व्याघ्रः) अद्भिःप्रक्षाल्यतत्पात्रंतेहिपिण्डप्रतिपूर्ववत् । कृत्वावनेजनंकुर्यात्पि
ण्डपात्रमधोमुखम् ॥ एतत्कातीयादीनाम् (आचार्यः) ततःसव्यंविहायाचम्यनी
वींविस्रस्यवारयतः (आश्वलायनः) असावभ्यंक्ष्वासावंक्ष्वेतिपिण्डेष्वभ्यंजनां
जनेवासोदद्यादेषामूर्णास्तुकांवापंचाशद्वर्षतायाऊर्ध्वंस्वलोमैतद्वःपितरोवासो
मामेतोऽन्यत्पितरोयुङ्ध्वमिति (श्राद्धचिन्तामणौब्राह्मे) एतद्वःपितरोवासइ
तिजल्पन्पृथक्पृथक् । अमुकामुकगोत्रैतत्तुभ्यंवासःपठेद्बुधः ॥ इदंकातीया
नाम् ॥ एतदूर्णातन्तवोणप्रतिपिण्डमितितत्सूत्रात् (हेमाद्रौब्राह्मे) ग्रंथयाहुर्वे
कौशुदम्पन्नरोनित्यमेवाहि । तैलंदद्यात्तिलैर्भव्यंग्रहचन्दनाद्यभ्यंजनंहितम् । नीक्षकुंकुंमु
रापीड्इतिप्रसिद्धम् ॥ अञ्जनंप्रायस्यमापिस्तम्भार्धिविष्यथम् (तथैवव्याघ्रः) गन्ध
पुष्पाणिधूपंचदीपंचविनिवेदयेत् (देवलः) दक्षिणाग्रंसर्वभोगांश्चप्रतिपिण्डंप्र
दापयेत् ॥ भक्ष्याणांपूर्वानिष्पन्नव्यंजनान्यपिमानतिच (तत्रैवप्राञ्चः) यत्किं
चिदर्पयतेगेहेभक्ष्यंभोज्यमगर्हितम् । अनिवेद्यनभोक्तव्यंपिण्डमूलेकथंचन ॥
एतत्सव्येनेतिकेचित् ॥ युक्तंत्वपसव्येन (मनुः) अवजिघ्रेच्चतान्पिण्डान्यथा
न्युप्तान्समाहितः । ततोनमोवःपितरइत्यादिनोपस्थानम् (मात्स्ये) आचान्ते
षुचाचम्यवारिदद्यात्सकृत्सकृत् । तिलपुष्पाक्षतान्पश्चादक्षय्योदकमेवच ॥
अत्रदैवसव्यंपित्र्येत्वपसव्यमितिकर्कः ॥ परिभाषोक्तवचनात्सव्यमितियुक्तं ॥
अघोरावाआपःसन्तु । सौमनस्यमस्त्वित्याद्विप्रयोगोज्ञेयः (मात्स्ये) तत्राशीः
प्रतिगृह्णीयाद्द्विजेभ्यःप्राङ्मुखोबुधः । अघोराःपितरःसंतुसन्त्वित्युक्तेपुनर्द्वि
जैः ॥ गोत्रंतथावर्धतांनस्तथेत्युक्तःसतैःपुनः ॥ दातारोनोऽभिवर्धन्तामन्नंचैवेत्यु
दीरयेत् ॥ स्वस्तिवाचनकंकुर्यात्पिण्डानुद्धृत्यभक्तितः ॥ स्वस्तिवाचनात्प्राक्

पात्रचालनंकार्यम् (हेमाद्रौबृहस्पतिः) भोजनेषुचतिष्ठत्सुस्वस्तिकुर्वंतियेद्विजाः
तदन्नमसुरैर्भुक्तंनिराशैःपितृभिर्गतैः (जातूकर्ण्यः) पात्राणिचालयेच्छ्राद्धेस्व
यंशिष्योऽथवासुतः। नस्त्रीभिर्नचबालेननासजात्याकथंचन (याज्ञवल्क्यः) स्वस्ति
वाच्यंततःकुर्यादक्षय्योदकमेवच (तत्रैववृद्धशातातपः) पितॄणांनामगोत्रेण
करेदेयंतिलोदकम्। प्रत्येकंपितृतीर्थेनअक्षय्यमिदमस्त्विति॥ अत्रविशेषःप्रागु
क्ता (तत्रैवनागरखण्डे) उत्तानमर्घ्यपात्रंतुकृत्वादत्वाचदक्षिणाम्। हिरण्यंदेव
तानांचप्रदद्याद्रजतंतथा (बृहस्पतिः) तस्मात्प्रयत्नात्कांक्षिणांवाफलपुष्पमथा
पिवा॥ प्रदद्याद्दक्षिणांयत्नेयथास्यात्सफलोभवेत्॥ अत्रपितृदेवेनदक्षिणादानेअ
पसव्यवत्विप्रोद्देशेनसव्यमितिमाधवः (कालिकायामाचार्यः) स्वाचार्योपवीत्येव
तान्कृत्वादक्षिणांतथा (अत्रिः) वदेच्चतांस्ततोविप्रान्पित्रादिभ्यःस्वधोच्यताम्॥
(गोभिलः) अघोराःपितरःसंत्वित्युक्तेस्वधांवाचयिष्यइतिपृच्छेत्पितृभ्यः
स्वधोच्यतामित्युक्तेऽस्तुस्वधेत्युच्यमानेवारांधारांदद्यादूर्जंवहंतीरिति॥ आपस्तंबेन
तुपुत्रान्पौत्रानभितर्पयंतीरित्यपिपर्यायेवनेमंत्रउक्तः (आश्वलायनः) अथैतान्
प्रवाहयेत्॥ परेतनपितरःसोम्यासोगंभीरेभिःपथिभिःपूर्व्येभिः॥ दत्वायास्म
भ्यंद्रविणेहभद्रंरयिंचनःसर्ववीरंनियच्छतेति (मात्स्ये) वाजेवाजेइतिजपन्कु
शाग्रेणविसर्जयेत् (प्रचेताः) स्वस्तिवाच्यंततःकृत्वापितृपूर्वंविसर्जयेत् (आश्व
लायनः) अन्नंप्रकीर्यापवीत्योंस्वधेतिविसृजेदस्तुस्वधेतिवा (ब्रह्मवैवर्ते) आमा
वाजेतिमंत्रंतुपठित्वाचप्रदक्षिणाम्। द्वारोपांतेततःकृत्वासंयतःप्रविशेद्गृहम्॥
प्रांजलिश्चततःप्राहतान्विप्रान्सत्प्रवादिनः॥ दातारोनोभिवर्धंतामन्नंचनइति
ब्रूहीति॥ एवमस्त्वितितेतंचकथयंतिसमाहिताः॥ एतन्मण्डलदेशेकार्यमिति
हेमाद्रिः (मनुः) दातारोनोभिवर्धंतांवेदाःसंततिरेवच॥ श्रद्धाचनोमाव्यगमद्ब
हुदेयंचनोऽस्त्विति (बौधायनः) अन्नंचनोबहुभवेदतिथींश्चलभेमहि॥ याचि
तारश्चनःसंतुमाचयाचिष्मकंचनेति॥ अत्रदातारोनोभिवर्धंतामेवंयाचित्व
मित्यादिऊहेनपठित्वाविप्रैःप्रतिवचनंकार्यमितिसुदर्शनभाष्ये॥ स्वादुषंसदइति
ब्राह्मणाःपितरइतिचमंत्रद्वयंपठंति (शौनकः) ब्राह्मणानथनिर्यातानपरीत्य

त्रिःप्रदक्षिणम् ॥ सस्त्रीकःस्वजनैःसार्द्धंप्रणमेद्रचिताञ्जलिः॥कनिष्ठप्रथमाज्ज्येष्ठ
चरमास्तुःप्रदक्षिणो(हेमाद्रौबृहस्पतिः) अद्यमेसफलंजन्मभवत्पादाब्जवन्दनात्
अद्यमेवंशजाःसर्वेदातावोनुग्रहादिवम् ॥ पत्रशाकादिदानेनक्लेशितायूयमीदृ
शाः॥तत्क्लेशजातंचित्तात्तुविस्मृत्यक्षंतुमर्हथ (प्रचेताः) विसृजेद्भक्तिसंयुक्तःसी
मांतेचाप्यनुव्रजेत् (अथपिण्डप्रतिपत्तिः ॥ हेमाद्रौब्रह्माण्डे) पिण्डमग्नौसदा
दद्याद्भोगार्थीप्रथमंनरः । पत्न्यैप्रजार्थीदद्याद्वैमध्यमंमंत्रपूर्वकम् ॥ उत्तमांगति
मन्विच्छन्गोषुनित्यंप्रयच्छति । आज्ञांप्रज्ञांयशःकीर्त्तिमप्सुपिंडंप्रवेशयेत् ॥
प्रार्थयन्दीर्घमायुष्यंवायसेभ्यःप्रयच्छति ॥ आकाशंगमयेदप्सुस्थितोवादक्षि
णामुखः (आश्वलायनः) वीरंमेदत्तपितरइतिपिण्डानांमध्यमंपत्नींप्राशयेत् ॥
आधत्तपितरोगर्भंकुमारंपुष्करस्रजम् ॥ यथायमरपाअसदितिभर्त्रादत्तस्याद्ये
नादायद्वितीयेनप्राशनम् (आपस्तम्बस्तुदानेमंत्रमाह) अपांत्वौषधीनांरसंप्राश
यामिभूतकृतंगर्भंयत्स्वेतिमध्यमंपत्न्यैप्रयच्छतीति (प्राशनेपि) यथेहपुरुषो
असदितितत्रद्वितीयःपाठोअन्येषांतत्तच्छाखायांज्ञेयः ( तत्रैवशङ्खः ) पत्नीवा
मध्यमंपिण्डमश्नीयादार्तवान्विता (कलिकायांछागलेयः) प्राचीनावीतिनाऽ
नेकपत्नीपिण्डोविभज्यते ॥ प्रतिपत्न्यस्यमंत्रस्यकर्तव्यावृत्तिरत्रतु(माधवीये
विष्णुधर्मे) तीर्थश्राद्धेसदापिण्डान्क्षिपेत्तीर्थेसमाहितः (याज्ञवल्क्यः) पिण्डां
स्तुगोजविप्रेभ्योदद्यादग्नौजलेपिवा (बृहस्पतिः) अन्यदेशगतापत्नी रोगिणी
गर्भिणीतथा ॥ तदातंजीर्णवृषभश्छागोवाभोक्तुमर्हति ( अथपिण्डोपघातेहे
माद्रौप्रायश्चित्तकाण्डेदेवलः)श्वसृगालखरैःपिण्डःस्पृष्टोभिन्नःप्रमादतः॥कर्तु
रायुष्यनाशःस्यात्प्रेतस्तंनोपसर्पति (जातूकर्ण्यःपूर्वश्लोकांते) तद्दोषपरिहा
रार्थंप्राजापत्यंप्रकल्पयेत् ॥ पुनःस्नात्वातदाकर्त्तापिण्डंकुर्याद्यथाविधि ॥ का
कस्पर्शेतुनदोषः ॥ पिण्डोपघातंप्रक्रम्य ॥ धनस्यतुविनाशःस्यात्काकस्पर्शा
दिकेऽग्निनेतितत्रैवश्लोकेगौतमोक्तेः(स्मृतिदर्पणेऽत्रिः)मार्जारमूषकस्पर्शेपिंडे
चद्विदलीकृतेपुनःपिण्डाःप्रदातव्यास्तेनपाकेनतत्क्षणात् (बौधायनः)श्वचांडा
लादिभिःस्पृष्टः पिण्डोयद्युपहन्यते । प्राजापत्यंचरित्वाथ पुनःपिण्डंसमाच

रेव (वोपदेवोप्येवमाह) अथदिनान्तरेतुप्राजापत्यमात्रम् ॥ शेषप्रतिपत्तित्वेन पिण्डावृत्तौमानाभावादितिमैथिलास्तन्न ॥ सपिण्डीकरणादौशेषनाशेसंयोजनादिलोपापत्तेः ॥ तेनवचनाद्दमनइवावृत्तिमात्रंपिण्डदानावृत्तिः ॥ अतएव नचनक्तंश्राद्धंकुर्वीतारब्धेवा ॥ भोजनसमापनादित्यापस्तंबसूत्रम् ॥ रात्रौभोजनमात्रंपूर्वेद्युःकार्यम् ॥ श्राद्धसमाप्तिस्तुपरदिनेएव ॥ समाप्तिपर्य्यन्तंकर्तुरुपवासश्चेतिहरिदत्तेनव्याख्यातम् ॥ तस्मात्पाकान्तरेणापिण्डदानमात्रंकार्य्यम् ॥ अथपिण्डनिषिद्धकालः ॥ सचप्रायेणमहालयादिनिर्णयेपूर्वमुक्तः (हेमाद्रौबृहत्पराशरः) युगादिषुमघायांच विषुवत्ययनेतथा ॥ भरणीषुचकुर्वीत पिण्डनिर्वपणंनहि (स्मृतिरत्नावल्याम्) पुत्रेजातेव्यतीपाते ग्रहणेचन्द्रसूर्य्ययोः ॥ श्राद्धंकुर्यात्प्रयत्नेन पिण्डनिर्वपणादृते (तत्रैवकात्यायनः) वृद्धेरनन्तरंचैवयावन्मासःसमाप्यते ॥ तावत्पिण्डान्नैवदद्यान्नकुर्यात्तिलतर्पणम् (बौधायनः) संस्कारेषुतथान्येषु मासंमासार्द्धमेवच (तथा) भानौभौमेत्रयोदश्यां नन्दाभृगुमघासुच ॥ पिण्डदानंमृदास्नानं नकुर्य्यात्तिलतर्पणम् (त्रिस्थलीसेतौकार्ष्णाजिनिः) विवाहव्रतचूडासु वर्षमर्धंतदर्धकम् ॥ उत्तरार्धंप्राग्वत् ॥ वृद्धिमात्रेतथान्यत्र पिण्डदानानिराक्रिया ॥ कृतादारादिभिर्मुख्यैर्मासमेकन्तुकर्मणां (हेमाद्रौज्योतिःपराशरः)विवाहेविहितेमासांस्त्यजेयुर्द्वादशैवहि ॥ सपिण्डाःपिण्डनिर्वापं मौंजीवन्धेषडेवहि (तत्रैव) महालयेगयाश्राद्धे मातापित्रोःक्षयेहनि ॥ यस्यकस्यापिमर्त्यस्य सपिण्डीकरणेतथा ॥ कृतोद्वाहोपिकुर्वीत पिण्डनिर्वपणंसदेति ॥ मातापित्रोरितिक्षयाहविशेषणम् ॥ हविस्सभयत्ववद्विवक्षितम् । तेन भ्रातृपत्न्यादिवार्षिकेपिपिण्डदानंकार्यमितिकेचित् ॥ सपिण्डीकरणंनवश्राद्धषोडशश्राद्धोपलक्षणार्थमितिनिर्णयामृतेउक्तम् (क्षयाहविशेषः संग्रहे) मातापित्रोरब्दकेतुविवाहादिषुसर्वदा ॥ तिलैःपिण्डाःप्रदातव्याअन्यश्राद्धेविवर्जयेत् ॥ अत्रमूलंचिन्त्यम् (रामकौतुके) नन्दाश्चकामरव्यार भृगुवारेनपितृकार्ये ॥ पण्डवैधृतिपातेच पिण्डास्त्याज्याःसुतैर्बुधैः (विश्वरूपनिबन्धे) तिथिवारप्रयुक्तोयो दोषोत्रैवसमुदाहृतः ॥ सश्राद्धेतन्निमित्तेस्यान्नान्यश्राद्धेकदा

चन ॥ अन्यत्तूक्तंप्राक् ( उच्छिष्टोद्वासनमाहहेमाद्रौवशिष्ठः ) श्राद्धेनोद्वासनी
यानिउच्छिष्टान्यादिनक्षयात् ॥ श्च्योतन्तेवैसुधाधारास्ताःपिबन्त्यकृतोदकाः
(व्यासः) उच्छिष्टनप्रमृज्यात्तु यावन्नास्तमितोरविः ॥ इदंगृहान्तरसत्त्वे (एक
गृहेतुमनुः) उच्छेषणंतुतत्तिष्ठेद्यावद्विप्राविसर्जिताः ॥ ततोगृहबलिंकुर्य्यादिति
धर्म्मोव्यवस्थितः ॥ बलिंवैश्वदेवादिनित्यकर्मेतिमेधातिथिः (ब्रह्माण्डे) शूद्रा
यचानुपेताय श्राद्धोच्छिष्टंनदापयेत् (तथा) कामंदद्याच्चसर्व्वन्तु शिष्यायचसु
तायच ॥ भोक्तुरितिशेषः (जातूकर्ण्यः) द्विजभुक्तावशिष्टन्तुशुचिभूमौनिखा
नयेत् (अथवैश्वदेवादिअत्रसामकःश्लोकः) श्राद्धेनाग्निककर्तृकेग्निकरणात्प
श्चाज्जुहोतिर्बलिस्त्वंतेस्यादथवाभवेद्विकिरतःपश्चात्पृथक्त्वेपचेः ॥ श्राद्धा
न्तेत्वथवामहालयविधावूर्ध्वंभुजेस्यात् क्षयेत्वन्तेमाऽसुवमध्यताशुभविधावादौ
तथासाग्निके (अस्यार्थः) साग्नेःपृथक्पाकेनसर्वत्रादौवैश्वदेवः ॥ पक्षान्तंकर्म
निर्वर्त्य वैश्वदेवंचसाग्निकः ॥ पिण्डयज्ञंततःकुर्यात्ततोन्वाहार्यकंबुधः ॥ पित्र
र्थंनिर्वपेत्पाकं वैश्वदेवार्थमेवच ॥ वैश्वदेवंनपित्रर्थं नदर्शंवैश्वदेविकमिति लौगा
क्षिस्मृतेः ॥ अत्रसाग्निकआहिताग्निरितिहेमाद्रिः ॥ श्राद्धात्प्रागेवकुर्व्वीत वै
श्वदेवंतुसाग्निकः ॥ एकादशाहिकंभुक्त्वातत्रह्यन्तेविधीयतेइति हेमाद्रौशालं
कायनोक्तेश्च ( तत्रैवपरिशिष्टे ) सम्प्राप्तेपार्वणश्राद्धे एकोद्दिष्टेतथैवच ॥ अ
ग्रतोवैश्वदेवःस्यात् पश्चादेकादशेहनि ॥ स्मार्त्ताग्निमतांतद्रहितानांवाग्नौकर
णोत्तरंविकिरोत्तरंवा ॥ होममात्रंपृथक्पाकेन ॥ भूतयज्ञादितुश्राद्धान्तएव ॥
अत्रमूलंहेमाद्रिचन्द्रिकादौस्पष्टम् ॥ सर्वेषांश्राद्धांतेवातत्पाकेनवैश्वदेवनित्यश्रा
द्धावीतितृतीयः ॥ श्राद्धंनिर्वर्त्यविधिवद्वैश्वदेवादिकंततः ॥ कुर्याद्भिक्षांततोदद्या
द्धन्तकारादिकन्तथेतिपैठीनसिस्मृतेः ॥ ततःश्राद्धशेषात् ॥ श्राद्धाद्धिश्राद्धशेषे
ण वैश्वदेवंसमाचरेदिति चतुर्विंशतिमताच्च ॥ एवंवैश्वदेवकालत्रयस्यश्राद्धार्के
शांखायनपरिशिष्टमुदाहृत्यैवव्यवस्थोक्ता ॥ आदौवृद्धौक्षयेचांते दर्शेमध्येमहा
लये ॥ एकोद्दिष्टेनिवृत्तेतु वैश्वदेवोविधीयत इतिबहुस्मृत्युक्तत्वात्सर्वेषांश्राद्धांते
एवेति मेधातिथिस्मृतिरत्नावल्यादयोबहवः ॥ बोपदेवस्तुवृत्तिकारेणाविसर्जनां

तंश्राद्धमुक्त्वाउच्छेषणांत्विति पूर्वोक्तमनुवाक्योदाहरणाद्बह्वृचानां श्राद्धान्त
एव ॥ मध्यपक्षस्त्वन्यशाखापरइत्याह ॥ हेमाद्रिस्तुबह्वृचानामप्यन्तेएववैश्वदेव
माह ॥ कातीयानांतुश्रौतस्मार्त्ताग्निमतामादावेकेनैवपाकेनेतिकर्कः ॥ अन्ये
षांमतेतैत्तिरीयाणांतुसाग्निकानांसर्वथादौवैश्वदेवः ॥ पंचयज्ञाश्चश्रंतेचेतिसुद
र्शनभाष्येउक्तम् ॥ अस्यपक्षद्वयस्यपूर्ववद्व्यवस्था (हेमाद्रौमार्कंडेयः) ततोनित्य
क्रियांकुर्याद्भोजयेच्च ततोतिथीन् ॥ ततस्तदन्नम्भुंजीत सहभृत्यादिभिर्नरः ॥ त
तःश्राद्धशेषात् ॥ नित्यक्रियांनित्यश्राद्धम् (तत्र) पृथक्पाकेननैत्यकमितितेनै
वोक्ते ॥ पाकैक्येविकल्पः ( अथनित्यश्राद्धम्॥हेमाद्रौव्यासः ) एकमप्याशये
द्विप्रं षरणामप्यन्वहंगृही ॥ अपीत्यनुकल्पः (प्रचेताः) नामंत्रणांनहोमंचनाह्वा
नंनविसर्जनम् ॥ नपिण्डदानंविकिरंनदद्यादत्रदक्षिणाम् ( अत्र ) निर्दिश्यभोज
यित्वातु किंचिद्दत्वाविसर्जयेदितितेनैवोक्तेर्दक्षिणाविकल्पः ( यत्तु ) नित्य
श्राद्धंदैवहीनं नियमादिविवर्जितम् ॥ दक्षिणारहितंचैव दातृभोक्तृव्रतोज्झित
मितिकाशीखण्डे ॥ तद्दक्षिणाभावपरमितिपृथ्वीचन्द्रः (भविष्ये) आवाहनंस्व
धाकारं पिण्डाग्नौकरणादिकम् ॥ ब्रह्मचर्यादिनियमा विश्वेदेवानचैवहि ॥
दातॄणामथभोक्तॄणां नियमोनचविद्यते ॥ एतद्दिवासम्भवेरात्रावपिकार्यम् ॥
दिवोदितानिकर्माणि प्रमादादकृतानिवै ॥ यामिन्याःप्रहरंयावत्तावत्कर्माणि
कारयेदिति बृहन्नारदीयोक्तेः ॥ रात्रौप्रहरपर्य्यंतंदिवाकृत्यानिकारयेत् ॥
ब्रह्मयज्ञंचसौरंच वर्जयित्वाविशेषतइतिपृथ्वीचन्द्रधृतसंग्रहोक्तेश्च ॥ नचदा
र्शिकाब्दिकाद्यपरात्रौस्यादितिवाच्यम् ॥ इष्टापत्तेः ॥ तस्यातिथिसम्बन्धित
त्वात् ॥संध्यारात्रौनकर्तव्यंश्राद्धङ्खलुविचक्षणैरितिविष्णवाद्यैरात्रौनिषेधात्॥
( अतएवाल्पद्वादश्यां ) ऊषःकालेद्वयंकुर्यात् प्रातर्मध्याह्निकंतदेत्याद्यैर्वाक्यै
स्त्रयोदशीश्राद्धंनापकृष्यते ॥ भिन्नविषयत्वादित्युक्तंमदनरत्ने ॥ नित्यत्वंप
कृष्यते ॥ अन्वहमित्युक्तेरितिथिसवाधिकाभावात् (यथाचसुदर्शनभाष्ये) पर
पक्षेपिच्याणीतिनियमेपिनित्यश्राद्धत्वेसंवत्सरमित्यत्यंतसंयोगेद्वितीया ॥ ब
लाच्छुल्कपक्षेपीत्युक्तम् ॥ तथारात्रावपि॥ तथाचमाधवेनप्रतिपत्प्रकरेस्पष्ट

मुक्तम् ॥ वयंचाग्रेवक्ष्यामः ॥ अस्यादिनेकरणोक्तापेयव ॥ रात्रौश्राद्धंनकुर्वीतेति निषेधादितिपृथ्वीचन्द्रोदयः (पात्राभावेकौर्मे) उद्धृत्यवायथाशक्तिकिंचिद न्नंप्रकल्पयेत् (तत्रप्रतिपत्तिमाहविष्णुः) भिक्षुकाभावेअन्नंगोभ्योदद्यादग्नौवा प्रक्षिपेदिति (हेमाद्रौनागरखंडे) नित्यश्राद्धंनकुर्वीतप्रसंगाद्यत्रसिद्ध्यति ॥ श्रा द्धांतरेकृतेन्यत्रनित्यत्वात्तन्नहापयेत् ॥ षड्दैवतेपृथङ्नेत्यर्थः (मात्स्ये) तत स्तुवैश्वदेवांतेसभृत्यसुतबांधवः ॥ भुंजीतातिथिसंयुक्तःसर्वपितृनिषेवितम् ॥ सर्व पर्वनिषिद्धंमांसमाषाद्यपीत्यर्थः ॥ एवंकृष्णैकादश्यादौगृहिणोपिभोजनम् ॥ अस्यवैधत्वेननिषेधाप्रवृत्तेः ॥ एवंग्रहणावेधेपि ॥ यत्त्वनाहिताग्नेरमाषसमांसं व्रतयोरित्युक्तंतद्धेयमेव ॥ श्रौतत्वेनतस्यबलवत्त्वात् (देवलः) श्राद्धंकृत्वातुयो मर्त्योनभुंक्तेऽथकदाचन ॥ देवाहव्यंनगृह्णंतिकव्यानिपितरस्तथा ॥ शिवरा त्र्येकादश्यादौत्ववघ्राणमेवेत्युक्तंप्राक् ॥ यत्रतूपवासोनावश्यकस्तत्रैकभक्तम याचितंवाकार्यमितिहेमाद्रिः (जातूकर्ण्यः) अहन्येवतुभोक्तव्यंकृतेश्राद्धेद्विज न्मभिः ॥ अन्यथाह्यासुरंश्राद्धंपरपाकेचसेविते (श्राद्धशेषभोजनस्यक्वचिन्नि षेधमाहहेमाद्रौप्रायश्चित्तकांडेमार्कंडेयः) पित्रादीनामथाऽन्येषांश्राद्धशेषा न्नभोजनम् ॥ व्रतिनांविधवानांचयतीनांचविगर्हितम् ॥ अन्येभिन्नगोत्राः ॥ व्र तिनोब्रह्मचारिणः॥श्राद्धावशिष्टभोक्तारस्तेवैनिरयगामिनः ॥ सगोत्राणांसकु ल्यानांज्ञातीनांचनदोषकृदितितत्रैवोक्तेः (तत्रैवजाबालिः) विप्रस्त्वन्यगृहेश्राद्धे शिष्टान्नंभोजनंचरेत् ॥ प्राजापत्यविशुद्धिःस्याज्ज्ञातिगोत्रेनदोषकृत्॥ यतीनांव चनंलक्षप्रणवजपश्चेतितत्रैवोक्तम् (अस्यापवादमाहसएव) श्वशुरस्यगुरोर्वापि मातुलस्यमहात्मनः ॥ ज्येष्ठभ्रातुश्चपुत्रस्यब्रह्मनिष्ठस्ययोगिनः॥एतेषांश्राद्धशि ष्टान्नंभुक्त्वादोषोनविद्यते ॥ इतिकेचित्प्रशंसंतिमुनयस्तदसांप्रतम् ॥ विशेषां तरंतत्रैवज्ञेयम् (हेमाद्रौजाबालिः) तांबूलंदंतकाष्ठंचस्नेहस्नानमभोजनम् ॥ रत्यौ षधिपरान्नानिश्राद्धकर्त्ताविवर्जयेत् (पृथ्वीचन्द्रोदयेआचार्यः) नशूद्रंभोजये त्तस्मिन्गृहेयत्नेनतद्दिने ॥ श्राद्धशेषंनशूद्रेभ्यःप्रदद्यादखिलेऽर्वपि ॥

इतिकमलाकरभट्टकृतेनिर्णयसिन्धौपार्वणश्राद्धम् ॥

अथानुकल्पः (तत्रविप्रालाभे) भोजयेदथवाप्येकंब्राह्मणंपंक्तिपावनम् ॥ दै
वेक्षत्वात्तुनैवेद्यंपश्चात्तस्यतुनिर्वपेदितिशंखोक्तेरेकोविप्रःपूर्वमुक्तः ॥ विप्रा
भावेदर्भवटुः ॥ निधायवादर्भवटूनासनेषुसमाहितः ॥ प्रैषानुप्रैषसंयुक्तंविधानं
प्रतिपादयेदितिदेवलोक्तेः ॥ अशक्तावामश्राद्धम् ॥ आपद्यनग्नौतीर्थेच प्रवासे
पुत्रजन्मनि ॥ आमश्राद्धंप्रकुर्वीतभार्यारजसिसंक्रमेइतिकात्यायनोक्तेः (पृथ्वी
चन्द्रोदयेजमदग्निः) यावत्स्यान्नाग्निसंयुक्तउत्सन्नाग्निरथापिवा । आमश्राद्धं
तदाकुर्याद्धस्तेग्नौकरणंभवेत् (कौर्मे) अनग्निरध्वनोवापितथैवव्यसनान्वितः ।
आमश्राद्धंद्विजःकुर्याद्वृषलस्तुसदैवहि ॥ आहिताग्नौप्रवासस्थेतत्पत्नीगृहेदर्शं
ऋत्विगादिनाकारयेत् ॥ अमावास्यादिनियतंप्रोषितेधर्मचारिणि ॥ पत्न्यौतु
कारयेन्नित्यमन्येनाप्यृत्विगादिनेतिलघुहारीतोक्तेरितिपृथ्वीचन्द्रोदयः ॥
आदिपदमाह्निकादिसर्वपार्वणपरमितिशूलपाणिः (सुमंतुः) पाकाभावेधि
कारःस्याद्विप्रादीनांनराधिप । अपत्नीनांमहाबाहोविदेशगमनादिभिः ॥ स
दाचैवतुशूद्राणामामश्राद्धंविदुर्बुधाः (प्रचेताः) स्त्रीशूद्रःस्वपचश्चैवजातकर्म
णिचाप्यथ । आमश्राद्धंसदाकुर्याद्विधिनापार्वणेनतु । स्वयंपचतीतिस्वप
चअपत्नीकः (विष्णुधर्मे) आत्मनोदेशकालाभ्यांविप्लवेसमुपस्थिते ॥
आपद्यनग्नौतीर्थेचप्रदानेपत्न्यसंभवे ॥ चंद्रसूर्यग्रहेचैवदद्यादामंविशेषतः । न
पक्वंभोजयेद्विद्वानसच्छूद्रोपिकदाचन ॥ भोजयन्प्रत्यवायीस्यान्नचतस्यफ
लंलभेत् ॥ अत्रप्रवासतीर्थग्रहणादावामहेमश्राद्धमेव ॥ पाकश्राद्धंतुनभवत्येवे
तिहेमाद्रिरत्नावल्यादयः (अपरार्कविज्ञानेश्वरादयस्तु) पाकाभावेद्विजाती
नामामश्राद्धंविधीयत इतिसुमंतूक्तेः ॥ साग्निकैर्निरग्निकैश्चप्रवासादौसर्व
थापाकाभावेआमादिकार्यम् ॥ पाकसंभवेत्वन्नेनैवेत्याहुः (अतएवपाकश्राद्धमु
क्त्वा) एतच्चानुपनीतोपिकुर्यात्सर्वेषुकर्मसुभार्या विरहितोप्येतत्प्रवासस्थो
पिनित्यशइतिमात्स्येनिरग्नेरपिपाकेनोक्तमितिशूलपाणिकल्पतरू ॥ एतच्छ
न्दःश्राद्धमात्रपरइत्यन्ये ॥ एकोद्दिष्टंतुकर्तव्यंपाकेनैवसदास्वयमितिलघुहारी
तीयमपिसाग्नेरेव ॥ निरग्नेर्महैकोद्दिष्टमप्यामेन ॥ शूद्रस्यतुदशाहपिंडाद्या

मेनेतिहलायुधः ॥ उत्सन्नाग्नीनांत्वामश्राद्धमेवपूर्वोक्तजमदग्निवाक्यात् (मरीचिः) श्राद्धविघ्नेद्विजातीनामामश्राद्धंप्रकीर्तितम् अमावास्यादिनियतंमासंवत्सरादृते (स्मृतिदर्पणे) मृताहंचसपिंडंचगयाश्राद्धंमहालयम् । आपन्नोपिनकुर्वीतश्राद्धमामेनकर्हिचित् (हेमाद्रौव्यासः) आमंददतुकौंतेयदद्यादामंचतुर्गुणम् । द्विगुणंत्रिगुणंवापिनत्वेकगुणमर्पयेत् ॥ सिद्धान्नेतुविधिर्यःस्यादामश्राद्धेप्यसौविधिः ॥ आवाहनादिसर्वंस्यात्पिंडदानंचभारत ॥ दद्याद्यद्विजातिभ्यःशृतंवाशृतमेववा ॥ तेनाग्नौकरणंकुर्यात्पिंडास्तेनैवनिर्वपेत् (पक्षांतरमाहसएव) आमंददन्हिकौन्तेयतदामंद्विगुणंचरेत् । त्रिगुणंचतुर्गुणंवापिनत्वेकगुणमर्पयेत् (स्मृत्यर्थसारेसममप्युक्तं ॥ बव्हृचपरिशिष्टमते) आमश्राद्धंयदाकुर्यात्पिंडदानंकथंभवेत् । गृहपाकात्समुद्धृत्यसक्तुभिःपायसेनवा ॥ पिंडान्दद्याद्यथालाभंतिलैःसहविमत्सरः (पृथ्वीचन्द्रोदयेव्यासः) आमश्राद्धंयदाकुर्याद्विधिज्ञःश्राद्धदःसदा । हस्तेग्नौकरणंकुर्याद्द्विब्राह्मणस्यविधानतः ॥ एतत्साग्नेर्निरग्नेःसदातत्सत्वात् (यत्तु) आमेनपिंडंदद्याच्चेद्विप्रान्पाकेनभोजयेत् । पक्वेनकुरुतेपिंडमामान्नंयःप्रयच्छति ॥ तावुभौभानुजोप्रोक्तौनरकार्हौनसंशयइतितद्दर्शादिपरम् ॥ देशाचाराद्व्यवस्थेतियुक्तम् (मरीचिः) आवाहनेस्वधाकारेमंत्राऊह्याविसर्जने । अन्यकर्मण्यनूह्यास्युरामश्राद्धविधिःस्मृतः ॥ आवाहनेहविषेअत्तवइत्यत्रस्वीकर्तवेइत्यूहः ॥ स्वधाकारेनमोवःपितरइषेइत्यत्रइषेपदस्थानेआमद्रव्यायेत्यूहः ॥ विसर्जनेवाजेवाजेइत्यत्रत्वन्ना इतिस्थानेतप्स्यतइत्यूहः ॥ यद्यपितस्माद्वचनेऽहेर्दातिकृच्चूहोर्निषिद्धस्तथापिवचनाद्भवति ॥ तृप्तिप्रश्नोवगाहप्रच्छप्रश्नोयथासुखम् । आमश्राद्धेभवेन्नैतदापोशानंचपंचसम ॥ अयंचानुवादःखलेवाल्यांछेदनादीनामिवार्थाभावाल्लोपसिद्धेः (धर्मप्रदीपेतु) आमंचतुर्गुणंदद्यादथवाद्विगुणंतथा । हेमंचाष्टगुणंतद्वदामेहेमेप्यसौविधिः ॥ आमेहेमेतथानित्येनांदीश्राद्धेतथैवच । व्यतीपातादिकेश्राद्धेनियमान्परिवर्जयेत् ॥ गृहपाकात्समुद्धृत्यसक्तुभिःपायसेनवा । पिंडदानंप्रकुर्वीतआमेहैमेकृतेसति ॥ आमश्राद्धे चतुर्थेचप्रेतश्राद्धेतथैवच । विकिरंनैवकुर्वीतमुनिः

कात्यायनोऽब्रवीत्आमश्राद्धमसंगुष्ठमग्नौकरणवर्जितम् । तृप्तिप्रश्नविहीनंतुक
र्तव्यंमानवैध्रुवम्आवाहनाग्नौकरणंविकिरंपात्रपूरणम् । तृप्तिप्रश्नंनकुर्वीत
आमेहेमेकदाचनेत्युक्तम् (एतच्च) आवाहनंभवेत्कार्यमर्घ्यदानंतथैवचेतिहेमा
द्रौभविष्यादिविरोधाच्चिंत्यम् ॥ शाखांतरविषयंवास्तु ॥ विकिरोप्यामेनेतिहे
माद्रिः ॥ शूद्रस्यतुतत्रैवोक्तम् ॥ अग्नौकरणमंत्रश्चनमस्कारोविधीयते । अग्न
येकव्यवाहनायनमः ॥ सोमायपितृमतेनमइत्ययंमंत्रः ( मात्स्ये ) मंत्रवर्ज्यंहि
शूद्रस्यसर्वमेवविधीयते । एवंशूद्रोपिसामान्यंवृद्धिश्राद्धंचसर्वदा ॥ नमस्कारेण
मंत्रेणकुर्यादामान्नवद्बुधः ॥ तच्चपूर्वाह्णेकार्यम् ॥ आमश्राद्धंतुपूर्वाह्णेएकोद्दि
ष्टंचमध्यतः । पार्वणंचापराह्णेतुप्रातर्वृद्धिनिमित्तकमितिहारीतोक्तेः ॥ एतत्
द्विजविषयम् ॥ शूद्रकर्तृकंत्वपराह्णएव ॥ मध्याह्नात्परतोयस्तुकुतुपःसमुदा
हृतः । आमश्राद्धन्तुतत्रैव पितृणांदत्तमक्षयमितिसुमन्तूक्तेरित्यपरार्केहेमाद्रौ
चोक्तम् (तदभावेहेमश्राद्धमाहहेमाद्रौमरीचिः) आमान्नस्याप्यभावेतुश्राद्धंकुर्वी
तबुद्धिमान् । धान्याच्चतुर्गुणेनैव हिरण्येनसुरोचिषा ( धर्मः ) आमन्तुद्विगुणं
प्रोक्तं हेमन्तद्वच्चतुर्गुणम् ( स्मृत्यर्थसारे ) हिरण्यमष्टगुणंचतुर्गुणंसमंवादद्यात्
(हेमाद्रौभविष्ये) अन्नाभावेद्विजाभावे प्रवासेपुत्रजन्मनि । हेमश्राद्धंसंग्रहेच त
थास्त्रीशूद्रयोरपि (षट्त्रिंशन्मतेतुर्यपादे) वर्जयित्वाक्षयेहनीतिपाठः यस्यभा
र्यारजस्वलेतिचव्यासपाठः (पुत्रोत्पत्तौतुहेमनियममाहसंवर्त्तः ) पुत्रजन्मनिकु
र्वीत श्राद्धंहेम्नैवबुद्धिमान् । नपक्वेननचामेनकल्याणान्यभिकामयन् (भविष्ये)
गृहपाकात्समुद्धृत्य सक्तुभिःपायसेनवा । पिण्डदानंप्रकुर्वीतहेमश्राद्धेकृतेसति ॥
शूद्रस्तुगृहपाकेन तत्पिण्डान्निर्वपेत्तथा । सक्तुमूलंफलंतस्य पायसंवाभवेत्स्मृ
तम् ॥ हेमश्राद्धेपिण्डदानंनेतिदिवोदासः ॥ स्मृत्यर्थसारेतुविकल्पउक्तस्तदाश
यंनविद्मः (षट्त्रिंशन्मते) नामंत्रणाग्नौकरणं विकिरोनैवदीयते । तृप्तिप्रश्नो
पिनैवात्र कर्त्तव्यःकेनचिद्व्रजेत् ॥ अत्रमरीचिनाआमाभावे हेमविधानेनस्थाना
पत्त्याधर्मप्राप्तेःपूर्ववन्मंत्रोहः पूर्वाह्णकालताचज्ञेयेतिदिक् पूर्वोक्तधर्मप्रदीपो
क्तेश्च (व्यासः) हिरण्यमामंत्र्याद्दीयं लब्धंग्रहस्तश्रियादितः । यथेष्टंविनियो

ऽयंस्याद्भुंजीयाद्ब्राह्मणात्स्वयम् ॥ विप्रलब्धंभुञ्जीयात् ॥ क्षत्रियादिलब्धेतु यथेष्टविनियोगः ॥ तेनापिश्राद्धवैश्वदेवादिनकार्यम् ॥ द्रव्योद्देशेनत्यक्तस्यदेवतांतरायत्यागायोगादितिदेवयाज्ञिकः (शूद्रलब्धेनूक्तंतत्रैवषट्त्रिंशन्मते) आमंशूद्रस्ययत्किंचिच्छ्राद्धिकंप्रतिगृह्यते । तत्सर्वंभोजनायालं नित्यनैमित्तिकेनचेति (शुद्धितत्त्वेंगिराः) शूद्रवेश्मनिविप्रेण क्षीरंवायदिवादधि । निवृत्तेननभोक्तव्यं शूद्रान्नंतदपिस्मृतम् । शूद्राद्विप्रगृहेष्वन्नं प्रविष्टन्तुसदाशुचिः (पराशरः) तावद्भवतिशूद्रान्नं यावन्नस्पृशतिद्विजः । द्विजातिकरसंस्पृष्टं सर्व्वंतन्नविरुध्यते (विष्णुपुराणे) संप्रोक्षयित्वागृह्णीयाच्छूद्रान्नंगृहमागतम् (अंगिराः) पात्रांतरगतंग्राह्यं दुग्धंस्वगृहमागतम् (सपिण्डश्राद्धशक्तावाहहेमाद्रौसंवर्त्तः) समग्रंयस्तु शक्नोति कर्तुंनैवेहपार्वणम् । अपिसंकल्पविधिना कालेतस्यविधीयते ॥ पात्रभोज्यस्यचान्नस्य त्यागःसंकल्पउच्यते (व्यासः) सांकल्पन्तुयदाकुर्यान्नकुर्यात्पात्रपूरणम् । नावाहनाग्नौकरणे पिण्डांश्चैवनदापयेत् ॥ पात्रमर्घ्यस्य ॥ समंत्रकावाहनस्यनिषेधः ॥ तूष्णींतुभवत्येवेतिहेमाद्रिः (स्मृत्यर्थसारे) विकिरन्तुनदातव्यमितितृतीयपादेपाठः (स्मृत्यन्तरे) त्यजेदावाहनंचार्घ्यं मग्नौकरणमेवच । पिण्डांश्चविकिरांश्चैव श्राद्धेसांकल्पसंज्ञके (हेमाद्रौवृद्धशातातपस्तु) पिण्डनिर्वापरहितं यत्तुश्राद्धंविधीयते । स्वधावाचनलोपोत्र विकिरस्तु नलुप्यतइत्याह (पृथ्वीचन्द्रोदयेवसिष्ठः) आवाहनंस्वधाशब्दं पिण्डाग्नौकरणान्तथा । विकिरंपिण्डदानंच सांकल्पेषड्विवर्जयेत् (विकिरेविकल्पःस्मृत्यन्तरे) अंगानिपितृयज्ञस्य यदाकर्तुंनशक्नुयात् । सतदावाचयेद्विप्रान् संकल्पात्सिद्धिरस्त्विति (छागलेयः) पिण्डोयत्रनिवर्तेत मघादिषुकथंचन । सांकल्पन्तुतथाकार्यं नियमाद्ब्रह्मवादिभिः (कार्ष्णाजिनिः) मौंजीबन्धाद्वत्सरार्धं वत्सरंपाणिपीडनात् । पिण्डान्सपिण्डानोदद्युः प्रेतपिण्डंविनात्वतु ॥ अस्यापवादःपित्रोराब्दिकादौपूर्वमुक्तः (त्यक्ताग्नेरपिसांकल्य मुक्तंषट्त्रिंशन्मते) अनग्निकोयदाविप्र उत्सन्नाग्निस्तथैवच । तथावृद्धिषुसर्वासु संकल्पश्राद्धमाचरेत् (अशक्तौपृथ्वीचन्द्रोदयेवृहन्नारदीये) द्रव्याभावेद्विजाभावे अन्नमात्रन्तु

पाचयेत । पैतृकेनतुसूक्तेन होमंकुर्याद्विचक्षणः ( देवलः ) पिण्डमात्रंप्रदात व्यमभावेद्रव्यविप्रयोः । श्राद्धीयाहनिसंप्राप्तेभवेन्निरग्निर्नोपिवा (वृद्धवसिष्ठः) किंचिद्दद्यादशक्तस्तु उदकुम्भादिकंद्विजे । तृणानिवागवेदद्यात्पिण्डांवाप्यथ निर्वपेत ॥ तिलदर्भैःपितॄन्वापि तर्पयेत्स्नानपूर्वकम ( हेमाद्रौभविष्ये ) अग्नि नावादहेत्तकक्षंश्राद्धकालेसमागते । तस्मिन्वोपवसेदह्निजपेद्वाश्राद्धसंहिताम ॥ श्राद्धसंहितासमंत्रश्राद्धसंकल्पः (विष्णुवराहपुराणयोः) असमर्थोन्नदानस्यधा न्यंमांसंस्वशक्तितः । प्रदास्यतितिलान्वापि स्वल्पांवापिचदक्षिणाम ॥ सर्वा भावेवनंगत्वा कक्षामूलप्रदर्शकः । सूर्यादिलोकपालाना मिदमुच्चैःपठिष्यति॥ नमेस्तिवित्तंनधनंनचान्नंश्राद्धोपयोग्यंस्वपितॄन्नतोस्मि । तृप्यन्तुभक्त्यापित रोमयैतौभुजौकृतौवर्त्मनिमारुतस्य ॥ इत्येतत्पितृभिर्गीतं भावाभावप्रयोजनम॥ यःकरोतिकृतंतेन श्राद्धम्भवतिभारत ( प्रभासखण्डे ) गत्वारण्यममानुष्यमू र्ध्ववाहुर्विरौत्यदः । निरन्नोनिर्धनोदेवाः पितरोमान्तृणांकथाः ॥ नमेस्तिवित्त नधनंनभार्याश्राद्धंकथंवःपितरःकरोमि । वनंप्रविष्टोयेहतुतन्मयोच्चैर्भुजौकृतौव र्त्मनिमारुतस्य ॥ श्राद्धार्थमेतद्भवतांप्रदत्तंमह्यंदयध्वंपितृदेवताद्याः।आख्यायचो र्ध्वक्षिप्यभुजौततोवै दिवाचरात्रिंसमुपोष्यतिष्ठेत ॥ भवेत्सर्वैतेनकृतेनतेषामृणो नमुक्तःपितृदेवतानाम ॥ इत्यनुकल्पः (अथश्राद्धभोजनेप्रायश्चित्तम ) दर्शेषट् प्राणायामाः ॥ वृद्धौत्रयः ॥ संस्कारेषुजातकर्मादिचूडान्तेषुसांतपनम ॥आद्ये चान्द्रंवा ॥ अन्यसंस्कारेषूपवासः॥ सीमन्तेचान्द्रमितिविज्ञानेश्वरः ॥ आपदि नवश्राद्धैकादशाहेषुभोजनेकायः ॥ द्वादशाहेऊनमासेचपादोनः ॥ द्विमासेत्रि पक्षेऊनषण्मासेनाब्दयोश्चार्धकृच्छ्रः ॥ त्रिमासाद्याब्दिकान्तेषुसपिण्डनेचपाद कृच्छ्रउपवासोवा ॥ गुरुद्रव्यार्थभोजनेऽर्धम ॥ जपशीलेतदर्धम ॥ अनापदितून मासांतेषुचाद्रकृच्छ्रायंवा ॥ द्विमासादौपादोनं ॥ त्रिमासादावर्धकायः ॥ आब्दिके पादोनकायः ॥ पुनराब्दिकेएकाहः ॥ क्षत्रियादिश्राद्धेषुद्वित्रिचतुर्गुणानिज्ञे यानि ॥ चाण्डालसर्पश्वादिहतपतितक्लीबादिनवश्राद्धेचांद्रम ॥ आद्यमासि कांतेचांद्रंपराकश्च ॥ द्वादशाहादौपराकः ॥ द्विमासादावतिकृच्छ्रः ॥ त्रिमा

सादौकार्यः ॥ आब्दिकेपादः ॥ अभ्यासेसर्वंद्विगुणम् ॥ आमहेमसंकल्पश्राद्धेषु
तत्तदर्धानि ॥ यतिर्ब्रह्मचारीचोक्तंप्रायश्चित्तंकृत्वात्रीनुपवासान्प्राणायामा
न्घृताशनंचाधिकंकृत्वाव्रतशेषंसमापयेत् ॥ अनापदिद्विगुणम् ॥ दशादौदशगा
यत्रीमंत्रिताआपःपिबेत्षट्प्राणायामान्वा ॥ संस्कारेषुचौलेकृच्छ्रः ॥ सीमंतेचां
द्रम् ॥ अन्येषूपवासइतिदिक् ॥ अत्रमाधवमिताक्षरादौकर्त्रिविरोधोविषयभेदात्प
रिहार्यः ॥ एकादशाहेचांद्रंपुनःसंस्कारश्चेतिप्रायश्चित्तकांडेहेमाद्रिः (यत्तु
शनाः) दशाकृत्वःपिबेदापोगायत्र्याश्राद्धभुग्द्विजइतितदनुक्तप्रायश्चित्तश्राद्ध
परमितिविज्ञानेश्वरः (अथक्षयाहश्राद्धम् ॥ तत्स्वरूपमाहहेमाद्रौव्यासः)
मासपक्षतिथिस्पृष्टेयोयस्मिन्म्रियतेहनि । प्रत्यब्दंतुतथाभूतंक्षयाहंतस्यतंविदुः
(नारदीये) पारणेमरणेनॄणांतिथिस्तात्कालिकीस्मृता । अत्रचांद्रंमानंज्ञेयं ॥
आब्दिकेपितृकार्येचचांद्रोमासःप्रशस्यतइतिगार्ग्योक्तेः ॥ मलमासमृतस्यतुसौर
म् ॥ मलमासमृतानांतुसौरंमानंसमाश्रयेदितिहेमाद्रावुक्तेः ॥ एतन्मृतमासस्यै
वाधिक्येज्ञेयम् (ब्राह्मे) प्रतिसंवत्सरंकार्यंमातापित्रोर्मृतेहनि । पितृव्यस्याप्य
पुत्रस्यभ्रातुर्ज्येष्ठस्यचैवहि ॥ अपुत्रस्येतिभ्रात्राप्यन्वयः ॥ ज्येष्ठस्येतिकनिष्ठस्या
नावश्यकत्वार्थम् (मदनरत्नेभविष्ये) सर्वेषामेवश्राद्धानांश्रेष्ठंसांवत्सरंमतम् ॥
(तथा) भोजकोयस्तुवैश्राद्धंनकरोतिखगाधिप ॥ मातापितृभ्यांसततंवर्षेवर्षेमृ
तेहनि ॥ सयातिनरकंघोरंतामिस्रंनामनामतः ॥ तच्चनानास्मृतिष्वेकोद्दिष्टंपार्व
णंचोक्तम् (आद्यमाहयमः)सपिंडीकरणादूर्ध्वंप्रतिसंवत्सरंसुतैः । मातापित्रोः
पृथक्कार्यमेकोद्दिष्टंमृतेहनि(व्यासः) एकोद्दिष्टंतुकर्तव्यंपित्रोश्चैवमृतेहनि । ए
कोद्दिष्टंपरित्यज्यपार्वणंकुरुतेनरः ॥ अकृतंतद्विजानीयाद्भवेच्चपितृघातकः (अं
त्यमाहशातातपः)सपिंडीकरणंकृत्वाकुर्यात्पार्वणवत्सदा ॥ प्रतिसंवत्सरंश्राद्धं
छागलेनोदितोविधिः ॥ यःसपिंडीकृतंप्रेतंपृथक्पिंडेनियोजयेत् । विधिघ्नस्ते
नभवतिपितृहाचोपजायते ॥ अत्रौरसक्षेत्रजयोःपार्वणंदत्तकादीनामेकोद्दिष्टमि
त्येकःपक्षः ॥ साग्नेःपार्वणंनिरग्नेरेकोद्दिष्टमित्यपरः ॥ तद्दूषणंमिताक्षरादौज्ञे
यं(कल्पतरुस्तु) साग्न्योरौरसक्षेत्रजयोःपार्वणम् ॥ निरग्निकयोस्त्वेकोद्दिष्ट

मित्याह ॥ अपरार्केप्येवम्॥दत्तकादयोदशपुत्रास्तुसाग्नयोनिरग्नयश्चैकोद्दिष्ट
मेवकुर्युः ॥ प्रत्यब्दंपार्वणेनैवविधिनाक्षेत्रजौरसौ । कुर्यातामितरेकुर्युरेकोद्दिष्टं
सुतादशेतिजातूकर्ण्योक्तेः ॥ यदातुदत्तकस्यपितादर्शेमहालयेवामृतस्तत्रपार्वणै
कोद्दिष्टयोर्विकल्पः ॥ वस्तुतस्तुसर्वेषांपार्वणैकोद्दिष्टयोर्व्रीहियववद्विकल्पः ॥
सचदेशाचाराद्व्यवस्थितइतिसर्वनिबंधसिद्धांतः ( अतएवपृथ्वीचंद्रोदयेवृद्धप
राशरः) मातापित्रोःपृथक्कार्यमेकोद्दिष्टंमृतेहनीत्युक्त्वाह ॥ देशधर्मंसमाश्रित्य
वंशधर्मंतथापरे। सूरयःश्राद्धमिच्छंतिपार्वणंचक्षयाहन्यपीति ॥ तच्चकेवलपितृ
णांनसपत्नीकानामितिहेमाद्रिः ॥ अत्रमातासहानकार्याः ॥ कर्षूसमन्वितंभु
क्त्वातथाद्यंश्राद्धषोडशंप्रत्याब्दिकंचशेषेषुपिंडाः स्युःषडितिस्थितिरितिका
त्यायनोक्तेः ॥ कर्षूसमन्वितंसपिंडनंयैरेकोद्दिष्टंक्रियतेतेषामपिक्वचित्पा
र्वणमेवेतिशंखोक्तेः ( एवंसंन्यासिनोपि ) एकोद्दिष्टंयतेर्नास्तित्रिदंडग्रहणा
दिह । सपिंडीकरणाभावात्पार्वणंतस्यसर्वदेतिप्रचेतसोक्तेः(वायवीये) संन्या
सिनोप्याब्दिकादिपुत्रः कुर्याद्यथाविधि । महालयेतुयच्छ्राद्धंद्वादश्यांपार्वणं
हितत् (पृथ्वीचंद्रोदयेवृद्धपराशरः) संग्रामेसंस्थितानांचप्रेतपक्षेशशिक्षये ॥
तेषांपार्वणमेवोक्तंक्षयाहेपिचसत्तमैः ॥ चंद्रक्षयानाशकसंयुगेषुयःप्रेतपक्षेमृत
वान्नसपिंडः । सपिंडितानामपिचाब्दिकानिभवंतितेषामिहपार्वणानि (तथा)
भ्रातुर्ज्येष्ठस्यकुर्वीतज्येष्ठोभ्रातानुजस्यच । दैवहीनंतुतत्कुर्यादितिधर्मविदब्रवीत् ॥
दैवहीनमेकोद्दिष्टम् ॥ ज्येष्ठोभ्रातानाद्यगर्भजः(तथाचतत्रैवशातातपः)अनाद्यगर्भ
ज्येष्ठोपिभ्रातासद्भिर्निगद्यते । कृतेसपिंडनात्तस्यनैवपार्वणमाचरेत् ॥ आद्यग
र्भेतुपार्वणमेकोद्दिष्टंवेत्यर्थः (मातुस्तुहेमाद्रौकात्यायनः) प्रत्यब्दंयोयथाकुर्या
त्पुत्रःपित्रेसदाद्विजः । तथैवमातुःकर्तव्यंपार्वणंचान्यदेववा (यत्तुतेनैवोक्तं) स
पिंडीकरणादूर्ध्वंपित्रोरेवहिपार्वणम् । पितृव्यभ्रातृमातॄणामेकोद्दिष्टंसदैवत्वि
तितत्सापत्नमातृपरम् (यत्तुवृद्धपराशरः) अपुत्रस्यपितृव्यस्यतत्पुत्रोभ्रातृजोभवे
त् ॥ सएवास्यतुकुर्वीतपिंडदानादिकांक्रियाम् ॥ पार्वणंतेनकार्यंस्यात्पुत्रवद्भ्रातृ
जेनतु । पितृस्थानेतुतंकृत्वाशेषंपूर्ववदुचरेदितितत्पितृवद्देशाचारवद्व्यवस्थित

मितिपृथ्वीचंद्रः (श्राद्धदीपकलिकायांचतुर्विंशतिमतेतु) पितृव्यभ्रातृमातृणांज्येष्ठानांपार्वणंभवेत् । एकोद्दिष्टंकनिष्ठानांदंपत्योःपार्वणंमिथः ॥ अपुत्रस्य पितृव्यस्यभ्रातुश्चैवाग्रजन्मनः । मातामहस्यतत्पत्न्याःश्राद्धंपार्वणवद्भवेदित्युक्तंतत्पत्न्याःकर्तृत्वेपिपार्वणमेव ॥ सर्वाभावेस्वयंपत्न्याः स्वभर्तॄणाममंत्रकम् । सपिंडीकरणंकुर्युस्ततःपार्वणमेवचेतिलौगाक्षिस्मृतेः ॥ ततःपत्न्यपिकुर्वीतसापिंड्यंपार्वणंतथेतिसुमंतूक्तेश्चेतिनिर्णयामृतेउक्तम् ॥ अन्येत्वेतत्पाक्षिकपार्वणपरमाहुः ॥ अतएव मनुः श्राद्धंतुयानारीमोहात्पार्वणमाचरेत् । नतेनतृप्यतेभर्ताकृत्वातुनरकंव्रजेदितिवचनंक्षयाहेपाक्षिकैकोद्दिष्टप्रशंसार्थम् ॥ नपार्वणनिषेधार्थमित्युक्तंत्रिस्थलीसेतौभट्टचरणैः ॥ स्वभर्तृप्रभृतित्रिभ्यइत्यनेन विरोधाच्च (अपुत्राणांचाहहेमाद्रावापस्तंबः) अपुत्रायेमृताःकेचित्स्त्रियोवापुरुषाश्चये । तेषामपिचदेयंस्यादेकोद्दिष्टंनपार्वणम् ॥ मित्रबंधुसपिंडेभ्यःस्त्रीकुमारिभ्यएवच । दद्याद्वैमासिकंश्राद्धंसांवत्सरमतोऽन्यथा ॥ पारिजातेचअन्यथापार्वणमित्युक्त्वासर्वत्रपार्वणमित्युक्तम् । एकोद्दिष्टवाक्यानितुतीर्थमहालयपराणीत्युक्तम् (पृथ्वीचन्द्रोदयेवृद्धगार्ग्यः) मातुःसहोदरायाश्चपितुःसहभवायाश्च ॥ तयोश्चनैवकुर्वीतपार्वणंपिंडनादृते (प्रचेताः) सपिंडीकरणादूर्ध्वमेकोद्दिष्टंविधीयते । अपुत्राणांचसर्वेषामपत्नीनांतथैवच ॥ अपत्नीनांब्रह्मचार्यादीनाम् (मार्कंडेयपुराणे) प्रतिसम्वत्सरंकार्यमेकोद्दिष्टंनरैःस्त्रियाः । मृताहनियथान्यायंनृणांयद्वदिहोदितं ॥ नृणामितिदृष्टांताद्गोविप्रहतपाखंड्यादीनांसपिंडनाभावेपिसांवत्सरमेकोद्दिष्टंकार्यमेवेतिशूलपाणिः (अत्रिवृद्धवसिष्ठौ) सपिंडीकरणादूर्ध्वंयत्रयत्रप्रदीयते । भ्रात्रेभगिन्यैपुत्रायस्वामिनेमातुलायच । पितृव्यगुरवेश्राद्धमेकोद्दिष्टंनपार्वणम् ( यत्तु जातकर्णः)पितृव्यभ्रातृमातृणामपुत्राणांतथैवच । मातामहस्यासुतस्यश्राद्धादिपितृवद्भवेदितितदावश्यकत्वार्थंनतुपार्वणार्थमितिहेमाद्रिः ॥ युक्तंत्वेवम् ॥ मातुःपितरमारभ्यत्रयोमातामहाःस्मृताः । तेषांतुपितृवच्छ्राद्धंकुर्युर्दुहितृसूनवइतिपुलस्त्योक्तेर्मातामहस्यपार्वणमेव ॥ तत्साहचर्यात्पितृव्यादीनांतथा ॥ पितृव्यभ्रातृमातृणा

मेकोद्दिष्टंचपार्वणमितिक्षयाहोक्तोपक्रमेपुलस्त्योक्तेश्चविकल्पः ( केचित्त्वा पस्तंबादिवाक्यानि ) व्युत्क्रमाच्चप्रमीतानांनैवकार्यासपिंडतेत्यस्यपित्नव्यादि परत्वादकृतसपिंडनपित्नव्यादिपराणीत्याहुः ॥ मातासपत्नमाता ॥ एकोद्दिष्टं तुकानिष्ठपरमिति ॥ पृथ्वीचंद्रोदयेप्येवम् ॥ विशेषस्त्वधिकारिनिर्णयेप्रागु क्तः ॥ केचित्पुत्रांतराभावेपिपितामहवार्षिकमप्यावश्यकम् ॥ पुत्राभावेच तत्पुत्राःपत्नीमातातथापिता । वित्ताभावेपिसच्छिष्यः कुर्यात्तस्यौर्ध्वदैहिक मितिमार्कंडेयपुराणादित्याहुस्तन्न ॥ पौत्रेणौकादशाहादिकर्तव्यंश्राद्धषोडश मितिकातीयेविशेषोक्तेः ( अथक्षयाहद्वैधेनिर्णयः ) तत्रैकोद्दिष्टंमध्याह्नेका र्यम् ॥ मध्याह्नश्चपंचधाविभक्तदिनतृतीयभागइतिमाधवः ॥ आमश्राद्धंतुपूर्वा ह्णएकोद्दिष्टंतुमध्यमे । पार्वणंचापराह्णेतु प्रातर्वृद्धिनिमित्तकमितिहारीतो क्तौप्रातःशब्दसाहचर्यात् ॥ तत्रापिकुतुपादिमुहूर्तद्वितयेज्ञेयम् ॥ प्रारभ्यकुत पेश्राद्धंकुर्यादारौहिणंबुधः । विधिज्ञोविधिमास्थायरौहिणंतुनलंघयेदितिगौ तमोक्तेरेतत्परत्वात् ॥ रौहिणोनवमोमुहूर्तः ॥ मैथिलाःश्राद्धकौमुदीचैवम् ॥ (अन्यथा) ऊर्ध्वंमुहूर्तात्कुतुपाद्यन्मुहूर्तचतुष्टयम् । मुहूर्तपंचकंह्येतत्स्वधाभव नमिष्यतइत्यादिविरोधात् ( दीपिकापि ) एकोद्दिष्टमुपक्रमेत्कुतपइति ( मा धवीयेव्यासोपि) कुतुपप्रथमेभागेएकोद्दिष्टमुपक्रमे । आवर्तनसमीपेवातत्रैवनि यतात्मवान् ॥ पृथ्वीचंद्रोदयेप्येवम् ॥ तेनकुतुपादिरौहिणांतोमुख्यःकालः ॥ दिनद्वयेतद्व्याप्तौसमव्याप्तौचपूर्वा ॥ विषमव्याप्तावाधिक्येननिर्णयः ॥ अव्या प्तौपूर्वैव ॥ परविद्धायानिषेधात् ॥ साचपूर्वदिनेरौहिणलंघनापत्तेःपरैवेतिगौ डाः ॥ शुक्लकृष्णावशात्खर्वदर्पाद्यैर्वाव्यवस्थेत्यन्ये ॥ तन्न ॥ परविद्धानिषेध प्राबल्यात् ॥ अत्रमूलंकालमाधवीयेज्ञेयम् ॥ पार्वणंत्वपराह्णेकार्यंपूर्वोक्तवच नात् ॥ मध्याह्नव्यापिनीयास्यात्सैकोद्दिष्टेतिथिर्भवेत् । अपराह्णव्यापिनीया पार्वणेसातिथिर्भवेदितिपृथ्वीचंद्रोदयेवृद्धगौतमोक्तेश्च ॥ पूर्वेद्युरेवपरेद्युरेव वापराह्णव्याप्तौसैवग्राह्या ॥ दिनद्वयेतद्व्याप्तौतदस्पर्शे ऽप्यातःसमव्याप्तौवपूर्वै व ॥ विषमव्याप्तौत्वधिकाग्राह्या ॥ द्वयपराह्णव्यापिनीस्यादाब्दिकस्ययदा

तिथिः । महतीयत्रतद्विद्धांप्रशंसंतिमहर्षयइतिमरीचिस्मृतेः ॥ दर्शंचपूर्णमासंचपितुःसांवत्सरंदिनम् ॥ पूर्वविद्धामकुर्वाणोनरकंप्रतिपद्यतइत्यपरार्केनारदोक्तेः ॥ द्व्यहेप्यव्यापिनीचेत्स्यान्मृताहस्ययदातिथिः । पूर्वविद्धाप्रकर्तव्यात्रिमुहूर्तभवेद्यदीतिसुमंतूक्तेः ॥ पूर्वस्यांनिर्वपेत्पिंडानित्यांगिरसभाषितमितिहेमाद्रौपाठः ( तत्रैवद्वमनुः ) नद्व्यहव्यापिनीचेत्स्यान्मृताहस्यचयातिथिः । पूर्वविद्धैवकर्तव्यात्रिमुहूर्ताचयाभवेत् ॥ मदनरत्नेप्येवम् (यत्तुकार्ष्णाजिनिव्यासौ ) अह्नोस्तमयवेलायांकलामात्रायदातिथिः । सैवप्रत्याब्दिकेज्ञेयानापरापुत्रहानिदेतित्रिमुहूर्तस्तुतिः ॥ पूर्वेद्युःसायंत्रिमुहूर्तभावेतुपरैव ॥ त्रिमुहूर्तानचेत्तत्रग्राह्यापरैवकुतुर्पाद्दसेतिकालादर्शेगोभिलोक्तेः ॥ कालादर्शेपि । प्रत्याब्दिकेप्येवमेवतिथिर्ग्राह्यापराह्णिकी । उभयत्रतथात्वेतुमहत्त्वेनविनिर्णयः ॥ समत्वेपूर्वविद्धैवद्यतथात्वेपिसायदि । त्रिमुहूर्तभवेत्सायंसर्वेष्टोयंविनिर्णयः (अन्यत्रापि) सायंतन्यपरत्रचेन्मृतातिथिः सैवाब्दिकेमासिके ग्राह्यासाब्द्यपराह्णयोर्यदितदायत्राधिकासामता । तुल्याचेदुभयापराह्णसमयेपूर्वानचेत्तुद्वयेपूर्वैवत्रिमुहूर्तगास्तसमयेनोचेत्परैवोचिता ( माधवपृथ्वीचंद्रौतु ) दिनद्वयेपराह्णव्याप्तौअंशतःसमव्याप्तौचक्षयेपूर्वावृद्धौपरा॥ खर्वदर्पौपरौपूज्याविदयुक्तेः ॥ अपराह्णद्वयव्यापिन्यतीतस्यचयातिथिः । क्षयेपूर्वाचकर्तव्यावृद्धौकार्यातथोत्तरेतिबौधायनोक्तेः ॥ क्षयाहस्यतिथिर्यातुअपराह्णद्वयेयदि । पूर्वाक्षयेतुकर्तव्यावृद्धौकार्यातथोत्तरेतिवृद्धनारदीयाच्चेत्याहुः ॥ वृद्धिक्षयौचात्रपरतिथेर्नतुग्राह्यतिथेः ॥ तस्याःक्षयेपराह्णद्वयव्याप्तेरसंभवात (तदाहमाधवः) नग्राह्यतिथिगौवृद्धिक्षयावूर्ध्वतिथेस्तुताविति (यत्तुपृथ्वीचंद्रः) पूर्वोक्तवचनेषुयत्रसायाह्नास्तमययोगिनीतिथिरुक्तातत्रापराह्णव्यापिनीज्ञेया ॥ सायाह्नस्त्रिमुहूर्तःस्यात्तत्रश्राद्धंनकारयेदितिमात्स्यादौसायाह्नेनिषेधात् ॥ यच्चत्रिमुहूर्तादिग्रहणंतच्छाद्वाहापराह्णरूपत्रिमुहूर्तपरमित्याह ॥ तद्वेमाद्रिमदनरत्नकालादर्शादिग्रन्थविरोधाल्लक्षणापत्तेश्चर्चिन्त्यम् ॥ तस्मात्पूर्वोक्तमेवसाधु॥ यदाविघ्नवशाद्दिनेसांवत्सरश्राद्धंनकृतंतदारात्रावपिकार्यम् ॥ मृताहंसमतिक्रम्य चण्डालेच

भिजायतइतिमरीचिनामृताहातिक्रमेदोषोक्तेः ॥ नचनक्तंश्राद्धंकुर्वीतारब्धेवा भोजनसमापनमित्यापस्तंबेनगौणाकालोक्तेश्चेतिमाधवः ॥ आरब्धेश्राद्धेविघ्न वशाद्रात्रिभागोपातेभोजनसमाप्त्यंतेरात्रौकार्यम् ॥ शेषसमाप्तिःपरदिनएवेति हरदत्तः ॥ ग्रहणादिनेवार्षिकप्राप्तौतद्दिनएवान्नेनामेनहेम्नावाकुर्यात् ॥ नोत्तर दिनेइत्युक्तंप्राक्ग्रहणनिर्णये ॥ तच्चप्रथमाब्दिकंत्रयोदशेमलमासेकार्यम् ॥ अ न्यथान ॥ प्रत्यब्दंद्वादशेमासिकार्यापिण्डक्रियाबुधैः ॥ क्वचित्त्रयोदशेपिस्या दाद्यंमुक्त्वातुवत्सरमितिलघुहारीतोक्तेः ॥ इदमन्त्याधिकमासपरम् ॥ द्वादशेत्र योदशेवातीतइत्यर्थः ॥ तेनयत्रद्वादशमासिकंशुद्धमासेभवति तत्रत्रयोदशेधिके एवाब्दिकंकार्यम् ॥ यत्राधिकमध्येद्वादशमासिकंतत्रतस्यद्विरावृत्तिंकृत्वा चतु र्दशेशुद्धेएवप्रथमाब्दिकमितिमाधवीये ॥ हेमाद्रौचैवम् ॥ द्वितीयाब्दिकन्तुशु द्धमासेएवनाधिकेनाप्युभयोः ॥ मलमासमृतानांतुयदासएवाधिकःस्यात्तदात त्रैवकार्यमन्यथाशुद्धएवेतिप्रागुक्तम् ॥ दर्शोवार्षिकंचेत्तदापूर्ववार्षिकंकृत्वाततः पिण्डपितृयज्ञोदर्शश्राद्धञ्चेति निर्णयदीपिकामतउक्तः (स्मृतिसारेपि) दर्शक्षया हेसम्प्राप्ते कथंकुर्वीतयाज्ञिकाः ॥ आदौक्षयाहंनिर्वर्त्य पश्चाद्दर्शोविधीयत इति ॥ युक्तंत्वेवम् ॥ तद्वचनेमूलाभावात् ॥ पिण्डयज्ञंततःकुर्यात्ततोन्वाहार्य्य कम्बुध इति दर्शश्राद्धेपिण्डपितृ यज्ञानंतर्यात्तस्याब्दिकेप्यति देशात्प्राप्तेः ॥ पितृयज्ञानंतरंवार्षिकंततोदर्शश्राद्धमिति ॥ व्यतिषंगस्तुनभवत्येव ॥ तस्यार्थि कत्वात् (कालादर्शोपि) निमित्तानियतत्वाच्चात्रपूर्वानुष्ठानकारणमिति ॥ सर्वा नप्रत्येकरूप्याभावात् क्षयाहनिमित्तस्य । नियतत्वम् ॥ देवजानीयेप्येवम् ॥ एवंमासिकादिष्वपिज्ञेयम् ॥ प्रत्यब्दंयोयथाकुर्यात्सतान्यपीतिसर्वातिदेशात् (मृताहेवृषोत्सर्गउक्तोहेमाद्रौविष्णुधर्मे) अग्नौहितयेच्चैव मृताहेबांधवस्यच । उत्सृजेन्नीलवृषभं कौमुद्याःसमुपागमे ॥ कौमुदीकार्तिकी (अथशुद्धिश्राद्धम् । दिवोदासीये ) सपिण्डीकरणादूर्ध्वं यावदब्दत्रयंभवेत् । तावदेवनभोक्तव्यं स पेहनिकदाचन ॥ वर्षान्तर्सपिण्डनेप्येतत्तुल्यम् ॥ मृताहनितुसम्प्राप्ते यावदब्द चतुष्टयम् । बहिःश्राद्धम्प्रकुर्वीत नकुर्याच्छ्राद्धभोजनम् ॥ प्रथमेस्थीनिमज्जाच

द्वितीयेमांसभक्षणम । तृतीयेरुधिरंप्रोक्तं श्राद्धंशुद्धंचतुर्थकमिति श्राद्धकारि
कोक्तेः ॥ शुद्धंकिंचिदितिज्ञेयम (स्मृत्यन्तरे) सप्तत्रिंशच्चयेमासान श्राद्धेभुंक्ते
तमोहतः । सपंक्तिदूषितःपापः प्रेतांशीचभवेत्तुसः ॥ तत्रप्रथमेब्देवर्षांतसपिंडन
पक्षेमृताहात्पूर्वेह्निसपिण्डनमब्दपूर्तिश्राद्धञ्चकृत्वा परेद्युर्वार्षिकंकुर्य्यादिति
स्मृत्यर्थसारे उक्तम ॥ हेमाद्रिस्तुमृताहेसपिण्डीकरणेनैववार्षिकसिद्धिः ॥ पूर्णे
संवत्सरेपिण्डः षोडशःपरिकीर्तितः । तेनैवचसपिण्डत्वं तेनैवाब्दिकमिष्यत
इतिवचनादित्याह ॥ इदमेवयुक्तम (अथक्षयाहाज्ञानेमरीचिः) श्राद्धविघ्नेसमु
त्पन्ने अविज्ञातमृतेहनि । एकादश्यान्तुकर्तव्यं कृष्णपक्षेविशेषत इत्युक्तेः
( शुक्लैकादश्यामपि वृहस्पतिः ) नज्ञायतेमृताहश्चेत प्रमीतेप्रोषितेसति ॥
मासश्चेतप्रतिविज्ञातस्तद्दर्शःस्यादथाब्दिकम ॥ दिनमासौनविज्ञातौ मरणस्य
यदापुनः ।·प्रस्थानमासदिवसौग्राह्यौपूर्वोक्तयादिशा (मदनरत्नेभविष्ये) मृता
हंयोनजानाति मानवोविनतात्मज । तेनकार्यममावास्यांश्राद्धसांवत्सरंसदा ॥
दिनमेवतुजानाति मासंनैवतुयोनरः । मार्गशीर्षेतथाभाद्रे माघेवात्तद्दिनम्भवेत
(निर्णयामृतेतु)यदामासोनविज्ञातोविज्ञातंदिनमेवतु । तदाचाषाढकेमासिमाघे
वातद्दिनंभवेदितिवृहस्पतिस्मृतेराषाढोप्युक्तः (कालादर्शेपि) मासाज्ञाने दिन
ज्ञानेकार्यमाषाढमाघयोरित्युक्तम (हेमाद्रौप्रभासखण्डे) मृताहंयोनजानातिमा
संवापिकथंचन । तेनकार्यममावास्यांश्राद्धंमाघेथमार्गके ( भविष्ये ) मृतवा
र्ताश्रुतेर्ग्राह्यौतौपूर्वोक्तक्रमेणतु । पूर्वोक्तेतिप्रस्थानदिनाज्ञानेमासज्ञानेचतद्दर्शे ॥
मासाज्ञानेदिनज्ञानेचमार्गादावितिवच्छ्रवणादिनेपिज्ञेयमित्यर्थः ॥ श्रवणदिने
मासाज्ञानेमाघमार्गदर्शे कार्यंपूर्वोक्तप्रभासखण्डात ॥ अतोत्रलोपइतिशूल
पाणयुक्तंहेयम ( तिथितत्त्वेयमः ) गतस्यनभवेद्वार्तायावद्द्वादशवार्षिकी ॥
प्रेतावधारणंतस्यकर्तव्यंसुतबांधवैः ॥ यन्मासियदहर्यातस्तन्मासितदहःक्रि
या । दिनाज्ञानंकुहस्तस्यआषाढस्याथवाकुहूः ( अथश्राद्धविघ्नेनिर्णयः )
तत्रविप्रस्यनिमन्त्रणोत्तरंसूतकेमृतकेचाशौचाभावः ।' निमंत्रितेषुविप्रेषुप्रार
ब्धेश्राद्धकर्मणि । निमन्त्रणाद्धिविप्रस्यस्वाध्यायादिरतस्यच ॥ देहेपितृषुतिष्ठ

त्युनाशौचंविद्यतेक्वचिदितिब्राह्मोक्तेः ( क्रतुस्तुविष्णुराह ) व्रतयज्ञविवाहेषु श्राद्धेहोमेऽर्चनेजपे । आरब्धेसूतकंनस्यादनारब्धेतुसूतकम् ॥ श्राद्धेप्रारंभस्तत्रै वोक्तः ॥ प्रारम्भोवरणंयज्ञेसंकल्पोव्रतसत्रयोः । नांदीमुखंविवाहादौश्राद्धे पा कपरिक्रियेति ( माधवीयेब्राह्मेपि ) श्राद्धादौपितृयज्ञेचकन्यादानेचनोभवेत् ( मिताक्षरायांस्मृत्यंतरे । सद्यःशौचंप्रकृत्य ) यज्ञेसम्भृतसम्भारेविवाहेश्राद्ध कर्मणीति ॥ तिथितत्त्वादिगौडग्रंथास्तुनिमन्त्रणोत्तरंकर्तुर्भोक्तुश्चनाशौचम् ॥ निमन्त्रणोत्तरंश्राद्धेप्रारम्भःस्यादितिस्मृतिरितिविष्णूक्तेः ॥ यत्तुश्राद्धे पाक परिक्रियेतितद्दर्शश्राद्धविषयमित्याहुः ॥ दातृगृहेमरणादौब्राह्मेउक्तम् ॥ भोज नार्द्धेतुसंभुक्तेविप्रैर्दातुर्विपद्यते ॥ गृहेइतिशेषः ॥ यदाकश्चित्तदोच्छिष्टंशेषंत्य क्त्वासमाहितः । आचम्यपरकीयेनजलेनशुचयोद्विजाइति ॥ अस्यश्राद्धविष यत्वंहेमाद्रिणोक्तम् पृथ्वीचन्द्रोदयेप्येवम् ॥ ममतुप्रतिभातीदंविवाहादिविष यम् ॥ नतुश्राद्धविषयंतत्पदाभावात् (विवाहोत्सवयज्ञेष्वित्युपक्रम्य) भुंजानेषु तुविप्रेषु त्वन्तरामृतसूतके । अन्यगेहोदकाचान्ताः सर्वेतेशुचयःस्मृताइतिषट् त्रिंशन्मतैकवाक्यात् ॥ निमंत्रितेषुविप्रेषु प्रारब्धेश्राद्धकर्मणीतिपूर्वोक्तविरो धाच ॥ श्राद्धे तुयद्यपिविष्णुनापाकोत्तरमाशौचाभावउक्तस्तथापिकर्तुरेवसः ॥ भोक्तुर्दोषोस्त्येव ॥ अपिदातृगृहीत्रोश्चसूतकेमृतकेतथा । अविज्ञानेनदोषः स्याच्छ्राद्धादिषुकथंचन ॥ विज्ञानेभोक्तुरेवस्यात्प्रायश्चित्तादिकंक्रमादिति माधवीयब्राह्मोक्तेः ॥ आदिशब्देनाशौचमुच्यते ( तचाहविष्णुः ) ब्राह्मणा दीनामाशौचेयःसकृदेवान्नमश्नातितस्यतावदाशौचम् ॥ यावत्तेषामाशौचव्यप गमेप्रायश्चित्तंकुर्यादिति ( यत्तु ) देहेपितृषुतिष्ठत्सुनाशौचंविद्यतेक्वचिदिति ब्राह्मन्तत्श्राद्धकालीनस्यनिषेधकम् ॥ नतूत्तरकालीनस्य ॥ शुद्धदीपस्तुनि मन्त्रितेष्वित्यामश्राद्धपरम् ॥ भोजनार्द्धेष्वित्यादित्वन्नश्राद्धपरमित्याह (प्राय श्चित्तंत्वाहमार्कंडेयः ) भुक्त्वातुब्राह्मणाशौचेचरेत्सांतपनंद्विजः ॥ एतत्का मतः( अभ्यासेशंखः ) ब्राह्मणस्यतथाभुक्त्वामासमेकंव्रतीभवेदिति (अज्ञानात्तु छागलेयः ) एकाहंचत्र्यहंपंचसप्तरात्रमभोजनम् । ततःशुचिर्भवेद्विप्रःपंचगव्यं

पिबेन्नरइतिवर्णक्रमेणेदम् ॥ अभ्यासेतुद्वैगुण्यमित्यादिमिताक्षरामाधवीयादौ
ज्ञेयम् ॥ मिताक्षरामाधवादौतुश्राद्धेकर्तुर्भोक्तुश्चसर्वथादोषाभावउक्तः ( आ
शौचमध्येश्राद्धदिनप्राप्तौतुमाधवीयेकालादर्शेचऋष्यशृङ्गः ) देयेपितृणांश्रा
द्धेतुआशौचंजायतेयदा । आशौचेतुव्यतिक्रान्तेतेभ्यःश्राद्धंप्रदीयते ( श्राद्ध
चिन्तामणौज्योतिषे ) प्रतिसांवत्सरंश्राद्धमाशौचात्पतितंचयत् । मलमासेपि
तत्कार्यमितिभागुरिभाषितम् ॥ आशौचान्त्यदिनत्वेननिमित्तत्वादित्यर्थः ॥
एतन्मासिकादिपरंनदार्शिकादौ अतएवतुदर्शनभाष्ये अपरपक्षेपिन्याणीति
नियमात्कृष्णपक्षश्राद्धलोपेप्रायश्चित्तमेव ॥ नतुगौणकालेकरणंचोपवा
सः ॥ वेदोदितानांनित्यानांकर्मणांसमतिक्रमे । स्नातकव्रतलोपेचप्रायश्चित्त
मभोजनमितिमनूक्तेरित्युक्तम् ॥ आशौचेतुप्रायश्चित्तमपिन ॥ मुख्यकालेअन
धिकारात् ( आशौचान्तेसम्भवेत्तुव्यासः ) श्राद्धविघ्नेसमुत्पन्नेत्वन्तरामृतसूत
के । अमावास्यांप्रकुर्वीतशुद्धावेकेमनीषिणः ( हेमाद्रौषट्त्रिंशन्मतेपि ) मा
सिकेचाब्दिकेत्वह्निसंप्राप्तेमृतसूतके । वदन्तिशुद्धौतत्कार्यं दर्शेचापिविचक्ष
णाः ( गोभिलः ) देयेप्रत्याब्दिकेश्राद्धे अन्तरामृतसूतके । आशौचानंतरं
कुर्यात्तन्मासेंदुक्षयेतथा (मरीचिः) श्राद्धविघ्नेसमुत्पन्नेप्यविज्ञातेमृतेहनि ।
एकादश्यांतुकर्तव्यंकृष्णपक्षेविशेषतः ॥विशेषतइत्युक्तेःशुक्लैकादश्यामपि॥
आशौचेतरविघ्नेएतदितिमाधवपृथ्वीचंद्रौ ( यत्त्वत्रिः ) तदहश्चेत्प्रदुष्येतके
नचित्सूतकादिना।सूतकानंतरंकुर्यात्पुनस्तदहरेवचेतितत्पूर्वकालाभावेज्ञेयम्॥
एतदाब्दिकेतरश्राद्धपरम् (यच्चदेवलः) एकोद्दिष्टेतुसंप्राप्तेयदिविघ्नःप्रजायते ।
मासेन्यस्मिंस्तिथौतस्मिन्श्राद्धंकुर्यात्प्रयत्नतइति ॥ तदपिमासिकपरमितिम
दनरत्नेहेमाद्रौच ॥ इदमपिपूर्वकालासंभवेव्याध्यादौविस्मरणेचैवंज्ञेयम् (अथ
भार्यारजोदर्शने ) तत्रदार्शिकमामेनकार्यम् । श्राद्धविघ्नेद्विजातीनामामश्राद्धं
प्रकीर्तितम् ॥ अमावास्यादिनियतंमाससंवत्सरादृतेइतिहेमाद्रौहारीतोक्तेः ॥
(व्याघ्रपादोपि ) आर्तवेदेशकालानांविप्लवेसमुपस्थिते । आमश्राद्धंद्विजैःका
र्यंशूद्रःकुर्यात्सदैवहीति (दीपिकापि) दर्शेतुभार्यार्तवेत्यामश्राद्धंविधिंप्रवासिवि

धुराद्याश्चाचरेयुर्द्विजाः ॥ वस्तुतस्तु पाकाभावे द्विजातीनामामश्राद्धं विधीयतइ तिसुमंतूक्तेः ॥ पाककर्तृंतरसत्वे ऽन्नेनान्यथामेनेत्युक्तम् ॥ मासिकानि सपिंडानि अमावास्या तथाब्दिकम् । अन्नेनैव तु कर्तव्यं यस्य भार्या रजस्वलेति कालिकायाव चनाच ॥ कालादर्शे तु स्त्रिया रजोदर्शने दर्शश्राद्धं पंचमेहनीति पक्षांतरमुक्तम् ॥ पारिजातेप्येवम् ॥ एवं महालययुगादावपि ॥ आब्दिकं तु रजोदर्शने पितृदिने एव कार्यम् ॥ पुत्रवत्स्त्र्यपि दारेषु विदेशस्थोप्यनग्निकः ॥ अन्नेनैवाब्दिकं कुर्याद्धेम्ना वामेन न क्वचिदिति माधवीये लौगाक्षिस्मृतेः ( मरीचिरपि ) अनग्निकः प्रवासी च यस्य भार्या रजस्वला । आमश्राद्धं प्रकुर्वीत न तत्कुर्यान्मृतेहनि ( काष्णार्जिनिः ) आपन्नोप्याब्दिकं नैव कुर्यादामेन कुत्रचित् । अन्नेन तदमायां वाक्षयो वाहरिवासरे ( प्रयोगपारिजाते ) रजस्वलायां भार्यायां स्वयाहं यः परित्यजेत् । स वै नरकमाप्नोति यावदाभूतसंप्लवम् ॥ मासिकानि सपिण्डं च अमावास्या तथाब्दिकम् । अन्नेनैव तु कर्तव्यं यस्य भार्या रजस्वला ( देवयाज्ञिकनिबन्धेपि ) भर्तुः श्राद्धं पंचमेह्नि कुर्याद्भार्या रजस्वला ॥ पुत्रः पित्रोः प्रकुर्वीत मृताहनि शुचिर्यतः ( कालादर्शेपि ) रजस्वलां गतेनाग्निर्निर्विदेशस्थोथवाब्दिके ॥ दर्शादाविव नामेनत्वन्नेन श्राद्धमाचरेत् ( अन्यत्रापि ) विदेशको वा विगताग्निको वा रजस्वलायामपि धर्मपत्न्यां । श्राद्धं मृताहे विदधीत पाकैर्नामेन हेम्ना न तु पंचमेह्नि ॥ एवं मासिकेपि ॥ ( यत्तु मरीचिः ) आब्दिके समनुप्राप्ते यस्य भार्या रजस्वला । पंचमे ऽहनि तच्छ्राद्धं न तत्कुर्यान्मृतेहनि ( माधवीये ) श्राद्धं तदा न कर्तव्यं कर्तव्यं पंचमेहनीत्युत्तरार्द्धं तदपुत्रकर्तृकश्राद्धविषयम् ॥ अपुत्रा तु यदा भार्या सम्प्राप्ते भर्तुराब्दिके । रजस्वला भवेत्सा तु कुर्यात्तत्पंचमेहनीति ॥ श्लोकगौतमोक्तेः ॥ दैवे कर्मणि पित्र्ये वा पंचमेहनि शुद्ध्यतीति प्रभासखण्डाच ॥ नन्वशुचित्वादेव तत्र पंचमेहन्यार्थात् श्राद्धप्राप्तमिति वचनं व्यर्थम् ॥ नैवम् ॥ गर्भिणी सूतिकादिश्च कुमारी वाप्यरोगिणी । यदा शुद्धा तदान्येन कारयेत्प्रयतास्स्वयमिति हेमाद्रौ भविष्योक्तेः ॥ अनुपनीतस्त्री शूद्रादेश्च श्राद्धमृत्विजा वा कारयेयुः ॥ स्वयं वा ऽमंत्रकं कुर्युरिति स्मृत्यर्थसाराच्चान्यद्वाराकरणनिवृत्त्यर्थत्वात्तस्यत्वदुक्त दिशा आशौचानंतरमश्राद्ध

कर्तव्यताऽवेदकवाक्यवैयर्थ्याच्च ॥ अतःप्रागुक्तमरीच्युक्तेःपत्नीपंचमेऽहनीतियु
क्तम् (यत्तु) सप्ताहात्पितृदेवानांभवेद्योग्याव्रतार्चनेइतितद्रजोनिवृत्तिपरमिति
हेमाद्रिभिन्नसर्वनिबन्धसिद्धांतः हेमाद्रिस्तुश्राद्धादौ स्त्रियासहैवाधिकारात्तस्यां
रजोदुष्टायांतन्निवृत्तेरेकभार्येणपंचमेऽहनिकार्यम् ॥प्रागुक्तमरीच्युक्तेः॥ भार्यां
तरसत्वेतुपृथग्वस्त्वपीतिवचनात्तद्दिनएवेत्याह (दीपिकापि ) भार्यर्तौसतिपं
चमेचदिवसेस्याद्दार्षिकंमासिकंपक्वान्नैर्बहुभार्यकस्त्वधिकृतेपत्न्यंतरेत्तिर्वति ॥
कुर्यात्तद्दितयं स्वमुख्यदिवसेइतितच्चिंत्यम् ॥ सहाधिकारःसहत्वश्रुत्यावास्क
फलभाक्त्वेनवापाककर्तृत्वेनवा ॥ नाद्यः । तदभावात् । पाणिग्रहणाद्धिसह
त्वंकर्मस्वित्यस्याग्निसाध्यकर्मविषयत्वात् ॥ आब्दिकस्यचनिरग्नेरपिपाकेनै
वोक्तेः ॥ स्मार्ताग्निसाध्यत्वानियमात्तामपरुध्येतिपूर्वोक्तवचनासत्वाच्च ॥ क
थंचभार्यांतरसत्वेधिकारः ॥ ज्येष्ठयानविनेतरेति नियमात् ॥ ज्येष्ठापरत्वेच
तेनैवसिद्धे वचनवैयर्थ्यात् ( नद्वितीयः ) अविभक्तभ्रातृष्वेकस्याऽशुचित्वे
न्यस्याधिकारापत्तेः ( नतृतीयः ) प्रवासनिर्देशसूतिका रोगिण्यादिष्वप्य
करणापत्तेः ॥ आरभेतनवैःपात्रैरन्नारम्भंचबांधवैरिति देवलोक्तावात्मनेप
दात्स्वस्यबांधवानांच पाककर्तृत्वोक्त्याविरोधाच्च ॥ ततस्तानिपपाचाशुसी
ताजनकनंदिनीतिपाद्मादिलिङ्गात्प्राशस्त्यंभार्यापाकस्योच्येत ॥ नतत्कस्या
प्यनियम ॥ तेनैतद्वचनंयुक्त्याद्यभावात् पूर्वोक्तवचोविरोधाच्चयत्किंचिदेव
( यदपि ) श्राद्धीयाहनिसंप्राप्ते यस्यभार्यारजस्वला । श्राद्धंतत्रनकर्तव्यंक
र्तव्यंपंचमेऽहनीतिप्रलोकगौतमपाठेन्यथादर्शितः ॥ माधवीयेचतद्वशात् पक्षांत
रमुक्तम् ॥ तेनापिनाभिप्रेतार्थसिद्धिः ॥ यस्यप्रेतस्येत्यर्थात् ॥ तेनात्रहेमाद्रिर्व
भ्रामेतिबहुवक्तव्येपिनोच्यते (अथान्वारोहणेनिर्णयः । लौगाक्षिः) मृताहनि
समासेन पिण्डनिर्वपणांपृथक् ॥ नवश्राद्धञ्चदम्पत्योरन्वारोहणएवतु ॥ समा
सेनतुतंत्रेणाद्दिपितृकश्राद्धवद्द्वयोरेकःपिण्डोविप्रश्च ॥ पिंडशब्दःश्राद्धपरः ॥
नवश्राद्धम्पृथगितिहेमाद्रिपृथ्वीचन्द्रौ ॥ अत्रमृताहनीत्येकत्वात् ॥ दिनभेदेदि
नैक्येवामृततिथेरेकत्वेकालैक्यंकर्त्रैक्यंपाकैक्यंच ॥ एकचित्याधिरोहेतुतिथि

रेकैवजायते । एकपाकेनपिण्डैक्ये द्वयोर्गृह्णीतनामनी इतिस्मृत्यन्तराच्च ॥ अन्यैरपिपद्धतौभट्टैरप्युदाहृतम् ॥ अन्वारोहेतुनारीणां पत्युश्चैकोदकक्रिया । पिंडदानक्रियातद्वच्छ्राद्धम्प्रत्याब्दिकन्तथा ॥ नवश्राद्धानिसर्वाणि सपिंडीकरणंपृथक् । एकएववृषोत्सर्गो गौरेकातत्रदीयते इति ॥ तिथिभेदेतुवार्षिकंपृथगेव ॥ तथावार्षिकेसमासविधानादन्यत्रसर्वत्रपृथक्त्वेप्राप्तेनवश्राद्धमेवपृथगितिपरिसंख्ययान्यत्रपृथगुक्तेऽर्वापि वार्षिकषोडशश्राद्धतीर्थसपिंडान्वष्टक्यादिषुसमासएवेतिमदनपारिजातनिर्णयामृतादयः ॥ अतःसमासविधिबलात्तज्ज्येष्ठपुत्रस्यकर्तृत्वेसपत्नमातुरन्वारोहणेततपुत्रेसत्यपितद्वार्षिकादिकर्मविभक्तः सापत्नपुत्रएवज्येष्ठः कुर्यान्नौरसः॥वक्ष्यमाणपृथ्वीचंद्रादिमतेतुऔरसएवमातुः पृथक्कुर्यात् ॥ एवंबह्वीष्वपिमातृषुज्ञेयम् ॥ त्रिस्थलीसेतौपितामहचरणैरप्येवमुक्तम् (यत्तुगार्ग्यः) एकचित्यांसमारूढौदंपतीनिधनंगतौ । पृथक्श्राद्धंतयोः कुर्यादोदनंचपृथक्पृथक् ॥ ओदनंपिंडः ॥ तन्नवश्राद्धविषयं (यत्तुभृगुः) या समारोहणंकुर्याद्भर्तुश्चित्यांपतिव्रता । तांमृताहनिसंप्राप्तेपृथक्पिंडेनियोजयेत् ॥ प्रत्यब्दंचनवश्राद्धंयुगपत्तुसमाचरेत् । तद्येयांवार्षिकमेकोद्दिष्टमुक्तंतत्तद्विषयम् ॥ प्रत्यब्दंचमृताहनीत्यन्वयः ॥ नवश्राद्धंयुगपदितिदर्शवर्गद्वयवदेकतंत्रेणापृथगित्यर्थमाहहेमाद्रिः ॥ एतन्मृततिथिभेदविषयमितिपृथ्वीचंद्रनिर्णयामृताद्याः ॥ देवयाज्ञिकोप्येवम् (पराशरमाधवस्तु) गार्ग्यभृग्वादिवचनाल्लौगाक्षिवाक्येसमासेनपाकादितंत्रैक्येनदर्शवर्गद्वयवत्पृथक्श्राद्धंकुर्यात् ॥ नवश्राद्धंचतथेत्याह (पृथ्वीचंद्रचंद्रिकादयस्तु) द्वयोरेकपिंडदानंलौगाक्षिवचनंचापद्विषयम् ॥ पृथक्पिंडदानंतुमुख्यःकल्पः (तदाहवृद्धपराशरः) आरुह्यभर्तुश्चितिमंगनायाःप्राप्नोतिमृत्युंखलुसत्वयुक्ता ॥ एकादशाहेतुतयोर्विधेयंश्राद्धंपृथक्स्वर्गमपेक्ष्यसद्भिः ॥ एकत्वमिच्छंतिमतिप्रहीणा एकादशाहादिषु येनृनार्याः ॥ तेस्वर्गमार्गविनिहत्यकुर्युःस्त्रीसत्वघातान्नरकाधिवासं ॥ भर्त्रासहमृतायातुनाकलोकमभीप्सती । साहंच्छ्राद्धंपृथक्पिंडान्नैकत्वंतुस्मृतंतयोः ॥ पृथगेवाहिकर्तव्यंश्राद्धमेकादशाहिकं । यानिश्राद्धानिसर्वाणितान्युक्तानिपृथक्के

पृथक् ( विश्वादर्शेऽपि ) मातुर्गयाष्टकावृद्धिमृताहेयुमहालये । श्राद्धंकुर्य्यात
पृथग्देवंतत्रैवानुगतावपि ॥ एकचित्यांसमारुह्यमृतयोरेकबर्हिषि । पित्रोः
पिंडान्पृथग्दद्यातपिंडंत्वापस्तुतत्सुतइत्याश्विनस्मृतेरित्याहुः (यत्तुषट्त्रिंशन्मते)
एकत्वंसागताभर्तुःपिंडेगोत्रेचसूतके । नपृथक्पिंडदानंतुतस्मातपत्नीषुविद्यते
इतितद्दर्शादिपरं (चंद्रप्रकाशेऽपि) एकचित्यांसमारूढौदंपतीप्रमितौयदि । पृ
थक्श्राद्धंप्रकुर्वीतपत्युरेवक्षयेऽहनि ॥ मृतानामपिभृत्यानांभार्याणांपतिनासह ।
पूर्वकस्यमृतस्यादौद्वितीयस्यततःपुनः ॥ तंत्रेणाश्रपणांकृत्वा श्राद्धंस्वामिक्षयेऽह
नि । तृतीयस्यततःकुर्यात्संनिपातेत्वयंक्रमइति ॥ सहगमनेसर्वत्रश्राद्धार्थमेक
पाकइत्याह (मदनरत्नेप्रचेताः ) एकचित्यांसमारूढौम्रियेतेदंपतीयदि । तंत्रेणा
श्रपणांकुर्यात्पृथक्पिंडंसमावपेत् ॥ पृथ्वीचंद्रोदयेप्येवम् ॥ अत्रभर्तुराशौचम
ध्येऽन्यदिनेस्त्रीमरणेपतिमरणादिनगणनया शौचपिंडदानैकादशाहादिकार्यं
म ॥ नात्रपक्षिणीशुद्धिः ॥ मृतंपतिमनुव्रज्यपत्नीचेदनलंगता । नतत्रपक्षिणी
कार्यापैतृकादेवशुद्ध्यति ॥ पुत्रोन्योवाग्निदस्तस्यास्तावदेवाशुचिस्तयोः । न
वश्राद्धंसपिंडंचयुगपत्तुसमापयेदितिषडशीतिमतात् ॥ यदानारीविशेदग्निंप्र
यस्यप्रियवांछया । तदाशौचंविधातव्यंभर्त्राशौचक्रमेणहीतिलघुहारीतोक्ते
श्च ॥ भर्त्राशौचोत्तरमन्वारोहणेतत्त्र्यहमाशौचं ॥ ऋग्वेदवादात्साध्वीस्त्रीन
भवेदात्मघातिनी ॥ त्र्यहाशौचेतुनिर्वृत्तेश्राद्धंप्राप्नोति शाश्वतइतिब्राह्मोक्तेरि
तिपृथ्वीचंद्रापराकौं ॥ एतदन्वारोहणेएवनत्वेकचितौ (ऋग्वेदवादः) इमाना
रीरविधवेत्यादिः ॥ एतदसवर्णापरमित्यन्ये (स्मार्तगौडास्तु) देशांतरमृतेप
त्यौसाध्वीतत्पादुकाद्वयमित्युपक्रम्य ( ब्राह्मे ) त्र्यहाशौचेतुनिर्वृत्तेइत्युक्ते
र्भात्राशौचोत्तरमन्वारोहणेत्र्यहः ॥ सहगमनेतुपूर्णादशाहादि ॥ पिंडास्तुदशा
पिसहैव (तथाचजनकशूलपाणिशुद्धितत्त्वधृतव्यासः) संस्थितंपतिमालिंग्यप्र
विशेद्याहुताशनम् । तस्याःपिंडादिकंज्ञेयंक्रमशःपतिपिंडवत् ॥ अन्वितापिंड
दानंतुयथाभर्तुर्दिनेदिने । तदर्थरोहिणीयस्मात्तस्मात्सानात्मघातिनीतिविष्णू
क्तेश्च ॥ पृथक्चितौतुभर्त्राशौचमध्येतदूर्ध्वंवासत्यांत्र्यहेणदशपिंडाः ॥ अ

न्विताया:प्रदातव्यादशपिंडास्त्र्यहेणतु ॥ स्वाम्याशौचेव्यतीतेतुतस्या:श्राद्धंप्र
दीयतइतितत्रैवपैठीनसिस्मृते: ॥ भर्त्राशौचोत्तरंमृतौतुचतुर्थेऽह्निश्राद्धम् ॥ शूल
पाणिनात्विदर्मग्निपुराणीयत्वेनोक्तम् ॥ युद्धहतस्यसद्य:शौचेत्वन्वारोहणेत्रि
रात्रम् ॥ एकचितौतुसंस्थितपतिर्मितिप्रागुक्तव्यासोक्ते:सद्य:शौचमित्याहु: ॥
अन्यसपिंडाशौचमध्येविदेशमृतान्वारोहणंत्वनाशक्यमेव ॥ शुचिताया अंग
त्वात् ॥ अन्येतुरजोवत्या: सूतिकायाश्चगमननिषेधादितराशौचस्यानिषे
ध: ॥ अन्यथाप्रत्यक्षभर्तृमरणेकार्णतिरित्याहु: ॥ तन्मूलवचनंविनाचिंत्यमे
व (स्मृत्यर्थसारेऽपि) सहगमनेसर्वत्रश्राद्धपिंडादौपाकैक्यंकालैक्यंकर्त्रैक्यंचेति ॥
यातुपतिमुद्दिश्याऽन्यकालेऽन्यतिथावन्वारूढा तस्या:श्राद्धंतत्क्षयतिथौकार्य
म् ॥ नभर्तृतिथौ ॥ पारणेमरणेनॄणांतिथिस्तात्कालिकीस्मृतेतिस्कांदात् ॥ ति
थिरेकैवज्ञायतइत्यादिवचनाच्चेतिमदनरत्नपारिजातपृथ्वीचंद्रादय: ॥ अन्येतु
तस्या:पतिमरणेनमृतप्रायत्वात्॥ सहाग्रत:पृष्ठतोवातद्भक्त्याम्रियतेयदि । तस्या:
श्राद्धंप्रदातव्यंपृथक्पत्यु:क्षयेहनीतिस्मृत्यन्तरात् ॥ अग्रत:पृष्ठतोवापितद्भक्त्या
म्रियतेयदि । तस्या:श्राद्धंसुतै:कार्यंपत्युरेवक्षयेहनीति पुराणसमुच्चयाच्चभर्तृति
थावेवेत्याहु: ॥ अत्रमूलंचिंत्यम् (अत्रविशेषोहेमाद्रौस्मृत्यंतरे) मातामंगलसूत्रे
णम्रियतेयदितद्दिने । उद्दिश्यविप्रपंक्तौतांभोजयेच्चसुवासिनीम् (अथश्राद्धसं
पातेनिर्णय: ) अत्रपित्रोर्मृततिथ्यैक्येमरणक्रमेणादर्शेवर्गद्वयवत्तंत्रेणश्राद्धं
कुर्यात् ॥ पौर्वापर्याज्ञानेतुपितृपूर्वकंकुर्यादितिहेमाद्रि: (माधवादयस्तु) पि
त्रो:श्राद्धसमंप्राप्तेनवेपर्युषितेपिवा । पितृपूर्वंसुत:कुर्यादन्यत्रासतियोगतइति
कार्ष्णाजिनिस्मृते: ॥ सर्वत्रपितृपूर्वभिन्नप्रयोगमाहु:(पार्वणैकोद्दिष्टयो:संपा
तेमाधवीयेजाबालि:)यद्येकत्रभवेद्भ्राता मेकोद्दिष्टञ्चपार्वणं । पार्वणंत्वभि
निर्वर्त्य एकोद्दिष्टंसमाचरेत् (गृहदाहादिनायुगपन्मरणेभृगु: ) एककालेगतासू
नां बहूनामथवाद्वयो: । तंत्रेणश्रपणंकृत्वा कुर्याच्छ्राद्धम्पृथक्पृथक् ॥ पूर्वक्र
स्यमृतस्यादौ द्वितीयस्यतत:पुन: । तृतीयस्यतत:कुर्यात्संन्निपातेऽवयंक्रम: (ऋ
ष्यशृङ्ग:) भवेद्यदिसपिंडानांयुगपन्मरणंतदा । संबंधासत्तिमालोच्य तत्क्रमा

च्छ्राद्धमाचरेत् (गारुडे) एकेनैवतुपाकेनश्राद्धानिकुरुतेवहि । विकिरंत्वेकतः कुर्यात्पिण्डान्दद्यात्पृथक्पृथक् ॥ अत्रानुगमनेचदाहसपिण्डनादौविशेषंवक्ष्यामः (अत्रिः)बहूनामथवाद्वाभ्यांश्राद्धञ्चेत्स्यात्समेहनि । तंत्रेणाग्रपणांकृत्वा पृथक्श्राद्धानिकारयेत् (पुलस्त्यः) महालयेगयाश्राद्धेगतासूनांक्षयेहनि । तंत्रेणाग्रपणांकृत्वाश्राद्धंकुर्यात्पृथक्पृथक् ॥ इदंचपृथक्पाकेनभिन्नश्राद्धाशक्तौ पृथक्पाकेनसंबंधासत्त्याश्राद्धभेदस्तुमुख्यःपक्षः ॥ एकस्मिन्दिनेश्राद्धद्वयंप्राप्तंयदातदा । चरेदेवपुरावर्यात्पितुर्मातुश्चयस्सुतः॥ एकस्मिन्नयःकरोत्यद्विद्वयोः श्राद्धंयदाद्विजः । तदापूर्व्वंमृतस्यादौकृत्वास्नात्वायथाविधि ॥ पश्चात्परश्चान्मृतस्यैवपृथक्पाकैःसमाचरेत् । नैकस्मिन्दिवसेश्राद्धत्रयाणांकुर्यचित्द्विजः । एकःकुर्यात्तथाप्राप्तेअन्योभ्रातासमाचरेत् ॥ भ्रातर्यविद्यमानेतुतत्परेद्विसमाचरेत् । अन्यथाश्राद्धहंतास्याच्छ्राद्धसंकरकृद्भवेदित्याश्वलायनोक्तेरितिपृथ्वीचन्द्रः (कात्यायनः) द्वेवहूनिनिमित्तानिजायेरन्नेकवासरे ॥ नैमित्तिकानिकार्याणिनिमित्तोत्पत्त्यनुक्रमात् ( जाबालिः ) श्राद्धंकृत्वातुतस्यैवपुनःश्राद्धंनतद्दिने । नैमित्तकंतुकर्तव्यंनिमित्तानुक्रमोदयम् ( कालादर्शे ) नित्यदार्शिकयोश्चोदकुंभमासिकयोरपि । दार्शिकस्ययुगादेश्चदार्शिकालभ्ययोगयोः ॥ दार्शिकस्यचमन्वादेःसंपातेश्राद्धकर्मणः । प्रसंगादितरस्यापिसिद्धेरुत्तरमाचरेत् ( अस्यदेवताभेदेऽपवादमाहसएव ) नित्यस्यचोदकुंभस्यनित्यमासिकयोरपि दर्शस्यचोदकुंभस्यदर्शमासिकयोरपि ॥ नित्यस्यचाब्दिकस्यापिदार्शिकाब्दिकयोरपि । युगाद्याब्दिकयोश्चैवमन्वाद्याब्दिकयोस्तथा ॥ प्रत्याब्दिकस्यचालभ्ययोगेषुविहितस्यच । संपातेदेवताभेदाच्छ्राद्धयुग्मंसमाचरेत् ॥ निमित्तानियतश्चात्रपर्वानुष्ठानकारणं ॥ पित्रोस्तुपितृपूर्वंस्यात्सर्वत्रश्राद्धकर्मणि ( माधवीयेस्मृतिसंग्रहे) काम्यतंत्रेणानित्यस्यतंत्रंश्राद्धस्यसिद्ध्यति (अथश्राद्धांगतर्पणम् । पारिजातेपृथ्वीचंद्रोदयेचगर्गः ) पूर्वंतिलोदकंकृत्वाआमश्राद्धंतुकारयेत् । प्रत्यब्देनभवेत्पूर्वंपरेऽहनितिलोदकम् ॥ पक्षश्राद्धंहिरण्येनअनुव्रज्यतिलोदकम् । नचनित्यतर्पणस्यायंपरेद्युरुत्कर्षः ॥ नतुश्राद्धांगतर्पणमस्तीतिवाच्यम् ॥ यत्त

पर्यतितान्विप्रः श्राद्धंकृत्वापरेहनि । पितरस्तेनतृप्यंति नचेत्कुप्यंतिवैभृशमि तिगर्गेणफलनिंदार्थवादाभ्यामंगत्वेनोक्तेः ॥ श्राद्धप्रक्रमाद्दार्शिकम ( बृहन्ना रदीयेप्याब्दिकंप्रक्रम्य ) परेद्युःश्राद्धकृन्मर्त्योयोनतर्पयतेपितॄन् । तस्यतेपि तरःक्रुद्धाःशापंदत्वाव्रजंतिहि ॥ पितृशब्दश्चश्राद्धेज्यवर्गपरः ॥ तेनतर्पणस्य पशुपुरोडाशयागवत्प्रस्तरप्रहरणवच्चेष्टदेवतासंस्कारकता ॥ तेनाब्दिकेदिने नित्यंस्वपित्रादितर्पणंकार्यमेव ॥ श्राद्धांगभूतस्यैवपरेद्युरुक्तेः ( तदुक्तं ) प्र त्यब्दांगंतिलंदद्यान्निषिद्धेपिपरेहनि । वर्गैकस्यवचोयेयामन्येषांतुविवर्जयेत् ( क्वचिद्विशेषमाहगर्गः ) कृष्णभाद्रपदेमासिश्राद्धंप्रतिदिनंभवेत् । पितॄणांप्र त्यहंकार्यंनिषिद्धाहेपितर्पणम् ॥ तर्पणंतिलतर्पणं ॥ निषिद्धाहेपीत्युक्तेः ॥ सकृन्महालयेएवःस्यादष्टकास्त्वंतएवहि ॥ अत्रसप्तमीनिर्देशात्तदंगतास्फुटैव ॥ तत्रजयात्जुहुयात् ॥ मंद्रं प्रायणीयायांमंद्रं प्रातःसवनेइत्यादिवत् (अस्यापवादो बृहन्नारदीये)वृद्धिश्राद्धेसपिंडयंचप्रेतश्राद्धेनुमासिके । संवत्सरविमोकेचकुर्यात्तु तिलतर्पणम् ॥ तदयमर्थः ॥दर्शेविप्रनिमंत्रणोत्तरंपाकारंभोत्तरंवाश्राद्धप्रयोगस्या रब्धत्वात्ब्रह्मयज्ञोत्तरं नित्यतर्पणं ॥ नैवश्राद्धांगतर्पणस्यतंत्रेणप्रसंगेनवासिद्धिः ॥ ततःपूर्वमेवदेवोत्तरंवाब्रह्मयज्ञकरणेश्राद्धांगतर्पणंपृथक्कार्यं ॥ पित्रोर्वार्षिकेतु नित्यतर्पणंतिलवर्ज्यंकार्यम् ॥ नैवश्राद्धदिनेकुर्यात्तिलैस्तुपितृतर्पणम् । श्राद्धंकृ त्वापराह्णेचतर्पणंतुतिलैःसहेतिवचनात् ॥ सप्तम्यांभानुवारेचमातापित्रोर्मृतेह नि । तिलैर्यस्तर्पणंकुर्यात्सभवेत्पितृघातकइतिस्मृतिरत्नावल्यांवृद्धमनूक्तेश्च । अत्रनित्यतिलतर्पणे तिलमात्रनिषेधोनतुतर्पणस्यतिलैरित्यस्यवैयर्थ्यापत्तेः ( यत्तुकात्यायनीयम् ) उपरागेपितुःश्राद्धेपातेऽमायांचसंक्रमे । निषिद्धेपिहिसर्वत्र तिलैस्तर्पणमाचरेदितितत्परेद्युःश्राद्धांगतर्पणविषयमितिकेचित् ॥ श्राद्धा शक्तस्यतत्स्थानापन्नतर्पणविषयमितियुक्तम् ॥ सकृन्महालयेपरेद्युस्तर्पणं ॥ अष्टकासुतुसप्तम्यष्टमीश्राद्धयोरंतेतद्देववर्गद्वयस्य ॥ अन्वष्टक्येतुमातृवर्गस्यापि तीर्थश्राद्धेदर्शवत् ॥ माघाद्यादित्रष्टकावदंते ॥ अनेकश्राद्धसंपातेतुयदितत्प्रसं गसिद्धिस्तदातदीयमेवतर्पणम् ॥ तंत्रत्वेतुश्राद्धसमसंख्यत्वेश्रादावंतेवा ॥ विष

मसंख्यायांबह्वनुरोधइति ॥ तस्माच्छ्राद्धांगतर्पणंसिद्धम (तद्विधिःसंग्रहे) स्नात्वा तीरंसमागत्यउपविश्यकुशासने ॥ संतर्पयेत्पितृन्सर्वान्स्नात्वावस्त्रंचधारयेत् ॥ तर्पणोत्तरंनित्यस्नानंकृत्वेत्यर्थः ॥ अपसव्यंततःकृत्वासव्यंजान्वाच्यभूतले । नामगोत्रस्वधाकारैर्द्वितीयांतेनतर्पयेत् ( अत्रवस्वादिरूपतोक्तास्मृत्यर्थसारे ) वसुरुद्रादितिसुतान्श्राद्धार्थेतर्पयेत्पितृन् ॥ तत्रबहुवृचानांदक्षिणेनैव ॥ अनादेशे दक्षिणांप्रतीयादितिसूत्रात् ॥ अत्रप्रत्यंजलिमंत्रावृत्तिः ॥ निर्वापवत्तत्संध्यार्घ्यदानवच्चद्रव्यभेदात् ॥ अवघातवेदिप्रोक्षणादौतुद्रव्यैकत्वान्नमंत्रावृत्तिः केचित्तु परिव्याणामंत्रवत्क्रियमाणानुवादित्वेनकरणत्वाभावात्सकृदित्याहुः ॥ तन्न ॥ तत्रापूपद्रव्यैक्यात्परवीरसीति करणीभूतमन्त्रांतरसत्वादन्येतरेणाव्यवधानापत्त्योभयोःकारणत्वायोगात्कर्तृभेदेन विकल्पायोगाच्चक्रियमाणानुवादित्वम ॥ नत्वत्रतथेतिबौधायनादिवचनात्करणत्वमेव ॥ तेनावृत्तिरेवयुक्ता ॥ एवं नित्येपि ॥ यत्तुसंग्रहेनाम्नापठंति ॥ पित्रोःक्षयाहेसंप्राप्तेयःकुर्यान्नित्यतर्पणम । आसुरंतद्भवेच्छ्राद्धंतत्तोयंरुधिरंभवेत् ॥ सर्वदातर्पणंकुर्याद्ब्रह्मयज्ञपुरःसरं । मृताहेनैवकर्तव्यंकृतंचेन्निष्फलंभवेत् ॥ तत्समूलत्वेसतिफलविषयं ॥ यच्चपठंति ( कपिलः) मन्वादिषुयुगाद्यासु दर्शसंक्रमणेषुच । पौर्णमास्यांव्यतीपातेदद्यात्पर्वतिलोदकं ॥ अर्धोदयेगजच्छायेग्रहणेषुचमहालये । भरण्यांचमघाश्राद्धेतदंतेतर्पणंविदुः ( शौनकः ) मातापित्रोर्मृताहेचपरेहनितिलोदकं । कारुणयश्राद्धविषयेसद्योदद्यात्तिलोदकं ॥ एतन्निर्मूलम ( अथतिलतर्पणनिषेधः । गार्ग्यः) भानौभौमेत्रयोदश्यांनन्दाभृगुमघासुच । पिण्डदानंमृदास्नानंनकुर्यात्तिलतर्पणं ( स्मृत्यर्थसारे ) विवाहव्रतचूडासुवर्षमर्धंतदर्धकं । अर्धंतदेव ॥ वृद्धौसत्यांचतन्मासिनेत्याहुस्तिलतर्पणं ( हेमाद्रौमरीचिः ) सप्तम्यांरविवारेचगृहेजन्मदिनेतथा । निशासन्ध्यासुपुत्रार्थीनकुर्यात्तिलतर्पणं (यत्तुसंग्रहे) नन्दायां भार्गवदिनेकृत्तिकासुमघासुच । भरण्यांभानुवारेचगजच्छायाह्वयेतथा ॥ अयनद्वितयेचैवमन्वादिषुयुगादिषु ॥ पिण्डदानंमृदास्नानं नकुर्य्यात्तिलतर्पणमिति तच्चिंत्यं ॥ पानीयमप्यत्रतिलैर्विमिश्रं दद्यात्पितृभ्यःप्रयतोमनुष्यइत्यादिवि

रोधात् ( अत्रापवादः पृथ्वीचन्द्रोदये ) तीर्थे तिथिविशेषे च गयायां प्रेतपक्षके । निषिद्धेपि दिने कुर्यात्तर्पणं तिलमिश्रितम् ( स्मृत्यर्थसारेपि ) तिथितीर्थविशेषे युकार्यं प्रेते च सर्वदेति ( गोभिलः ) तिलाभावे निषिद्धाहे सुवर्णरजतान्वितम् । तदभावे निषिंचेत्तु दर्भमन्त्रेणवा पुनः ॥ पतितस्य तिलोदकं वक्ष्यामः ॥ अथ वृद्धिश्राद्धं ( तन्निमित्तं पृथ्वीचन्द्रोदये ब्राह्मे ) जन्मन्यथोपनयने विवाहे पुत्रकस्य च । पितृन्नांदीमुखान्नाम तर्पयेद्विधिपूर्वकं ॥ देवव्रतेषु चाधाने यज्ञे पुंसवनेषु च । नवान्नभोजने स्नाने ऊढायाः प्रथमार्तवे ॥ देवारामतडागादिप्रतिष्ठासूत्सवेषु च । राजाभिषेके बालान्नभोजने वृद्धिसंज्ञकान् ॥ वनस्थाद्याश्रमं गच्छन्पूर्वेद्युः सत्यगवा । पितृन्पूर्वोक्तविधिना तर्पयेत्कर्मसिद्धये (विष्णुपुराणे ) यज्ञोद्वाहप्रतिष्ठासु मेखलाबंधमोक्षयोः ॥ पुत्रजन्मवृषोत्सर्गे वृद्धिश्राद्धं समाचरेत् ( तत्रैव ) नामकर्मणि बालानां चूडाकर्मादिके तथेत्युक्तेर्निष्क्रमान्नप्राशनयोर्न श्राद्धमिति मैथिलाः ॥ पूर्वोक्तविरोधात् ॥ नानिष्ट्वेति विरोधात् ॥ सुतोत्पत्तौ तथा श्राद्धमन्नप्राशनिके न थेति राजमार्तंडाच्च ( यत्तु छन्दोगपरिशिष्टं ) सूर्येंद्वोः कर्मणी ये च तयोः श्राद्धं न विद्यते इति तत्तेषामेवेति कल्पतरुः ( बह्वृचकारिकायां ) स्यादाभ्युदयिकं श्राद्धं वृद्धिपूर्तेषु कर्मसु । पुंसः सवनसीमंतचौलोपनयने ष्विह ॥ विवाहे चानलाधेयप्रभृतिश्रौतकर्मणि । इदं श्राद्धं प्रकुर्वीत द्विजो वृद्धिनिमित्तकम् ॥ अन्यैः षोडशसंस्कारश्रावण्यादिष्वपीष्यते । वाप्याद्युद्यापनादौ तु कुर्युः पूर्तनिमित्तकं ( बोपदेवकालादर्शे ) सीमंतव्रतचौलनामकरणान्नप्राशनोपायनस्नानाधानविवाहयज्ञतनयोत्पत्तिप्रतिष्ठासु च । पुंसूत्यावसथप्रवेशनसुताद्यास्यावलोकाश्रमस्वीकारक्षितिपाभिषेकदयिताद्यर्तौ च नांदीमुखं ( यत्तु कामधेनौ ) जलाशयप्रतिष्ठायां वृषोत्सर्गादिकर्मसु । वत्सराभ्यंतरे पित्रोर्यस्योत्सर्गाकर्मणि ॥ वृद्धिश्राद्धं न कुर्वीत तदन्यत्र समाचरेदिति ॥ तत्र जलाशये वृद्धिश्राद्धस्य निषेधो न तु कर्मांगस्येति केचित् ॥ अन्ये त्वस्य निर्मूलतामाहुः ( श्राद्धकौमुद्यां निर्णयामृते च मात्स्ये ) अन्नप्राशे च सीमंते पुत्रोत्पत्तिनिमित्तके । पुंसवे च निषेके च नववेश्मप्रवेशने ॥ देववृक्षजलादीनां प्रतिष्ठायां विशेषतः । तीर्थयात्रावृषो

त्सर्गेवृद्धिश्राद्धंप्रकीर्तितम्॥ इदंचावश्यकम्॥ वृद्धौनतर्पितायेवैपितरोगृहमेधि भिः। तद्धीनमफलंज्ञेयमासुरोविधिरेवसइतिशातातपोक्तेः॥ अत्रश्राद्धत्रयंम त्स्याह॥ मातृश्राद्धंतुपूर्वंस्यात्पितृणांतदनंतरम्। ततोमातामहानांचवृद्धौश्राद्ध त्रयंस्मृतम् (तत्रकालमाहपृथ्वीचंद्रोदयेगार्ग्यः) मातृश्राद्धंतुपूर्वेद्युःकर्माहनितु पैतृकम्। मातामहंचोत्तरेद्युर्वृद्धौश्राद्धत्रयस्मृतम् (अत्राप्यशक्तौस्मृव) पृथक् दिनेष्वशक्तश्चेदेकस्मिन्पूर्ववासरे। श्राद्धत्रयंप्रकुर्वीत वैश्वदेवंतुतांत्रिकमिति (वृद्धमनुरपि)अलाभेभिन्नकालानांनांदीश्राद्धत्रयंबुधः। पूर्वेद्युर्वैप्रकुर्वीतपूर्वाह्णे मातृपूर्वकम्॥ अत्रमहत्सुपूर्वेद्युस्तदहरल्पेष्वितिगृह्यपरिशिष्टाद्व्यवस्थाज्ञेया॥ तच्चप्रातरेव॥ पार्वणंचापराह्णेतुप्रातर्वृद्धिनिमित्तकमितिशातातपोक्तेः॥ अ त्रप्रातःशब्दःसार्द्धप्रहरपरः॥ प्रहरोप्यर्धसंयुक्तः प्रातरित्यभिधीयतइतिगा र्ग्योक्तेरितिपृथ्वीचंद्रः॥ इदंचपुत्रजन्मातिरिक्तविषयम् (तदाहात्रिः) पूर्वा ह्णेवैभवेद्वृद्धिर्विनाजन्मनिमित्तकम्। पुत्रजन्मनिकुर्वीतश्राद्धंतात्कालिकंबुध इति॥ एतदनियतनिमित्तपरम्॥ नियतेषुनिमित्तेषुप्रातर्वृद्धिनिमित्तकम्। ते षामनियतत्वेतुतदानंतर्यमिष्यत इतिलौगाक्षिस्मृतेः॥ आधानांगंनांदीश्राद्धं त्वपराह्णएव॥ आमश्राद्धंतुपूर्वाह्णेसिद्धान्नेनतुमध्यतः। पार्वणंचापराह्णेतुवृ द्धिश्राद्धंतथाग्निकमितिनिर्णयामृतेगालवोक्तेः॥ नांदीमुखाह्वयप्रातर्यदिद कंत्वपराह्णतइतिविष्णूक्तेश्च॥ इदंचमातृपितृमातामहादिकमेणानवदैवत्यं कार्यम्॥ तत्रमातामहाः सपत्नीकाः वृत्थप्रमातामहप्रमातामहमातामहानांसप त्नीकानामितिपृथ्वीचंद्रोदयेगारुडेगद्यरूपेणपाठात् (हेमाद्रौशंखः) नांदीमुखे सत्यवसूसंकीर्त्यौवैश्वदेविके (वृद्धपराशरः) नांदीमुखेभ्योदेवेभ्यःप्रदक्षिणाकु शासनम्। पितृभ्यस्तन्मुखेभ्यश्चप्रदक्षिणमितिस्मृतिः (यत्तुवृद्धवसिष्ठः) नां दीमुखेविवाहेचप्रपितामहपूर्वकम्। नामसंकीर्तयेद्विद्वानन्यत्रपितृपूर्वकम् (अ थस्मृत्यर्थसारे) वृद्धमुख्यास्तुपितरोवृद्धिश्राद्धेषुभुंजतइति (यच्चगारुडे) व्युत्क्र मप्रतिपादनंतच्चशाखांतरविषयम्॥ पितृभ्यःपितामहेभ्यःप्रपितामहेभ्यइति बह्वृचपरिशिष्टेकात्यायनेनचानुलोम्याम्नातात्॥ पृथ्वीचंद्रोदयेप्येवम्॥ य

त्तुकेचिद्वृद्धिपदंपित्रादिषुप्रयुंजतेतन्न॥ अनस्मद्वृत्त्वशब्दानामरूपाणामगोत्रिणाम। अनाम्नामतिलाद्यैश्चनांदीश्राद्धंतुसव्यवदितिपृथ्वीचंद्रोदयेसंग्रहोक्तेः॥ नचनिषेधादेवविधिःकल्प्यतइतिवाच्यम ॥ प्रौष्ठपदीश्राद्धेप्रपितामहात्परेषां वृद्धपित्रादीनांदेवतात्वान्नांदीश्राद्धत्वसाम्येनेहापितत्प्राप्तौनिषेधात (गोत्रानामनिनिषेधस्तु) शुभार्थीप्रथमांतेनवृद्धौसंकल्पमाचरेदित्युपक्रम्यानस्मद्वृद्धशब्दानामित्युक्तेःसंकल्पश्राद्धपरः ॥ सपिंडकेतुसर्वंभवतीतिप्रयोगपारिजातः ॥ गोत्रनामभिरामंत्र्यपितृभ्योर्घ्यंप्रदापयेदितिछंदोगपरिशिष्टेतद्विधानात (यत्तु ब्राह्मे) पितापितामहश्चैव तथैवप्रपितामहः । त्रयोह्यश्रुमुखाह्येतेपितरःपरिकीर्तिताः ॥ तेभ्यःपूर्वतरायेचप्रजावंतःसुखैधिताः ।तेतुनांदीमुखानांदीसमृद्धिरितिकथ्यतइति (यच्चमार्कंडेयपुराणे) येस्युःपितामहादूर्ध्वंतेतुनांदीमुखाःस्मृताइतितज्जीवत्पित्रादित्रिककर्तृकवृद्धिश्राद्धविषयम ॥ तेनतस्यैदमावश्यकम (यत्तु विष्णुः) पितरिपितामहेचजीवतिनैवकुर्यादितितद्दर्शादिविषयमिति कल्पतरुः ॥ मदनपारिजातेप्येवम (हेमाद्रिस्तु) नांदीमुखानांश्राद्धंतुकन्याराशिगतेरवौ । पौर्णमास्यांतुकर्तव्यंवराहवचनंयथेति ॥ प्रौष्ठपदीश्राद्धैकवाक्यत्वात्तन्नैवपूर्वेषांदेवतात्वमित्याह ॥ अत्रसत्यवसुविश्वेदेवाविशुक्तंप्राग्वत (यत्तुशातातपः) मातुःश्राद्धंतुयुग्मैः स्याद्दैवंप्राङ्मुखैःपृथगितितद्भिन्नप्रयोगमातृश्राद्धभिन्नश्राद्धद्वयेविश्वेदेवविकल्पार्थम(प्रयोगैक्येतु)विश्वेदेवविहीनंतुकेचिदिच्छंतिमानवाइति तद्भिन्नप्रयोगमातृश्राद्धभिन्नश्राद्धद्वयेविश्वेदेवविकल्पार्थम ॥ प्रयोगैक्येतुदेवनियमइतिहेमाद्रिः ॥ एतच्चमातृपूजापूर्वकंकार्यम ॥ अकृत्वामातृयागंतुयःश्राद्धंपरिवेषयेत । तस्यक्रोधसमाविष्टाहिंसामिच्छंतिमातरइतिशातातपोक्तेः (कौर्मेपि) पुष्पैर्धूपैःसनैवेद्यैर्गंधाद्यैर्भूषणैरपि । पूजयित्वामातृगणंकुर्याच्छ्राद्धत्रयंबुधइति (छंदोगपरिशिष्टे) कर्मादिषुतुसर्वेषुमातरःसगणाधिपाः । पूजनीयाःप्रयत्नेनपूजिताःपूजयंतिताः ॥ प्रतिमासुचशुद्धासुलिखितावापटादिषु ॥ अपिवाक्षतपुंजेषुनैवेद्यैश्चपृथग्विधैः॥ कुड्यलग्नांवसोर्धारांसप्तधारांघृतेनतु । कारयेत्पंचधारांवानातिनीचांनचोच्छ्रिताम ॥ आयुष्या

णाचशांत्यर्थंजप्त्वातत्रसमाहितः । षड्भ्यःपितृभ्यस्तदनुश्राद्धदानमुपक्रमेत् ॥
अत्रसर्वेष्वितिग्रहणाद्ग्रहयज्ञतद्विकारेष्वपिनित्यंश्राद्धम् ॥ नानिष्ट्वातुपितॄन्
श्राद्धेकर्मकिंचित्समाचरेदितिशातातपोक्तेश्च॥ इयंचवसोर्धारातच्छाखीया
नांनियताअन्येषांत्वनियता॥ बह्वल्पंवास्वगृह्योक्तमित्युक्तेःकरणेत्वभ्युदयः॥
यत्नान्मातंस्वशाखायामित्युक्तेः ॥ आयुष्याणिआनोभद्राइत्यादीनि ॥ षड्भ्यइ
तिमात्रादित्रिकोपलक्षणमितिपृथ्वीचंद्रोदयः ॥ छंदोगानांषड्दैवत्यमन्येषांन
वदैवत्यमित्याशार्कः ॥ ममतुमतंकौकिलमतानुसारिणांमातृमातामहप्रमाताम
हीइतिमात्रासहैवमातामहश्राद्धकरणात् ॥ तद्विषयमिदंषड्भ्यइति ॥ मातरस्त
त्रैवोक्ताः ॥ गौरीपद्माशचीमेधासावित्रीविजयाजया । देवसेनास्वधास्वाहामात
रोलोकमातरइतिसर्वविशेषणांतेनचतुर्दशत्वम् ॥ यदाषोडशेतिपाठस्तदादेवतां
तरम् (चंद्रिकायांचतुर्विंशतिमतेत्वन्याउक्ताः) तिस्रःपूज्याःपितुःपक्षेतिस्रोमा
तामहेतथा । इत्येतामातरःप्रोक्ताःपितुर्मातुःस्वसाष्टमी ॥ आसांजीवनेप्रत्यक्षपूज
नम् ॥ मृतानांत्वक्षतपुंजेष्वितिहेमाद्रिः ॥ ब्राह्मण्याद्यास्तथासप्तदुर्गाक्षेत्रगणा
धिपान् ॥ वृद्ध्यादौपूजयित्वातुपश्चान्नांदीमुखान्पितॄन्॥मातृपूर्वांश्चपितॄन्पूज्य
तोमातामहानपि॥मातामहीस्ततःकेचिद्युग्माभोज्याद्विजातयइति॥ अत्रद्वादशात
दैवतस्यदेशाचाराद्व्यवस्था (ब्राह्मण्याद्याः) ब्राह्मीमाहेश्वरीचैवकौमारीवैष्ण
वीतथा । वाराहीचतथेंद्राणीचामुंडाःसप्तमातरइत्यपरार्केउक्ताः ॥ अत्रचौला
दीनांयौगपद्येतंत्रतोक्ताः (छंदोगपरिशिष्टे) गणशःक्रियमाणानांमातृभ्यःपूज
नंसकृत् । सकृदेवभवेच्छ्राद्धमादौनपृथगादिषु ॥ मातृभ्यइतिषष्ठ्यर्थेचतुर्थी ॥
गणशःएकानेकपुत्राणांसंस्कारेष्वेकदिनएकदेशकालकर्तृकत्वैक्यादित्यर्थः (तथा)
असकृद्यानिकर्माणिक्रियेरन्कर्मकारिभिः । प्रतिप्रयोगंनैवस्युर्मातरःगणा
धिपाःकर्मवृत्तावपिकुत्रश्राद्धंकार्यंकाचनेत्युक्तंतत्रैव ॥ आधानेहोमयोश्चैववै
श्वदेवेतथैवच । बलिकर्मणिदर्शेचपौर्णमासेतथैवच । नवयज्ञेचयज्ञज्ञावदंत्येवं
मनीषिणः ॥ एकमेवभवेच्छ्राद्धमेतेषुनपृथक्पृथक् ॥ एतेषुप्रतिप्रयोगंनावर्तते
किंत्वादौ ॥ एतद्भिन्नेसोमयागादौप्रतिप्रयोगमावर्ततएव ॥ श्राद्धमित्यर्थः ॥क्व

चिदादावपिनिषेधमाहसएव ॥ नाष्टकासुभवेच्छ्राद्धंनश्राद्धेश्राद्धमिष्यते । नसो ष्यंतीजातकर्मप्रोषितागतकर्मसु॥ विवाहादिःकर्मगणोयउक्तो गर्भाधानंशुश्रुमो यस्यचांते ॥ विवाहादावेकमेवात्रकुर्याच्छ्राद्धंनादौकर्मणःकर्मणःस्यात् । सोष्यं त्यासन्नप्रसवाया: ॥ सोष्यंतीसभ्युस्येत्युक्तंकर्म ॥ कात्यायनोक्तस्यश्राद्धस्य पाकस्यप्राधान्यात्तस्यच ॥ जातश्राद्धेनदद्यात्तुपक्वान्नंब्राह्मणेष्वपीतिनिषेधान्न जातकर्मणिनांदीश्राद्धमित्याप्रार्काः ॥ आमान्नेनवाकार्यमित्यपितेनैवोक्तं (गौ डास्तु) जातकर्मण्येवनिषेधः ॥ पुत्रजन्मनिमित्तकंतुकार्यमेव ॥ जन्मन्यथो पनयनेइत्युक्तेः ॥ नैमित्तिकमथोवक्ष्येश्राद्धमभ्युदयात्मकम् । पुत्रजन्मनितत्त कार्यंजातकर्मसमंनरैरितिमार्कंडेयपुराणाच्चेत्याहुः ॥ हारलतायांश्राद्धविवेके चैवम् ॥ एतेनजातकर्मणिकालांतरेश्राद्धनिषेधोनपुत्रजन्मदिनेइतिवाचस्पतिम तंपरास्तम् ॥ अत्रनिषेककालेइतिवचनात्गर्भाधानेननिषेधः ॥ निषेककालेसोम चसीमंतोन्नयनेतथा । ज्ञेयंपुंसवनेश्राद्धंकर्मांगंविधिवत्कृतमितिपारस्करः ॥ (प्रोषितेति) प्रोष्यैत्यगृहानुपतिष्ठतेपुत्रंदृष्ट्वाजपतीतिविहितंकर्मविवाहादिग र्भाधानांतोयोगृहप्रवेशश्चतुर्थीकर्मादिकर्मसमूहउक्तः सूत्रकारेण ॥ तत्रापिप्र तिकर्मनेत्यर्थः ॥ अन्येपिहलाभियोगादयोअपवादविषयास्तत्रैवज्ञेयाः ॥ तद हाप्रचारान्नोच्यंते (अत्राधिकारिणः ॥ विष्णुपुराणे) जातस्यजातकर्मादिक्रि याकांडमशेषतः । पितापुत्रस्यकुर्वीतश्राद्धंचाभ्युदयात्मकम् ॥ अत्रकेचित् ॥ जी वत्पितुः साग्नेरेववृद्धिश्राद्धेधिकारः ॥ नतुनिरग्नेः ॥ नजीवत्पितृकःकुर्या च्छ्राद्धमग्निमृतेद्विजः । येभ्यएवपितादद्यात्तेभ्यःकुर्वीतसाग्निकः ॥ पिताम हेप्येवमेवकुर्याज्जीवतिसाग्निकः । साग्निकोपिनकुर्वीत जीवतिप्रपितामहेइ तिचंद्रिकायांसुमंतूक्तेरित्याहुः ॥ प्रयोगपारिजातेप्यनाहिताग्निर्नकुर्यादिति यद्यप्युक्तंतन्न ॥ अनग्निकोपिकुर्वीतजन्मादौवृद्धिकर्मणि । येभ्यएवपि तादद्यात्तानेवोद्दिश्यतर्पयेदितिहारीतोक्तेः ॥ सोमंतवत्तुवृद्धिश्राद्धभिन्नश्रा द्धपरमित्युक्तंमदनरत्ने ॥ श्राद्धपदंपिंडपितृयज्ञपरमितिपृथ्वीचंद्रोदयः ॥ निर्णयामृतेतुहारीतीयेनाग्निकोनाहिताग्निरभिप्रेतः॥ पूर्ववचनेतुसाग्निकःश्रौ

ताग्निःस्मार्ताग्निश्चोच्यते ॥ तेनोभयाग्निहीनस्यनेत्युक्तंतन्न ॥ पूर्वोक्तादिमा
र्गांतसम्भवेनाग्निपदस्यस्मार्त्ताग्निपरत्वेमानाभावात ॥ वक्ष्यमाणनित्यानित्य
संयोगविरोधात ॥ पितरोजनकस्येच्या यावद्व्रतमनाहितम । समाहितव्रतःप
श्चात्स्वान्यजेतपितामहानिति पृथ्वीचन्द्रोदये यमवचोविरोधाच्च (अपरा
र्कोऽपि) समावर्तनेब्रह्मचारीस्वयमेवनान्दीश्राद्धंकुर्यादित्याह ॥ अतःपूर्वमेवसा
धु ॥ बोपदेवोप्येवमाह ॥ यत्तुमतंजीवत्पितुः पुत्रनामकर्मादौनतुविश्राद्धंहारी
तीये (जन्मादावित्यादिशब्देनतत्प्राप्तावपि) उद्वाहेपुत्रजनने पित्र्येष्ट्यांसौमि
केमखे । तीर्थेब्राह्मणआयाते षडेतेजीवतःपितुरिति ॥ सौविपर्याये उद्वाहस
वतस्योपसंहारात ॥ एवंयत्तुसंस्कारादिपदंतद्युद्वाहादिपरमेवेतितन्न ॥ उद्वा
हपदस्यस्वविवाहपरत्वस्यापिसम्भवात ॥ पुत्रविवाहपरत्वेमानाभावात ॥ ना
मकर्मणिबालानांचूडाकर्मादिकेतथेत्यादिभिर्नित्यश्राद्धस्यचौलाद्यंगत्वप्राप्तौ
नित्यानित्यसंयोगविरोधाच्च ॥ अतोजन्मादावपीति सर्वसंस्कारसंग्रहः (तथा
कात्यायनः) स्वपितृभ्यःपितादद्यात्सुतसंस्कारकर्मसु । पिण्डानोद्वाहनात्तेषां
तस्याभावेतुतत्क्रमात ॥ सुतानांचौलादिसंस्कारेषुपितास्वपितृभ्यः पिण्डान
श्राद्धंपिण्डदोद्वाहरूपचैवमिति दर्शनादौह्वाविवाहपर्यंतंदद्यात ॥ विवाह
श्चप्रथमः ॥ नांदीश्राद्धंपितःकुर्यादाद्येपाणिग्रहेसदा । अतऊर्ध्वंप्रकुर्वीत
स्वयमेवतुनान्दिकमितिस्मृतेः (तस्यापितुरभावेतत्क्रमात) असंस्कृतास्तुसंस्का
र्या भ्रातृभिःपूर्वसंस्कृतैरिति ॥ यःकर्ता कमस्तेजनकमेणज्येष्ठभ्रात्रादिस्स्यादिति
चन्द्रिकादयः ॥ हेमाद्रिस्तुतस्यापितुरभावेयः पितृव्यमातुलादिः संस्कुर्यात्सत
त्क्रमात्संस्कार्यपितृक्रमाद्दद्यान्नतुस्वपितृभ्यइतिव्याचख्यौ ॥ समावर्तनस्यापि
विवाहप्राचीनसुतसंस्कारत्वात पितैवनांदीश्राद्धंकुर्यात )॥ तदभावेज्येष्ठभ्राता
दिभिः ॥ तदभावेस्वयमेवकुर्यात ॥ उपनयनेतत्कर्माधिकारस्यज्ञातत्वात ॥ एव
माद्यविवाहेपीतिपृथ्वीचन्द्रोदय चन्द्रिकादयः ॥ मदनरत्नेप्येवम ॥ यदातुपि
तरिसन्न्यस्तेप्रोषितेपतितेवाधर्मार्थंतत्पुत्रस्यान्यः संस्कर्तातदासंस्कार्यपितुः पि
त्रादिभ्योदद्यात ॥ पितरोजनकस्येज्यायावद्व्रतमनाहितम । समाहितव्रतःपश्चा

ताभव्या येऽपितेऽष्टौकृतेऽब्दवाः ॥ मातृपितृकेचतस्रः मातामहीपितृकेचेत्यष्टा
वितिहेमाद्रिः ॥ अत्रापिच्येप्राङ्मुखाविप्राः ॥ पाद्येऽपिच्येचतुरस्रंमण्डलमिति
जयन्तः (हेमाद्रौब्राह्मे) विप्रान्प्रदक्षिणावर्तंप्राङ्मुखानुपवेशयेत (छन्दोगपरि
शिष्टे) गोत्रनामभिरामंत्र्यपितृभ्योऽर्घ्यंप्रदापयेत ॥ नात्रापसव्यकरणंनपित्र्यं
तीर्थमिष्यते ॥ ज्येष्ठोत्तरकरान्युग्मान्करायाग्रपवित्रकान् । कृत्वार्घ्यंसंप्रदात
व्यं नैकैकस्यात्रदीयते ॥ मिश्रादेवाद्यौविप्रौतयोर्दक्षिणहस्तौसंयोज्यप्रथमोप
वेशितविप्रकरोपरितंयेनाद्वयोरर्घ्यंस्यादित्यर्थः ॥ बह्वृचकारिकायांतुदत्ता
घ्यादिकदेशःस्याद्दर्घ्यदानंप्रतिद्विजम् । आवृत्तिरापिमंत्रस्यप्रतिब्राह्मणमिष्यते ॥
प्रतिद्विजंपृथक्कुर्यान्निवीत्यर्घ्यानुमंत्रणमित्युक्तम ॥ मधुमध्वितियवशाकिसंज्ञपो
मितुमिच्छताम । गायत्र्यानंतरंस्तोत्रं मधुसंज्ञंविवर्जितम ॥ गत्वाप्तनन्तुजपेन्नक
दाचित्पितृसूक्तकम (तथा) संपन्नमितितृप्ताःस्थ प्रश्नस्थानेविधीयते । सुसंपन्न
मितिप्रोक्ते शेषमन्नंनिवेदयेत ॥ असव्योदकदानञ्च अर्घ्यदानवदिष्यते । य
थयैवानियतंकुर्यान्नतुदर्भास्तरंवचन (छन्दोगपरिशिष्टे) पठेच्छकुनिसूक्तन्तु स्व
स्तिसूक्तंशुभंतथा । नान्दीमुखान्पितॄनत्र प्रजापत्याञ्जलिमाह्वयेत (तथा)
माल्यैर्नन्दीमसम्वक्तं वरदाशिषवांस्तथा । अन्नशोभितवेतुचतुरः पिण्डानक्षो
फलसन्निभान ॥ दद्यान्नान्दीमुखेभ्यश्च पितृभ्योविधिपूर्वकम । द्राक्षामलक
मूलानि यवांश्चाविनियोजयेत ॥ तान्येवदक्षिणार्थंतु दद्याद्विप्रेषुसर्वदा (तत्रैव
चतुर्विंशतिमते) द्वौद्वौचाभ्युदयेपिण्डावेकैकस्मैविनिःक्षिपेत । एकैकनाम्नापरं
तूष्णीं दद्यात्पिण्डानपृथक्पृथक (वसिष्ठः) प्राङ्मुखोदेवतीर्थेन प्राक्कूलेषुकु
शेषु च । दत्त्वापिण्डान्प्रकुर्वीतपिण्डदानमसंमुखम ॥ नान्दीमुखेभ्यःपितृभ्यः
स्वाहेतिवापिण्डदानसंबन्धितवृत्तिः ॥ अत्रपिण्डाःकृताकृता इत्युक्तम (तत्रैवभ
विष्ये) पिण्डनिर्वपणंकुर्यान्नवाकुर्याद्विचक्षणः । वृद्धिश्राद्धेमहाबाहो कुलध
र्मानवेक्ष्यतु (छागलेयः) अग्नौकरणमर्घ्यंवा वाहनंचावनेजनम । पिण्डःश्रा
द्धेप्रकुर्वीत पिण्डहीनेनिवर्तते ॥ तेनात्रभोजनस्यैवप्रधानत्वादर्घ्यादिविप्रस्यवसनं
तदातस्यैवपार्वणस्यपुनरावृत्तिरितिसिद्धम ॥ अत्रसांकल्पेविशेषः प्रयोगपारि

ज्ञातेसंग्रहे । शुभार्थीप्रथमान्तेन वृद्धौसांकल्पमाचरेत् ॥ नयस्त्वायदिवाकुर्या न्महादोषोभिजायते । नामगोत्रादिनिर्देशेष्वेवनतुसपिण्डके श्राद्धेइतिसएव॥ अत्रायंक्रमः ॥ नान्दीश्राद्धेदैवेक्षणः क्रियतामितिद्वौयुगपन्निमंत्र्यश्रोंतथेति विप्राभ्यांयुगपदुक्तेप्राप्नुतांभवन्तौप्राप्नुवावइतिवैश्वदेववत् पित्र्येचाद्विवचनान्तेन विप्रद्वयेप्रयोगंकुर्यात् (आहिताग्निस्तुहेमाद्रौब्राह्मे) अग्नौतुविद्यमानेपि वृद्धौ पिण्डान्निर्वपेत् । पतन्तिपितरस्तस्यनरकेसचपच्यते (बह्वृचपरिशिष्टे) द्वौद्वौ भोजयेद्विप्रौविप्राणांचत्वारि ॥ शन्नोदेवीत्यनुमंत्रितासुयवानावपेत् ॥ यवोसि सोमदेवत्यो गोसवेदेवनिर्मितः । प्रत्नवद्भिःप्रत्तःपुष्ट्यानान्दीमुखान्पितॄन् लिमाल्लोकान्प्रीणयाहिनः स्वाहेतिस्वाहार्घ्या इतिपृच्छति ॥ विश्वेदेवाइदंवोअर्घ्यं नान्दीमुखाःपितरइतियथालिंगमर्घ्यदानंगन्धादिदानंद्विद्विः ॥ पाणौहोमोग्नयेकव्यवाहनायस्वाहा सोमायपितृमतेस्वाहेत्यतोदेवाअवन्तुनइत्यंगुष्ठग्रहणं ॥ पावमानीःशंवतीरिंद्रप्रतिरथंच श्रावयेन्मधुवाताऋचः स्थानेउपास्मैगायतेतिपंचमधुमतीःश्रावयेदक्षन्नमीमदन्तेतिच षष्ठीभुक्तवत्सुद्वयोरेकैकस्यद्वौद्वौपिण्डौदद्यादिति (चन्द्रिकायांवृद्धवसिष्ठः) पितृप्रश्नेतुसम्पन्नं दैवेरुचितमित्यपि । दधिकर्कन्धुमिश्राश्च पिण्डाःकार्यायथाक्रमम् (कात्यायनः) त्यमूषुवाजिनमिति विप्रांश्चविसर्जयेत् । नान्दीमुखाःपितरःप्रीयन्तामित्यक्षय्यस्थानेस्वधावाचयिष्यइत्यस्यस्थानेनान्दीमुखान्पितॄन्वाचयिष्येइति ॥ नस्वधांप्रयुंजीतेति ॥ अत्र साग्निरनग्निर्वाआदौवैश्वदेवंकुर्यात् ॥ आदौवृद्धौक्षयेचांतेमध्येश्राद्धेतुपार्वणे ॥ एकोद्दिष्टेनिवृत्तंतुवैश्वदेवोविधीयते इत्याश्वलायनपरिशिष्टात् (हेमाद्रौतु) शेषमन्नमनुज्ञाप्यवैश्वदेवक्रियान्ततः । श्राद्धाह्निश्राद्धशेषेण वैश्वदेवंसमाचरेदिति चतुर्विंशतिमतान्नान्दीश्राद्धेप्यन्तेवैश्वदेवउक्तः ॥ बह्वृचानामपिवृत्त्यालोचनात्तथैव ॥ पूर्वोक्तन्तुयेषांपारिशिष्टंतद्विषयमन्यद्विषयंवाज्ञेयम् ॥ अत्रश्राद्धांगतर्पणंनेत्युक्तंप्राक् ॥

इतिनिर्णयसिन्धौवृद्धिश्राद्धम् ॥

—*—

( अथजीवत्पितृकश्राद्धम् ) तत्रानेकपक्षाद्दृश्यंते ॥ जीवंतंपितरंभोजयित्वाप
रयोःश्राद्धंकुर्यादित्येकः ॥ होमांतमेवकुर्यादित्यन्यः ॥ होमांतःपितृयज्ञःस्या
ज्जीवेपितरिजानतः । पितरंभोजयित्वावापिंडान्निपृणुयात्परावितियज्ञपार्श्वो
क्तेः ॥ यदिजीवत्पितानदद्यादाहोमात्कृत्वाविरमेदित्यापस्तंबोक्तेश्च ॥ जीव
तांपिंडानग्नौहुत्वापरेभ्योदेयमित्यपरः ॥ जुहुयाज्जीवेभ्यइत्याश्वलायनोक्तेः
जीवतामजीवतांवापिंडदानमितीतरः ॥ जीवतामजीवतांवादेयमेवेतिहिरण्य
केशिरितिनिगमात् ॥ तस्माज्जीवत्पिताकुर्यात्तदाभ्यामेवनसंशयइतिभविष्योक्ते
र्द्वाभ्यामेवेत्यन्यः ॥ एतेपक्षाःकलौनिषिद्धाः ॥ प्रत्यक्षमर्चनंश्राद्धेनिषिद्धंमनुर
ब्रवीत् । पिंडनिर्वपणंचापिमहापातकसंमितमितिपृथ्वीचन्द्रोदयेभविष्योक्तेः
चंद्रिकाप्येवं तस्मात्पितरिजीवतिश्राद्धानारंभएवेत्येकःपक्षः ॥ सपितुःपितृकृ
त्येषुअधिकारोनविद्यतइतिकात्यायनोक्तेः ॥ जीवेपितरिवैपुत्रःश्राद्धकालंवि
वर्जयेदितिहारीतोक्तेश्च ॥ पितुःपित्रादिभ्योदद्यादितिसिद्धांतः म्रियमाणेतु
पितरिपूर्वेषामेवनिर्वपेदितिमनूक्तेः ॥ पितुःपितृभ्योवादद्यात्सपितेत्यपराश्रु
तिरितिकात्यायनोक्तेश्च ॥ अयंबहुसंमतःपक्षः ॥ अन्येशाखाभेदेनज्ञेयाः ॥
एवंजीवन्मातामहेनाप्यूहेनकार्यम् ॥ मातामहानामप्येवंश्राद्धंकुर्याद्विचक्षणः
मंत्रोहेनयथान्यायंशेषाणांमंत्रवर्जितमितिविष्णूक्तेः ॥ एवंमात्रादिकस्यापितथा
मातामहादिकेइतिपृथ्वीचंद्रोदयेऽग्निपुराणाच्च ॥ पितरिजीवतितुस्वमातरिमृ
तायामपिपितुरेवमातृमातामहयोःकुर्यात् ॥ येभ्यएवपितादद्यादितिवक्ष्यमा
णवचनादितिपितामहचरणाः ॥ मदनरत्नेतुजीवत्पितास्वमातामहयोर्दद्यादि
त्युक्तं ॥ कालादर्शेप्येवम् ॥ मृतेतुपितरिजीवन्मातृकःपितामह्यादिभ्योवृद्धौद
द्यादितिस्मृतितत्त्वादिगौडग्रन्थाः ॥ ( दाक्षिणात्यास्तु ) पितृवर्गेमातृवर्गेतथा
मातामहस्यच । जीवेत्तुयदिवर्गाद्यस्तंवर्गंतुपरित्यजेदितिवचनात्तद्वर्गत्यागएवे
त्याहुः ॥ एवंपतितसंन्यस्तपितृकादेरपिज्ञेयं ॥ वृद्धौतीर्थेचसंन्यस्तेतातेचपति
तेसति । येभ्यएवपितादद्यात्तेभ्योदद्यात्स्वयंसुतइतिषट्त्रिंशन्मतात् ॥ संन्यस्ते
जीवतीत्यर्थः मृतेतुसंन्यस्तेतदाद्येभ्यएवदेयम् ॥ मृतेपिपरेभ्यएवेतिगौडाः ( का

त्यायनोऽपि ) ब्राह्मणादिहतेतातेपतितेसंगवर्जिते । व्युत्क्रमाच्चमृतेदेयंयेभ्यएव
ददात्यसौ ॥ अयंचसंन्यस्तपित्रादेरपिज्ञेयःतत्सर्वश्राद्धेधिकारः ॥ सत्यंत्वदंडिप
रस्य एकादशाहपार्वणवार्षिकाद्यपितस्यैव ॥ अहन्येकादशेप्राप्तेपार्वणंतुविधीय
ते । इत्युक्त्वा ॥ त्रिदंडग्रहणादेवप्रेतत्वंनैवजायतेइतुमानसोविशेषोक्तेः ॥ ब्राह्म
णादिहतेइत्यादिनिषेधस्त्वेकदंडादिपरः ॥ अतःपरमहंसानांवार्षिकादिक
मपिनकार्यमितिशूलपाणिश्राद्धतत्त्वादयोगौडग्रन्थाः इदमेवतुयुक्तं॥( यत्तुहेमा
द्रौकौंडिराय: ) दर्शश्राद्धंगयाश्राद्धंश्राद्धंचापरपाक्षिकम् । नजीवत्पितृकःकुर्या
त्तिलैस्तर्पणमेवच॥इतितत्संन्यस्तपित्राद्यतिरिक्तविषयम्( मैत्रायणीयपरिशिष्टे )
उद्वाहेपुत्रजननेपित्र्यां इष्ट्यांसौमिकेमखे । तीर्थेब्राह्मणआयातेषडेतेजीवतः पि
तुः ( तत्रैव ) महानदीषुसर्वासुतीर्थेषुचगयामृते । जीवत्पितापिकुर्वीतश्राद्धं
पार्वणधर्मवित् ॥ गयामृतेइतिमातृव्यतिरिक्तविषयम् ॥ अन्वष्टक्यं गयाप्राप्तौ
सत्यांयच्चमृतेहनि । मातुःश्राद्धंसुतःकुर्यात्पितर्यपिचजीवतीतितत्रैवोक्तेः ॥
गयाप्राप्तौप्रासंगिक्याम् ॥ गयांप्रसंगतोगत्वामातुः श्राद्धंसमाचरेदितिवचनात्
तेनमृतमातृकोगयायांतत्पार्वणमात्रंकुर्यात् । तज्जीवनेतुतीर्थश्राद्धमपिनेतिका
लादर्शेस्मृतिदर्पणादयः ॥ अन्येतुगत्वाश्राद्ध नेतिनिषेधार्थः ॥ सामान्यतःप्राप्तं
तीर्थश्राद्धंभवत्येवगयायामित्याहुः ॥ यदातुपितुःप्रीतिनिमित्तेनगयांयातित
दायजमानस्यपितृपितामहप्रपितामहाइत्येवंश्राद्धम् ॥ तत्रमातुःपितृपत्नीत्वेनै
कोद्दिष्टंकृत्वामातृत्वेनपुनःपार्वणंकुर्यादितित्रिस्थलीसेतौ ॥ तच्चफल्गुवि
ष्णुपदाक्षय्यवटेष्वेवेतिकेचित् ॥ आद्यांतएवेत्यन्ये ॥ मध्यमांतेइत्यपरे॥ संकोचे
हेत्वभावात्तत्रत्यसर्वश्राद्धानिमातुःकार्याणीत्युक्तंप्रतिभाति ( यत्तुमदनपारि
जाते ) नजीवत्पितृकःकुर्याच्छ्राद्धमग्निमृतेद्विजः । येभ्यएवपितादद्यात्तेभ्यः
कुर्वीतसाग्निकइतिसुमंतूक्तेः ॥ साग्नेरेवजीवत्पितृकस्यतीर्थादिश्राद्धमुक्तं ॥
साग्नेरपिमैत्रायणीयशाखीयस्यैवनान्येषाम् ॥ षडेतेजीवतःपितुरितितत्परि
शिष्टएवोक्तेरितिरत्नावलीदिवोदासाद्यास्तदयुक्तम् सौमंतवंपिंडपितृयज्ञवि
षयंसंन्यस्तपित्राद्यतिरिक्तविषयंवेतिपृथ्वीचंद्रोदयोक्तेः ॥ एतच्चतीर्थेचेत्यादेः

साधारण्येनास्यापितथात्वाच्च ॥ तथाग्निरग्नेरपिनांदीश्राद्धमुक्तंप्राक् ॥ एवं
पितामहजीवनेपिज्ञेयम् ॥ विशेषः पितृकृत्तंजीवत्पितृकनिर्णयेज्ञेयः ॥ अथपिता
महेजीवतिमृतेचपितरियद्यपिपितामहोवाऽश्नीयाद्भुंजीतेत्यब्रवीन्मनुरितिमनु-
नाजीवतःपितामहस्यभोजनमुक्तम् । तथापिप्रत्यक्षार्चनस्यपूर्वंनिषिद्धत्वात्पिता
महंविहायपितृप्रपितामहवृद्धप्रपितामहेभ्योदेयम् । पितायस्यतुवृत्तःस्याज्जी
वेच्चापिपितामहः । पितुःसनामसंकीर्त्यकीर्तयेत्प्रपितामहमितिमनूक्तेः ॥ अ
यमेवसर्वसंमतःपक्षः ( यत्तु छंदोगपरिशिष्टे ) पितामहेध्रियमाणेपितुःप्रेतस्य
निर्वपेत् ॥ पितुस्तस्यचवृत्तस्यजीवेच्चेत्प्रपितामहइत्येकपुरुषंहिपुरुषंवापा
र्वणमाहतत्तीर्थपितृयज्ञपरम् ॥ वृद्धौपूर्वोक्तमेव ॥ एवंपूर्वयोर्मृतयोःप्रपिताम
हेजीवतिपितृमात्रेमृतेपरयोर्जीवतोःपूर्ववद्वृद्धप्रपितामहादिभ्योज्ञेयं ॥ जीवंतम
तिदद्याद्वाप्रेतायान्नोदकेद्विजइतिकात्यायनोक्तेश्च ( एतत्सर्वंमनसिकृत्वाऽऽह
हेमाद्रौविष्णुः ) पितरिजीवतियाश्राद्धंकुर्याद्येषांपिताकुर्यात्तेषांपितरिपितामहे
चजीवतियेषांपितामहः पितरिपितामहेप्रपितामहेचजीवतिनैवकुर्यात् । यस्य
पिताप्रेतः स्यात्सपित्रेपिंडंनिधायपितामहात् पराभ्यांद्वाभ्यांदद्यात् ॥ यस्य
पिताप्रपितामहश्च प्रेतौस्यातांसपित्रे पिंडंनिधायपितामहात् पराभ्यांदद्यात्
यस्यपितामहःप्रेतःस्यात्सतस्मैपिंडंनिधायप्रपितामहात्पराभ्यांदद्यात् ॥ यस्यपि
तापितामहश्चप्रेतौस्यातांसताभ्यांपिण्डौदत्वा पितामहप्रपितामहायदद्यात् ॥
मातामहानामप्येवं श्राद्धं कुर्याद्विचक्षणः । मंत्रोहेनयथान्यायं शेषाणांमन्त्रव
र्जितमिति ॥ अत्रपितृवन्मातामहेजीवति तत्पित्रादिभ्यःयथातत्रत्रिषुजीवत्सुनै
वकुर्यात्तथात्रापीत्यादिसर्वमतिदेष्टव्यम् ॥ एवंमातृजीवनेपीतिशूलपाणिकाला
दर्शौ ( तन्न ) येभ्यएवेत्यादौयच्छन्दादेर्व्यक्तिविशेषवाचित्वेनतद पिप्रसंगादि
तिदिक् । उत्तरार्धंव्याख्यातंप्राक् ॥ यत्त्वत्रविज्ञानेश्वरेणोक्तम् ॥ पित्रेपिंडंनिधा
येतिपितुरेकोद्दिष्टविधिनाश्राद्धंकृत्वा प्रपितामहादिभ्यःपार्वणंकुर्यात् ॥ तदयु
क्तममृतसपिंडीकरणाभावपक्षेसपिंडीकरणस्थानापन्नंज्ञेयं ॥ व्युत्क्रमात्तु
प्रमीतानांनैवकार्यासपिंडतेतिवचनात् ॥ दर्शादौतुपितुरेकोद्दिष्टमेवकार्यम् ॥

नजीवंतमतिदद्यातीतिश्रुतेः ॥ जीवत्पितामहोयस्यपिताचांतरितोभवेत् ॥ पितुरे कस्यदातव्यमेवमाहुर्मनीषिणइतियज्ञपार्श्वोक्तेः ॥ पितामहेजीवतिवैपितरि एवसमापयेदितिहारीतोक्तेश्च ( शिष्टास्तु ) व्युत्क्रमात्तुप्रमीतानांनैवकार्यास पिंडतायदिमातायदिपिताभर्तानैषविधिःस्मृतइति ॥ माधवीयेस्कांदोक्तेर्व्युत्क्र ममृतसपिंडीकरणाभावःपित्रव्यादिविषयइत्याहुः ॥ एषविधिर्निषेधरूपः ॥ त्रि षुजीवत्सुविष्णुराह ॥ त्रिषुजीवत्सुनैवकुर्यादितितद्दर्शादिविषयं ॥ नान्दीश्राद्धं तुपरेभ्यस्त्रिभ्योभवत्येवेतिकल्पतरुः ( पृथ्वीचन्द्रोदयस्तु ) दद्यात्त्रिभ्यःपरेभ्य स्तुजीवेच्चेत्त्रितयंयदीतिमन्तूक्तेः ॥सर्वत्रविकल्पः ॥ सचदेशाचाराद्व्यवस्थित इत्याहुः ॥सुदर्शनभाष्येतुमासिकश्राद्धंजीवत्पित्रादिनाव्युत्क्रममृतपित्रादिनाच कार्यमेवेत्युक्तं ( मदनरत्नेऽपि तु: ) अष्टकादिषुसंक्रांतौमन्वादिषुयुगादिषु । चंद्र सूर्यग्रहेपातेस्वेच्छयापूज्ययोऽगतः ॥ जीवत्पितानैवकुर्याच्छ्राद्धंकाम्यंतथाखिल म ॥अन्येविशेषाःश्रीपितृकृतजीवत्पितृकनिर्णयेभट्टकृतत्रिस्थलीसेतौचज्ञेयाः

इतिनिर्णयसिन्धौजीवत्पितृकादिश्राद्धं ॥

( अथविभक्ताविभक्तनिर्णयः ॥ पृथ्वीचन्द्रोदयेमरीचिः ) बहवःस्युर्यदापु त्राःपितुरेकत्रवासिनः । सर्वेषांतुमतंकृत्वाज्येष्ठेनैवतुयत्कृतं ॥ द्रव्येणचाविभक्तेन सर्वैरेवकृतंभवेत् ॥ ज्येष्ठस्यकर्तृत्वेपिसर्वेफलभागिनइत्यर्थः ॥ तेनयेब्रह्मचर्या दिनियमास्तेफलितसंस्कारत्वात्सर्वैःकार्याः ॥ एवंसंसृष्टिनामपितुल्यत्वात् ( मि ताक्षरायांनारदः ) भ्रातृणामविभक्तानामेकोधर्मःप्रवर्तते । विभागेसतिधर्मोपिभ वेत्तेषांपृथक्पृथक् ( बृहस्पतिरपि ) एकपाकेनवसतांपितृदेवद्विजार्चनं । ए कंभवेद्विभक्तानां तदेवस्याद्गृहेगृहे ॥ अत्रयद्यप्यविशेषश्रवणात्ब्रह्मयज्ञसंध्या दिष्वप्यविभक्तानांपृथङ्निषेधःप्राप्नोतितथापिद्रव्यसाध्यश्राद्धवैश्वदेवादिष्वेव सः ॥ द्रव्यस्यानेकस्वामिकत्वेनैकस्यव्ययेनाधिकारात् ॥ यानितुद्रव्यासाध्यानि मंत्रजपोपवाससंध्याब्रह्मयज्ञपारायणादीनिनित्यनैमित्तिककाम्यानितेषुपृथगे वाधिकारः ॥ द्रव्यव्ययाभावेनुमत्यनपेक्षणात् ॥ द्रव्येणचाविभक्तेनेत्यस्याविष यत्वात् ॥पृथगप्येकपाकानांब्रह्मयज्ञोद्विजातिनाम् । अग्निहोत्रंसुरार्चाचसंध्या

नित्यंभवेत्तथेतिप्रयोगपारिजातेआश्वलायनस्मृतेश्च॥अग्निहोत्रशब्दोग्निसाध्य श्रौतस्मार्तनित्यकर्मपरःतेष्वप्यन्यानुमत्यैवाधिकारेणान्यायसाम्यात्॥ पितृश्रा द्धादिषुतुल्यफलेषुनित्येष्वनुमतिंविनाप्येकस्याधिकारः॥ एकोपिस्थावरेकु र्याद्दानाध्ययनविक्रयम्।आपत्कालेकुटुम्बार्थेधर्मार्थेचविशेषतइतिवचनात्॥ धर्मार्थेप्यकर्तव्ये पितृश्राद्धादावितिविज्ञानेश्वरः॥ केचित्त्वविभक्तानामपि पृथक्पाकत्वेदेशांतरेचदार्शिकाब्दिकयोःपृथक्त्वमाहुः॥भ्रातॄणामविभक्ता नां पृथक्पाकोभवेद्यदि। वैश्वदेवादिकंश्राद्धंकुर्युस्तेवैपृथक्पृथगिति हारीतो क्तेः॥ अविभक्तेनपुत्रेण पितृमेधोमृताहनि॥ देशान्तरेपृथक्कार्योदर्शश्राद्धन्त थैवचेतिधर्मोक्तेश्चेतितत्रमूलंचिंत्यम्॥ तदयमर्थः॥पंचमहायज्ञमध्येदेवभूतपि तृमनुष्ययज्ञानन्यानुमत्याज्येष्ठएवकुर्यात् ॥ होमाग्रदानरहितंनभोक्तव्यंकदा चन॥ अविभक्तेषुसंसृष्टेष्वेकेनापिकृतंकृतमितिव्यासोक्तेश्च ॥ यस्यतुज्येष्ठे नाकृतेवैश्वदेवेऽन्नंसिद्धं तेन तूष्णीमग्नौकिंचित्क्षिप्त्वाभोक्तव्यम्॥ यस्यत्वे षामग्रतोन्नंसिद्ध्येत्सनियुक्तमग्नौकृत्वाग्रंब्राह्मणा यदत्त्वाभुंजीतेत्यविभक्ताधि कारेपृथ्वीचन्द्रोदयेगोभिलोक्तेः॥ आश्वलायनस्तुपाकपार्थक्येपृथक्त्वंतदे कत्वेऽपृथक्त्वमाह ॥ वसतामेकपाकेनविभक्तानामपिप्रभुः। एकस्तुचतुरो यज्ञान्कुर्याद्धाव्यज्ञपूर्वकान् ॥ अविभक्ताविभक्तावापृथक्पाकाद्विजातयः॥ कुर्युःपृथक्पृथग्यज्ञान्भोजनात्प्राग्दिनेदिनइति ॥ ब्रह्मयज्ञसंध्यास्नानतर्पणा दिनूक्तहेतोःपृथगेव ॥ देवपजातूक्तवचनद्वयादेकत्रपृथग्वा ॥ दर्शग्रहण श्राद्धादित्वेकस्यैव ॥ तीर्थश्राद्धाद्यपियुगपत्सर्वेषामविभक्तानांप्राप्तावेकस्य भेदेनप्राप्तौभिन्नं॥गयाश्राद्धेप्येवं ॥ एष्टव्याबहवःपुत्राःशीलवन्तोगुणान्वि ताः। तेषांतुसमवेतानांयद्येकोपिगयांव्रजेत्॥ तारितास्मोवयंतेनसयातिपर मांगतिमितिहेमाद्रौ कौर्मोक्तेः ॥ काम्येपिदानहोमादावन्यानुमत्यैवाधिका रः॥द्रव्यासाध्यजपादौतांविनापि (अपरार्केपैठीनसिः) विभक्तैस्तुपृथक्कार्यं प्रतिसंवत्सरादिकम्।एकेनैवाविभक्तेषुकृतंसर्वैस्तुतत्कृतम् ॥ सांवत्सरात्पू र्वाणिमासिकान्येकत्रैव (तदाहलघुहारीतः) सपिंडीकरणांतानियानिश्राद्धा

नियोडश । पृथङ्नैवसुताःकुर्युःपृथक्द्रव्याअपिक्कचित ॥ सपिंडनंमासिकोप लक्षणम्॥ अर्वाक्संवत्सराज्ज्येष्टःश्राद्धंकुर्यात्समेत्यतु । ऊर्ध्वंसपिंडीकरणात्स र्वेकुर्युःपृथक्पृथगितिव्यासोक्तेः (उशनाः) नवश्राद्धंसपिंडत्वंश्राद्धान्यपिच षोडश । एकेनैवतुकार्याणिसंविभक्तधनेष्वपि ॥ मघात्रयोदशीश्राद्धंत्वविभ क्तानामपिपृथगित्युक्तंप्राक् (यत्तुवृद्धवसिष्ठः) मासिकंचत्द्वयोत्सर्गंसपिंडीक रणंतथा । ज्येष्ठेनैवप्रकर्तव्यमाब्दिकंप्रथमंतथेतितन्निर्मूलम ॥ वहवृचपरि शिष्टेनवश्राद्ध सहदद्युः ॥ अथतीर्थश्राद्धम ॥ तत्रयद्यप्यस्मत्पितामहकृतत्रिस्थ लीसेतुरेवजागर्तितथापिकिंचिदुच्यते (तत्रयात्रायां) सहाग्निर्वासपत्नीकोग च्छेत्तीर्थानिसंयतः । प्रायश्चित्तीव्रतीतीर्थंपत्नीविरहितोपिवा ॥ यज्ञेष्वनधि कारीवायश्चवामंत्रसाधकइतिकौर्मादिवचनात्साग्नेः सपत्नीकस्यैवाधिकारः (भारते) ब्राह्मणाःक्षत्रियोःवैश्यःशूद्रोवाराजसत्तम । नवियोनिंव्रजंत्येतेस्नाना त्तीर्थेमहात्मनः (स्कांदेविधवाधर्मेषु) स्नानंदानंतीर्थयात्रांविष्णुनामग्रहंमुहुः । एततपुत्राद्यनुमत्यैव ॥ सधवायाःपत्यासहैवेतिप्रागुक्तम (काशीखंडे) मातुःपि तुःसेतुमनास्तथास्थिमुतस्तुकुर्यात्खलुतीर्थयात्राम (तद्विधिःस्कांदे) तीर्थया त्रांचिकीर्षुःप्राग्विधायोपोषणंगृहे । गणेशंचपितृन्विप्रान्साधूनशक्त्याप्रपू ज्यच ॥ कृतपारणकोत्हृष्टोगच्छेन्नियमधृक्पुनः । आगत्याभ्यर्च्यचपितृनय थोक्तफलभाग्भवेत ॥ उपवासात्प्राग्मुंडनंचकार्यम ॥ प्रयागेतीर्थयात्रायांपित मातृवियोगतः । कचानांवपनंकुर्याद्वृथानविकचोभवेदितिविष्णूक्तेः ॥ प्राय श्चित्तार्थयात्रायांगयायांचेतदित्येके (केचित्तुहेमाद्रौभारते) केशश्मश्रुन खादीनांवपनंनचशस्यते । अतोनकार्यंवपनंगयाश्राद्धार्थिनासदा । येभारते स्मिन्पितृकर्मतत्पराःसंधार्यकेशान्नतिभक्तिभाविताः । ऋणक्षयार्थंपितृतीर्थ मागतास्तेषामृणांसंक्षयमेष्यतिध्रुव मितिनिषेधात ॥ गयायात्रांगंवपनंनकार्य मित्याहुः (वस्तुतस्तु) गयाधिकरणकस्यैवायंनिषेधः ॥ नतुयात्रांगस्यश्राद्धा र्थिनेत्युक्तेः ॥ विशालंविरजंगयामित्यनेनैकवाक्यत्वाच ॥ श्राद्धं चधरणावहा दशस्वैवतंवाघृतेनकार्यम ॥ गच्छेद्देशांतरंयस्तुश्राद्धं कुर्यात्ससर्पिषेतिविष्णुपुरा

णात् ॥ यात्रांगवृद्धिश्राद्धोक्तेश्च ॥ श्राद्धञ्चपारणादिनएव ॥ उपोष्यरजनी
मेकांप्रातःश्राद्धंविधायच । गणेशंब्राह्मणान्नत्वाभुक्त्वाप्रस्थितवान्सुधीरिति
स्कांदलिंगात् (गौडनिबंधेगौतमः) तीर्थयात्रासमारंभेतीर्थात्प्रत्यागमेपिच । वृ
द्धिश्राद्धंप्रकुर्वीतबहुसर्पिःसमन्वितम् ॥ वृद्धिपदंतद्धर्मार्थंश्राद्धोत्तरंयात्रासंक
ल्पइतिभट्टाः (वायवीये) उद्यतस्तुगयांगंतुंश्राद्धंकृत्वाविधानतः । विधायका
र्पटीवेषं ग्रामंगत्वाप्रदक्षिणाम् ॥ ततोग्रामांतरंगत्वाश्राद्धशेषस्यभोजनम् ॥
घृतस्यभोजनंतच्चक्रोशमध्येश्राद्धोत्तरंक्रोशागमननिषेधात् ॥ ततःप्रतिदिनंगच्छे
त्प्रतिग्रहविवर्जितः । गयायामेवतन्नान्यत्रेतिकेचित् (हेमाद्रिस्तु) गयायांश्रा
द्धदिनेएवप्रस्थानं ॥ तीर्थांतरेतुश्राद्धोत्तरदिनइत्याहुः (प्रभासखंडे) यश्चान्यंका
रयेच्छक्त्यातीर्थयात्रांनरेश्वरः । स्वकीयद्रव्ययानाभ्यांतस्यपुण्यंचतुर्गुणम् ॥
यात्रामध्येआशौचेरजसिवाशुद्धिपर्यंतंस्थित्वातदंतेगच्छेत् ॥ मार्गवैषम्येत्व
दोषः ॥ यात्रामध्येतीर्थांतरप्राप्तौश्राद्धादिकार्यमेव ॥ वाणिज्याद्यर्थंगतेनतुमुंड
नोपवासादिनकार्यमितिप्रयागसेतौभट्टाः ॥ वस्तुतस्तुतत्रापिमुंडनोपवासश्राद्धा
दिकार्यम् ॥ अर्धंतीर्थफलंतस्ययःप्रसंगेनगच्छतीतिब्राह्मोक्तेः (स्कांदे) द्विभोज
नंतृतीयांशंहरेत्तीर्थफलस्यच । वाणिज्यंत्रींस्तथाभागान्हंतिसर्वंप्रतिग्रहः ॥
यानंधर्मचतुर्थांशंछत्रोपानहमेवचेत्युत्तरार्धपाठांतरम् (अत्रनदीषुविशेषः) मा
र्गेतरानदीप्राप्तौ स्नानादिपरपारतः । अर्वागेवसरस्वत्या सप्तमार्गगतोविधिः
(यत्तु)पितॄन्नसंतर्पयित्वातुनदीस्तरतियोनरः । तस्यास्तत्कपानकामस्तेभवंतिभृश
दुःखिताइतितत्सरस्वतीपरं (शंखः) तीर्थंप्राप्यानुषंगेणस्नानंतीर्थेसमाचरेत् ।
स्नानजंफलमाप्नोतितीर्थयात्राकृतंनतु ॥ सएव ॥ नस्रवंतीमतिक्रामेत् (अनवास
च्यतीर्थंप्राप्तौतुप्रभासखंडे) यानानितुपरित्यज्यभाव्यंपादचरैर्नरैः । लुठित्वालो
ठनींतद्वत्कृत्वाकार्पटिकाकृतिं ॥ कृत्वेतिगृहान्निर्गमसमयेकरणेइदं ॥ प्रथमंचा
लयेत्तीर्थंप्रणावेनजलंशुचि । अवगाह्यततःस्नायाद्यथावन्मंत्रयोगतः (मंत्रश्चप्र
भासखंडे)नमोस्तुदेवदेवायशितिकंठायदंडिने । रुद्रायचापहस्तायचक्रिणेवेधसे
नमः ॥ सरस्वतीचसावित्रीवेदमातागरीयसी । सन्निधात्रीभवत्वत्रतीर्थेपापप्र

णानिशानीतिमंत्रवत्स्नानंचवपनोत्तरंकार्यम् ॥ पूर्वमावाहनंतीर्थेमुंडनंतदनंतरम् ॥
ततःस्नानादिकंकुर्यात्पश्चाच्छ्राद्धंसमाचरेदित्युक्तेः (यत्तु) गत्वास्नानंप्रकुर्वीत
वपनंतदनंतरमितितन्मुशलस्नानपरम् (काशीखंडे) तीर्थोपवासःकर्तव्यःशिरसो
मुंडनंतथा ॥ उपवासेतत्रैवोक्तम् ॥ यदह्नितीर्थप्राप्तिस्यात्तदह्नःपूर्ववासरे । उपवा
सःप्रकर्तव्यःप्राप्तेह्निश्राद्धदोभवेत् (अत्र) उपवासंततःकुर्यात्तस्मिन्नहनिसुव्रतइति
प्राप्तिदिनेप्युपवासोक्तेर्विकल्पः ॥ (मुंडनेतुस्कांददेवलौ) मुंडनंचोपवासश्चस
र्वतीर्थेष्वयंविधिः । वर्जयित्वाकुरुक्षेत्रंविशालांविरजंगयां ॥ विरजंलोणारप्र
सिद्धमहातीर्थंपरःसर्वतीर्थशब्दः ॥ (अत्रविशेषःस्मृत्यंतरे) ऊर्ध्वंमब्दाद्देहमा
सेनात्पुनस्तीर्थंव्रजेद्यदि । मुंडनंचोपवासंचततोयत्नेनकारयेत् ॥ तदातद्वपनंश्म
श्रुतंप्रायश्चित्तस्मृतेर्द्विजेतिपाठः ॥ प्रयागेप्रतियात्रेतुयोजनत्रयइष्यते ॥ क्षौरंकृ
त्वातुविधिवत्ततःस्नायात्सितासिते (तथाचबृहस्पतिः) क्षौरंनैमित्तिकंकार्यंनि
षेधेसत्यपिध्रुवम् । पित्रादिमृतिदीक्षासुप्रायश्चित्तेथतीर्थके (अपरार्केस्कांदे)
उदङ्मुखःप्राङ्मुखोवावपनंकारयेत्सुधीः । केशश्मश्रुलोमनखान्युदक्संस्था
निवापयेत् ॥ इदंप्रयागेसधवानामपिसमूलंभवतीतिभट्टाः (युक्तंतु) सर्वान्केशा
न्समुद्धृत्यछेदयेदंगुलद्वयम् । एवमेवहिनारीणांशस्यतेवपनक्रियेति ॥ तच्चाकृत
चूडानांनकार्यमितिकेचित् ॥ तत्त्वंतुनैमित्तिकत्वात्पित्रादिमृतवत्कार्यमेवेति ॥
तदपिप्रयागेनित्यं ॥ नान्यत्र ॥ तच्चयतिभिस्तीर्थेपि ऋतुसंधिष्वेवकार्यंनान्य
दा ॥ कक्षोपस्थशिखावर्जमृतुसंधिषुवापयेदितिस्मृतेः ॥ इदंजीवत्पितृकेणा
पितीर्थेकार्यम् ॥ नचमुंडनंपिंडदानंचेतिदक्षवचनेननिषेधः ॥ विनातीर्थंविनाय
ज्ञंमातापित्रोर्मृतिंविना । योवापयतिलोमानिसपुत्रःपितृघातकइतिस्मृत्यात
त्संकोचात् ॥ तदपिप्रयागेप्रतियात्रमन्यतीर्थेप्राथम्यात्रायामेवेतिशिष्टाः ॥ त
तःस्नानम् (परार्थेतुमार्कंडेयपुराणे) मातरंपितरंजायांभ्रातरंसुहृदंगुरुं । यमुद्दि
श्यनिमज्जेतअष्टमांशंलभेतसः (पैठीनसिः) प्रतिकृतिंकुशमयींतीर्थवारिणिम
ज्जयेत् ॥ मज्जयेच्चयमुद्दिश्यसोष्टभागफलंलभेत् । ततस्तर्पणश्राद्धेपृथ्वीचंद्रोद
येब्रह्मवैवर्तपुराणकाशीखंडादिषु ॥ अकालेप्यथवाकालेतीर्थश्राद्धंचतर्पणम्

अविलंबेनकर्तव्यंनैवविघ्नंसमाचरेत् (मात्स्ये) पितॄणांचैवतर्पणमितितुर्यपा
दः ॥ तत्रदेवतामहालयेप्रागुक्ताः(शंखदेवलौ)तीर्थद्रव्योपपत्तौचनकालमवधार
येत् । पात्रंचब्राह्मणंप्राप्यसद्यःश्राद्धंसमाचरेत् (हारीतः) दिवावायदिवारात्रौ
भुक्तोवोपोषितोपिवा ॥ नकालनियमस्तत्रगंगांप्राप्यसरिद्वराम् (भारते) भु
क्तोवाप्यथवाभुक्तोरात्रौवायदिवादिवा । पर्वकालेथवाकालेशुचिर्वाप्यथवा
शुचिः ॥ यदैवावश्यतेतत्रनदीचत्रिपथाप्रिय ॥ प्रमाणादर्शनंतस्मान्नकालस्तत्रका
रणं ॥ आशौचेपिकार्यम् ॥ विवाहदुर्गयज्ञेषुयात्रायांतीर्थकर्मणि । नतत्रसूत
कंतद्वत्कर्मयज्ञादिकारयेदितिपैठीनसिस्मृतेः ॥ तदानीमकरणेत्वाशौचांतएव
कुर्यात् (प्रभासखंडे) नवारंनचनक्षत्रंनकालस्तत्रकारणम् । यदैवदृश्यतेतीर्थंत
दापर्वसहस्रकम् ॥ मलमासेपिकार्यं ॥ नित्येनैमित्तिकेकुर्यात्प्रयतःसन्मलिम्लु
चे । तीर्थश्राद्धंगजच्छायांप्रेतश्राद्धंतथैवचेतिबृहस्पतिस्मृतेः ॥ एतच्चाशौचेप्रक्र
तभोजनस्यरात्रौवास्नानश्राद्धादिकमाकस्मिकतीर्थप्राप्तौवामहेमश्राद्धविषयंग्र
हणादिवत् ॥ नतुबुद्धिपूर्वमाशौचादौतीर्थप्राप्तिःकार्या ॥ मलमासेतुमासद्वयेती
र्थश्राद्धंकार्यमितिचंद्रिकायांदेवीपुराणे ॥ श्राद्धंचतत्रकर्तव्यमर्घ्यावाहनवर्जितम्
(हेमाद्रौ) अर्घ्यमावाहनंचैवद्विजांगुष्ठनिवेशनम् । तृप्तिप्रश्नंचविकिरंतीर्थश्राद्धे
विवर्जयेत् (भविष्ये) आवाहनंविसृष्टिश्चतत्रतेषांनविद्यते । आवाहनंनतीर्थे
स्यान्नार्घ्यदानंतथाभवेत् ॥ आहूताःपितरस्तीर्थेकृतार्घ्याःसंतिवैयतः ॥ अग्नौकर
णंचनेतिरत्नावल्यां ॥ अत्रषट्दैवतेश्राद्धेपिमात्रादीनांपिंडमात्रंदेयम् । हविः
शेषंततोमुष्टिमादायैकैकमाहृतः । क्रमशःपितृपत्नीनां पिंडनिर्वपणंचरेदिति
तीर्थोपक्रमदेवलोक्तेरिति पृथ्वीचंद्रः ॥ ततःसामान्यपिंडंदद्यात् ॥ ततःपिंडमु
पादायहविषःसंस्कृतस्यच । ज्ञातिवर्गस्यसर्वस्यसामान्यंपिंडमुत्सृजेदितितेनैवो
क्तेः ( पाद्मे ) तीर्थश्राद्धंप्रकुर्वीतपक्वान्नेनविशेषतः । आमान्नेनहिरण्येनकंद
मूलफलैरपि ( पिंडद्रव्याणिदेवीपुराणेहेमाद्रौब्राह्मेच ) सक्तुभिःपिंडदानंच
संयावैःपायसेनवा । कर्तव्यमृषिभिःप्रोक्तंपिण्याकेनगुडेनवा । पिण्डानांतीर्थ
प्रक्षेपएवनान्याप्रतिपत्तिरित्युक्तंप्राक् ॥ एतच्चविधवयाऽपुत्रयाकार्यम् ॥ नस

पुत्रयेत्युक्तंप्राक् ॥ सपुत्रयानकर्तव्यं भर्तुःश्राद्धंकदाचनेतिस्मृतेश्च ॥ अनुपनी तेनापिकार्यम् ॥ एतच्चानुपनीतोपि कुर्यात्सर्वेषुपर्वस्वितिपाद्मेतीर्थश्राद्धमुपक्रम्योक्तेः ॥ एतच्चजीवत्पितृकेणापिकार्यमित्युक्तंप्राक् ॥ नकुर्यात्सूतकंभिक्षुः श्राद्धपिण्डोदकक्रियां । त्यक्तसंन्यासयोगेनग्रहधर्मादिकंव्रतम् ॥ गोत्रादिचरणांसर्वंपितृमातृकुलंधनमितिस्मृतेः ( गयायांतुकर्तव्यमित्यर्थः ) दण्डंप्रदर्शयेद्भिक्षुर्गयांगत्वानपिण्डदः । दण्डंस्पृष्ट्वाविष्णुपदेपितृभिःसहमुच्यते । गयायांमुण्डपृष्ठेचकूपेयूपेवटेतथा । दण्डंप्रदर्शयन्भिक्षुःपितृभिःसहमुच्यते ( स्कन्दे प्रभासखण्डे ) तीर्थेचैवप्रतिगृह्णातिब्राह्मणोवृत्तिदुर्लभः ॥ दशांशमर्जितंदद्यादेवंकुर्वन्नहीयतेइति ॥ विशेषांतराणिभट्टकृतत्रिस्थलीसेतौज्ञेयानीतिदिक् ॥

इतिकमलाकरभट्टकृतेनिर्णयसिन्धौतीर्थश्राद्धविधिःसमाप्तः ॥

——※——

# अथ आशौचप्रकरणम् ॥



नारायणात्मजःश्रीमद्रामकृष्णस्यसूनुना । कमलाकरसंज्ञेनाशौचंनिर्णीयतेधुना १ (मरीचिः) आचतुर्थाद्भवेत्स्रावः पातःपंचमषष्ठयोः ॥ अतऊर्ध्वंप्रसूतिःस्याद्दशाहंसूतकंभवेत् ॥ स्रावेमातुस्त्रिरात्रंस्यात्सपिण्डाशौचवर्जनम् । पाते मातुर्यथामासं सपिण्डानांदिनत्रयम् ॥ अत्रसर्वत्रमूलंमिताक्षरायांज्ञेयम् ॥ अत्र मासत्रयेत्रिरात्रंस्यादित्यनुवादः ॥ रजस्वलात्वेनैवतत्सिद्धेः ( यद्यप्यनेनचतुर्थमासेपित्रिरात्रंप्राप्नोतितथापि ) षण्मासाभ्यन्तरंयावत् गर्भस्रावोभवेद्यदि । तदामाससमैस्तासां दिवसैःशुद्धिरिष्यते ॥ इत्यादिपुराणात् । रात्रिभिर्मासतुल्याभिर्गर्भस्रावेविशुद्ध्यतीतिमनूक्तेः ॥ गर्भस्रावेयथामासमचिरेत्तूत्तमेत्र्यहः

तिमरीच्युक्तेश्चतूरात्रंज्ञेयम् ॥ अचिरेत्रिमासमध्ये ॥ उत्तमेब्राह्मणे ॥ अन्नस पिण्डानांस्नानम् ॥ सद्यःशौचंसपिण्डानां गर्भस्यपतनेसतीतितत्रैवोक्तेः ॥ एतदाचतुर्थमासात्स्रावपातेत्रिदिनस्योक्तेः ॥ अकारणायाःशुद्धेरसम्भवात्सद्यःप दंस्नानपरम् ॥ एवमग्रेपि ॥ गर्भस्रावेस्नानमात्रंपुरुषस्येतिवृद्धवशिष्ठोक्तेः ॥ पु रुषस्येतिसपिण्डोपलक्षणम् ॥ पूर्वोक्तवचनात् ॥ आचतुर्थमासंसपिण्डानां स्नानंकिन्तुपुंसएव ॥ पातेत्रिदिनंनिर्गुणपरम् ( गुणवतस्तु ) अजातदन्तेतनये शिशौगर्भच्युतेतथा । सपिण्डानान्तुसर्व्वेषामेकरात्रमशौचकमितियमोक्तेरे काहइतिमदनपारिजातः ॥ सप्तममासादिदशाहम् ॥ एतत्सर्व्ववर्णविषयम् ॥ तुल्यंवयसिसर्वेषामतिक्रान्तेतथैवचेतिव्याघ्रोक्तेः (पराशरः) जातेविप्रोदशा हेन द्वादशाहेनभूमिपः । वैश्यःपंचदशाहेनशूद्रोमासेनशुद्ध्यति (संवर्तः) जाते पुत्रेपितुःस्नानं सचैलन्तुविधीयते । माताशुद्ध्ये द्दशाहेनस्नानात्तुस्पर्शनंपितुः ॥ पुत्रपदात्कन्योत्पत्तौनपितुःस्नानमितिहारलतायाम् ॥ तन्न पुत्रपदस्यपौत्रीमा तामहस्तेनेतिकन्यायामपिप्रयोगात् ( यच्चतत्रैवोक्तम्) सूतकेतुमुखंदृष्ट्वा जात स्यजनकस्ततः । कृत्वासचैलंस्नानन्तु शुद्धोभवतितत्क्षणादित्यादित्यपुराणा न्मुखदर्शनोत्तरमेवपितुःस्नानमिति ॥ तन्न ॥ विदेशेमुखदर्शनाभावेऽस्पृश्यताप त्तेः ॥ मुखदर्शनोत्तरंपुनः स्नानार्थमिदमितिस्मार्तगौडाः ॥ तन्न ॥ मलेकोन ज्ञानमात्रपरत्वात् ॥ इदंसर्ववर्णसमम् ॥ सूतिकासर्ववर्णेषु दशरात्रेणशुद्ध्यति ऋतौचनपृथक्शौचं सर्व्ववर्णेष्वयंविधिरितिहारलतायांप्रचेतसोक्तेः (यत्तु ब्राह्मे) ब्राह्मणीक्षत्रियावैश्या प्रसूतादशभिर्दिनैः । गतैःशूद्राचसंस्पृश्या त्रयो दशभिरेवचेति (प्रयोगपारिजातेपारस्करः) द्विजातेसूतिकायास्यात्सादशाहे नशुद्ध्यति । त्रयोदशेऽह्निसंप्राप्ते शूद्राशुद्ध्यत्यसंशय इति तदस्पृश्यत्वपरम् (अंगिराः ) सूतकेसूतिकावर्ज्यं संस्पर्शोनानिषिद्ध्यते । संस्पर्शेसूतिकायास्तु स्नानमेवविधीयते ॥ नाशौचंसूतकेपुंसः संसर्गंचेन्नगच्छति रजस्तत्राशुचिर्ज्ञेयं तच्चपुंसिनविद्यते ॥ संसर्गोमैथुनम् ॥ स्पर्शइत्यन्ये ॥ मातुरेवसूतकम् ॥ तांस्पृश तश्चेतिहारलतायांसुमन्तूक्तेरिति ॥ तन्न ॥ संस्पर्शेसूतिकायास्तु स्नानमेववि

धीयत इति स्नानमात्रोक्तेः ॥ सौमन्तवचनस्यस्नानपर्यंतमस्पृश्यत्वमात्रबोधकत्वात् ॥ एवकारोनालस्पृश्यत्वार्थः (माधवस्तु ) यस्तैःसहसर्पिपराडेऽपि प्रकुर्यात्कश्यनाशनम् । बान्धवोवापरोवापि सदशाहेनशुद्ध्यतीति बृहस्पतिस्मृतेः (शयनासनादिरूपंसंसर्गमाहपराशरः) यदिपत्न्यांप्रसूतायांद्विजःसंपर्कमृच्छति । सूतकन्तुभवेत्तस्य यदिविप्रःषडंगवित् ॥ पितृवत्सापत्नमातुःप्राक्स्नानादस्पृश्यत्वम् ॥ सूतिकास्पर्शेतुयावदाशौचम् ॥ अन्याश्चमातरस्तद्वत्तद्गृहंनव्रजन्तिचेदितिब्राह्मोक्तेरितिशुद्धितत्त्वादयः ॥ तन्न ॥ तद्गेहंगत्वासूतिकांयदिनस्पृशन्तितदास्पृश्याः ॥ अन्यथानेतितस्यार्थः ( कर्मानधिकारमाहपैठीनसिः ) सूतिकांपुत्रवतींविंशतिरात्रेणकर्माणिकारयेन्मासेनस्त्रीजननीम् ॥ इदमाशौचोत्तरं ॥ अन्यथाशुद्ध्याःसपिंडानामाशौचेतदभावः स्यादित्यनुवादविरोधश्च ॥ एतच्चसोत्यागादिशौतभिन्न[illegible] ॥ प्रजातायाश्चदशरात्रादूर्ध्वंस्नानादीतिकात्यायनोक्तेः(व्यासः)प्रथमेदिवसेषष्ठेदशमेचैवसर्वदा । त्रिष्वेतेषुनकुर्वीतसूतकंपुत्रजन्मनि ॥ पुत्रशब्दोपत्यमात्रपरः(ब्राह्मे) देवाश्चपितरश्चैवपुत्रेजातेद्विजन्मनाम् । आयांतितस्मात्तदहःपुण्यंपुण्यंचसर्वदा । जननेविशेषःप्रागुक्तः ॥ अत्रप्रयोगपारिजातःपुंप्रसवेदशाहःस्त्र्यपत्येतुत्र्यहः ॥ पुंजन्मनिसपिंडानांदशाहाच्छुद्धिरिष्यते । त्र्यहादेकोदकानांचत्र्यहंसूतकंक्वचित् ॥ स्त्रीजन्मनिसपिंडानांसोदकानांत्र्यहाच्छुचिः । स्त्रीषुत्रिपुरुषंज्ञेयंसपिंडत्वंद्विजोत्तमाइत्यग्निस्मृतेरित्याह (मेधातिथिरपि) अप्रत्तानांतुस्त्रीणांत्रिपुरुषीविज्ञायते ॥ इतिवाशिष्ठमुक्त्वाशौचेएवैतद्दिव । हेतुश्चावधिर्दर्शितएवेत्याह ॥ अन्येतुत्रिपुरुषसापिंड्यस्यकालीनकन्यापरत्वमाहुः ॥ अप्रत्तानांतथास्त्रीणांसापिंड्यंसाप्तपौरुषम् । प्रत्तानांभर्तृसापिंड्यंप्राहदेवःप्रजापतिरितिकौर्मविरोधाच्च ॥ अत्रेदंतत्त्वम् ॥ पंचमात्सप्तमाद्धीमान्यःकन्यामुद्वहेत्द्विजः ॥ गुरुतल्पीसविज्ञेयइत्यादिविरोधात्त्रिपुरुषंप्रकरणान्मरणाशौचपरम् ॥ वाशिष्ठेतदग्रेउदकदानोक्तेः ॥ तेनकन्याप्रसवेपिसाप्तपौरुषंदशरात्रमेव ॥ नचकन्यापुत्रकृतंप्रसवेबलाबलंकाप्युक्तं ॥ अग्निस्मृतिस्त्वनुकल्पोऽप्रिणीताविति सर्वसिद्धांतः ॥ अन्यथात्रिपुरुषंसपिंडानामस्मादि

सोदकानांचश्यहंसाम्ययोगात् ॥ चतुर्थादिसप्तमांतानांचाकिर्मपिनस्यात् ॥ तेनकन्याप्रसवेदशाहएव ( किंच) स्त्रीजन्मोद्देशेन त्रिपुरुषंसापिड्यंतेषांचत्रिरात्रिमित्यनेकार्थविधिःकथंस्यात् ॥ वाक्यभेदापत्तेः ॥ नचतुर्थादीनांसोदकत्वंक्वापिसिद्धम् ॥ तेनत्रिपुरुषंचतुर्थादीनांस्त्रीजन्मनिसोदकत्वंविधायपुनस्तेषांत्रिरात्राशौचविधौविध्यनुवादविरोधोवाक्यभेदश्चयं चेत्यसंवादार्थाहीनस्मृतिर्हेया ॥ अथमृताशौचम् (हारीतः) जातमृतेमृतजातेवासपिंडानांदशाहमितिस्वाशौचपरम् ॥ जातमृतेनालच्छेदोर्ध्वम् ॥ यावन्नछिद्यतेनालंतावन्नाप्नोतिसूतकम् । छिन्नेनालेततःपश्चात्सूतकंतुविधीयतइतिजैमिन्युक्तेः ॥ नाड्यांछिन्नायामाशौचमितिहारीतोक्तेश्च ॥ नाडीछेदात्प्राक्मातुःस्पर्शेपिनदोषइतिशुद्धितत्त्वोक्तिःपरास्ता (नाभिच्छेदात्प्राक्मृतौतुबृहन्मनुः) जीवन्जातोयदिततोमृतःसूतकएवतु । सूतकंसकलंमातुःपित्रादीनांत्रिरात्रकम् ॥ इदंचप्रसवाशौचमेव ॥ स्नानंनिमित्तस्नानमात्रम् ॥ प्राक्नामकरणात्सद्यःशौचमितिशंखोक्तेः(अशक्तश्चिदाह) नामकरणमाशौचांतकालोपलक्षणम् ॥ आशौचव्यपगमेनामधेयमितिविष्णूक्तेः ॥ आशौचेचव्यतिक्रांतेनामकर्मविधीयतेइतिमनूक्तेश्च नाम्नोनियतकालत्वात् (नच) नामधेयंदशम्यांतुद्वादश्यांवापिकारयेत् । पुण्येतिथौमुहूर्तेवानक्षत्रेवागुणान्वितइतिमनूक्तेरनियतकालत्वम् ॥ दशम्यामतीतायांविप्रः । द्वादश्यामतीतायांक्षत्रियः । वैश्यःषोडशे । शूद्रएकत्रिंशेइत्यपिज्ञेयम् ॥ पुण्यइत्यादनुकल्पः ॥ तेननाम्नःकालोपलक्षणम् ॥ एवंदंतजननेपि ॥ दंतजन्मसप्तमेमासीत्युपनिषदिनियतकालत्वात् ॥ चौलेतुनकालोपलक्षणम् ॥ प्रथमेब्देतृतीयेवाकर्तव्यंश्रुतिचोदनादितिमनूक्तेः ॥ ततःसंवत्सरेपूर्णेचूडाकर्मविधीयते । द्वितीयेवातृतीयेवाकर्तव्यंस्मृतिदर्शनादितियमोक्तेश्च ॥ तस्यानियतकालत्वादिततन्मंदम् ॥ चौलवन्नामदंतजननयोरपिस्वरूपेणनिमित्तत्वोपपत्तेस्तद्विशिष्टकालानुवादेवाक्यभेदासप्तममासादर्वाक्दंतजननेतदभावप्रसंगाच्च ॥ यस्तूपनिषद्दर्शनेननिर्णयंकुर्य्यात्सनूनंशतायुःपुरुषइतिश्रुतेरर्वाक्पित्तमरणेतदंत्यकर्मापित्यजेत् ॥ ननुकालानुपलक्षणेनामोत्कर्षेतदभावेवास्नानमात्राच्छुद्धिः

स्यात् ॥ ततः किम् ॥ अस्तु ॥ अतएवोक्तंआदंतजन्मनः सद्यइति ॥ साचविष्णुवच
नाद्दाहाभावविषयेतिवक्ष्यामः ॥ त्रिवर्षादावपिस्यादितिचेत्तदाहदंतादिनिमित्ते
विशेषाशौचेपूर्वस्यबाधात् (तदुक्तम्) पूर्वाबाधेननोत्पत्तिरुत्तरस्यहिसिध्यतीति ॥
जननाद्दशरात्रेव्युष्टेशतरात्रेसंवत्सरेचेतिपारिभाषे ॥ द्वादश्यामपरेराज्यांमासेपूर्णे
तथापरे । अष्टादशेहनितथावदंत्यन्येमनीषिणइति (भविष्येच) नाम्नःकालानिय
माच ॥ नचप्राथम्याद्दशरात्रेतीतेइतिमुख्यःकालःअन्यस्त्वनुकल्पइतिवाच्यम् ॥
चौलेपितथापत्तेः ॥ नचदंतजननकालानुपलक्षणेसदन्तजातमृतस्यदाहैकाहप्रसं
गः ॥ दशाहेनवाधात् ॥ नामकरणोत्तरमेवदाहप्रवृत्तेः ॥ दशाहाभ्यंतरेबालेप्रमी
तेतस्यबांधवैः । शावाशौचंनकर्तव्यंसूत्याशौचंविधीयतेइतिबृहन्मनूक्तेश्च ॥
आशौचंदाहोपलक्षणम् ॥ सूतकवदितिपारस्करोक्तेः (यत्तुविष्णुः) अनिवृत्ते
दशाहेतुपंचत्वंयदिगच्छति । सद्यएवविशुद्धिःस्यान्नप्रेतंनोदकक्रियेति (तदपिप्रे
ताशौचनिषेधार्थंनतुसद्यस्त्वपरम् ॥ वाक्यभेदात् (किंच) नामकालात्प्राक्मृतस्य
स्नानम् ॥ तदुत्तरंत्वेकाहादिनामकालेत्वेकादशाहेमृतस्यनकिमपिस्यात् ॥ अथ
शंखवचनेल्यब्लोपे पंचमीतदाप्राणितनोपपद्येत ॥ नाग्निर्वापिकृतेसतीतिम
न्वादिविरोधात् ॥ कृतनाम्नइतिमाधवमिताक्षरादिविरोधाच्चनकालोपलक्षणं
क्वापीतिदिक् ॥ नामोत्तरंदंतोत्पत्तेःप्राग्दाहेसत्यहः ॥ अदंतजातेतनयेशिशौगर्भ
च्युतेतथा । सपिंडानांतुसर्वेषामहोरात्रमशौचकमितियमोक्तेः ॥ दाहाभावेतुस्ना
नमात्रम् । अदंतजातेप्रेतेसद्यएवनास्याग्निसंस्कारइतिविष्णुनादाहाभावेतदुक्तेः ॥
आदंतजन्मनःसद्यइतियाज्ञवल्कीयाच्च (दाहविकल्पंचाहलौगाक्षिः) तूष्णीमे
वोदकंकुर्यात्तूष्णींसंस्कारमेवच । सर्वेषांकृतचूडानामन्यत्रापीच्छयाद्वयम् ॥ अ
न्यत्राकृतचूडे ॥ अत्रचूडाकरणंतृतीयवर्षरूपकालोपलक्षणार्थमितिमेधाति
थिहरदत्तौ (मनुरपि) नात्रिवर्षस्यकर्तव्या बांधवैरुदकक्रिया ॥ जातदंतस्यवा
कुर्युर्नाम्निवापिकृतेसतीति ॥ उदकंदाहोपलक्षणम् ॥ दंतोत्पत्त्यनंतरंप्राक्त्रि
वर्षात्तान्मृतेहः ॥ दंतजातेप्यकृतचूडेत्वहोरात्रेणशुद्धिरितिविष्णूक्तेः ॥ त्रिव
र्षोर्ध्वंकृतचूडेऽकृतचूडेवाप्रागुपनयनात्त्र्यहः ॥ यद्यप्यकृतचूडोवै जातदंतस्तुसं

स्थितः। तथापिदाहयित्वैनमाशौचंत्र्यहमाचरेदित्यंगिरसोक्तेः ॥ अकृतायामपिचूडायांत्रिवर्षोर्ध्वंदाहादिनियतम्॥ नात्रिवर्षस्येतिवचनात्॥ कृतायांवर्षत्रयात्प्रागपितन्नियतंतूष्णीमेव ॥ अत्रजातदंतत्वमुद्देश्यविशेषणत्वादविवक्षितंदाहयितव्येत्यप्यनुवादः॥ उभयविधौवाक्यभेदात्॥ त्रिवर्षात्प्राक्चूडाभावेग्निदानेत्र्यहस्तदभावेविष्णूक्तेरेकाहइतिमाधवः (यत्तुकश्चिदाह) अत्रत्रिवर्षविषयादस्मादेवार्थात् त्रिवर्षोर्ध्वंसपिंडत्वसिद्धिः ॥ विज्ञानेश्वरोक्तंचत्रिवर्षोर्ध्वमकृतचूडाविषयत्वंचिंत्यम्॥ जातदंतपदवैयर्थ्यादितितत्तुच्छम्॥ दाहस्याविधेयत्वात्॥ नृणामकृतचूडानामशुद्धिर्नैशिकीस्मृतेतिमनूक्तेः॥ त्रिवर्षोर्ध्वमेकाहापत्तेरर्थातत्र्यहासिद्धेः ॥ त्वयाप्यग्रेतथांगीकारात्पदवैयर्थ्यस्यसाम्याद्वाक्यार्थाज्ञानाच्चेत्यलंमिताक्षरार्थानभिज्ञदूषणेन॥ प्रथमवर्षादौकृतचूडस्यसदात्र्यहः॥ निवृत्तचूडकानांतुत्रिरात्राच्छुद्धिरिष्यतइतिमनूक्तेः॥ एतत्सर्वंप्रागुक्तंसपिंडानाम्॥मातापित्रोस्तुदशाहोर्ध्वंमृतेसर्वत्रत्रिरात्रम्॥ बालनामजातदंतानांत्रिरात्रेणशुद्धिरितिकश्यपोक्तेः॥ वैजिकादभिसंबंधादनुरुंध्यादाद्यंत्र्यहमितिमनूक्तेश्च (शुद्धितत्त्वादयोगौडास्तु) अजातदंतमरणेपित्रोरेकाहमिष्यते। दंतजातेत्रिरात्रंस्याद्यदिस्यातांतुनिर्गुणावितिकौर्मात्काश्यपंशूद्रपरम्॥ अनूढानांतुकन्यानांतथावैशूद्रजन्मनामितित्र्यहानुवृत्तौशंखोक्तेः॥ त्रिरात्रंतुभवेच्छूद्रेषण्मासेपिशिशौमृतइतिमात्स्यसूक्ताश्च ॥ दंतजातेशूद्रेतुपंचाहः (यथाहांगिराः) शूद्रे त्रिवर्षान्न्यूनेतुमृतेशुद्धिस्तुपंचभिः। अतऊर्ध्वंमृतेशूद्रे द्वादशाहोविधीयते॥ षड्वर्षान्तमतीतायःशूद्रःसंम्रियतेयदि। मासिकंतुभवेच्छौचमित्यांगिरसभाषितमिति ॥ यत्तुअनूढभार्यःशूद्रस्त्वतिशंखोक्तंमासाशौचंतत्सगुणशूद्रपरम्॥ निर्गुणेत्वनूढभार्येशूद्रेत्रिवर्षोर्ध्वंद्वादशाहः॥ षड्वर्षोर्ध्वंमासः॥ षडब्दात्प्रागपिकृतोद्वाहेमासइत्याहुः ॥ एतत्तुल्येवयसिसर्वेषामितिविरोधाच्छिष्टविगानाच्चादर्तव्यमितिविज्ञानेश्वरादयः॥ दाक्षिणात्यानांतथैव ॥ अन्यदेशेप्रागुक्तमितिगौडाः॥ एवंकन्यास्वपि ॥ तास्वप्यजातदंतासुमृतासुपित्रोरेकरात्रमितिमाधवः (यत्तुविज्ञानेश्वरेणोक्तं) ऊनद्विवर्षउभयोःसू

तकंमातुरेवहीति याज्ञवल्क्योक्तेः ॥ गर्भस्थेप्रेतेमातुर्दशाहंजातेउभयोः कृ
तनाम्निसोदराणां चेतिपैंग्योक्तेश्च पित्रोःसोदराणांचदशाहमस्पृश्यत्व
मितितन्नेदानींप्रचरति ॥ अतएवस्मृत्यर्थसारेतन्नादृतम् ॥ कन्यासुचौलात्प्राङ्
मृतौस्नानम् ॥ अचूडायांतुकन्यायां सद्यःशौचंविधीयतइत्यापस्तम्बोक्तेः ॥ इ
दंत्रिपुरुषमध्ये ॥ अप्रत्तानांतुस्त्रीणांत्रिपुरुषीविज्ञायत इतिवशिष्ठोक्तेः ॥ इदं
वाग्दानोत्तरमितिगौडाः ॥ तन्न ॥ अप्रत्तानांतथास्त्रीणां सापिण्ड्यंसाप्तपौरु
षमितिवचनात् ॥ चौलोत्तरंवाग्दानात्पूर्वंतास्वेकाहः ॥ अविशेषेणवर्णानाम
र्वाक्संस्कारकर्मणः । त्रिरात्रात्तुभवेच्छुद्धिः कन्यास्वह्नाविधीयतइत्यंगिरसा
त्रिरात्रविषयेहेविधानात् ॥ अतःशूद्रस्योपनयनस्थानीयविवाहात्पूर्वंत्रिरात्र
म ॥ विवाहोत्कर्षेतुषोडशाब्दमध्येत्रिरात्रमेवेत्यपरार्काद्याः ॥ शूद्रे निर्गुणेतुत्र्य
ब्दोर्ध्वंपंचाहःषडब्दोर्ध्वंविवाहाभावेद्वादशाहमितिगौडाः ॥ सगुणानांषोडशा
ब्दोर्ध्वंतुविवाहाभावेपिपूर्णाशौचंवक्ष्यते ॥ तदुत्तरंप्राग्विवाहाद्भर्तृकुलेचसप्तपु
रुषावधित्रिरात्रम् ॥अवारिपूर्वंप्रत्तातु यानैवप्रतिपादिता । असंस्कृतातुसाज्ञेया
त्रिरात्रमुभयोःस्मृतमितिमरीच्युक्तेः (रत्नाकरेशुद्धितत्त्वेचशंखः) पितृवेश्मनि
यानारीरजःपश्यत्यसंस्कृता । तस्यांमृतायांनाशौचं कदाचिदपिशाम्यति॥याव
ज्जीवमाशौचमितिवाचस्पतिमिश्राः ॥ अथानुपनीतेकिंचिदुच्यते॥ नाम्नःपूर्वं
खननमेव॥तदूर्ध्वंवर्षत्रयात्पूर्वंचौलाभावेऽग्न्युदकदानविकल्पः ॥ नात्रिवर्षस्य
कर्तव्याबांधवैरुदकक्रिया।जातदन्तस्यवाकुर्युर्नाम्निवापिकृतेसतीतिमनूक्तेः॥
उदकक्रियासाहचर्याद्दाहोपलक्षणम् ॥ खननेतुनान्यदौर्ध्वदेहिकम् ॥ ऊनद्वि
वर्षंनिखनेन्नकुर्यादुदकंततइतियाज्ञवल्क्योक्तेः ॥ उदकमंत्यकर्मपरमित्यपरा
र्कः(यमः)ऊनद्विवार्षिकंप्रेतंघृताक्तंनिखनेद्भुवि । यमगाथांगायमानोयमसूक्त
मनुस्मरन् ( माधवीयेब्राह्मेपि ) स्त्रीणांतुपतितोगर्भः सद्योजातोमृतोथवा । अ
जातदन्तोमासैर्वा मृतःषड्भिर्गतैर्बहिः ॥ वस्त्राद्यैर्भूषितंकृत्वा निक्षिपेत्तन्तुका
ष्ठवत् ॥ खनित्वाशनकैर्भूमौ सद्यःशौचंविधीयते ॥ अलंकरणमपिवक्ष्यते॥ कृ
तचूडस्यतुत्रिवर्षात्प्रागूर्ध्वंवाग्न्युदकदानंनियतम् (यत्तुवशिष्ठः) ऊनद्विवर्षेप्रेते

गर्भपतनेवासपिण्डानांत्रिरात्रमितितत्प्रथमाब्दचूडापरम् ॥ वर्षत्रयादूर्ध्वमकृतचूडस्यापिनियतम् ॥ वर्षत्रयोर्ध्वंउपनयनात्पूर्वंचतूर्णामप्युदकदानम् ॥ तूष्णीमेवोदकंकुर्यात्तूष्णींसंस्कारमेवचेति पूर्वोक्तलौगाक्षिस्मृतेः ॥ पिण्डदानमपिकार्यम् ॥ असंस्कृतानांभूमौपिण्डंदद्यात्संस्कृतानांकुशेष्विति प्रचेतसोक्तेः ॥ उदकदानंसपिण्डैःकृतचूडस्येतिगौतमोक्तेः ॥ उदकग्रहणमौर्ध्वदेहिकपरमितिहरदत्तः ॥ द्वादशाब्दत्सरादर्वाक् पौगण्डंमरणेसति । सपिण्डीकरणंनस्यादेकोद्दिष्टानिकारयेदिति हरदत्तधृतदेवलोक्तेश्च (मरीचिरपि) प्रेतपिण्डंबहिर्दद्याद्दर्भमंत्रविवर्जितम् । एतदनुपनीतपरमितिविज्ञानेश्वरः ॥ अत्रचूडैवपूर्वावधिः ॥ पूर्ववाक्येतुतद्ग्रहणात् ॥ उदकग्रहणस्योपलक्षणत्वादाहः पूर्वावधिरितिकेचित् ॥ द्वादशाब्दत्सरादित्यनुपनीतद्विजानूढशूद्रविषयम् ( त्र्यहाशौचे पिण्डदानविधिमाहपारस्करः ) प्रथमेदिवसेदेयास्त्रयः पिण्डाःसमाहितैः । द्वितीयेचतुरोदद्यादस्थिसंचयनंतथा ॥ त्रींस्तुदद्यात्तृतीयेह्निवस्त्रादिक्षालयेत्तत इति ( अत्रदेवयाज्ञिकनिबन्धेविशेषः ) शिशुरादन्तजननाद्बालःस्याद्यावदाशिखः । कथ्यतेसर्वशास्त्रेषुकुमारोमौंजिबन्धनात् ॥ आपंचवर्षात्कौमारंपौगण्डोनवहायनः (तथा) गर्भेनष्टेक्रियानास्तिदुग्धंदेयंशिशौमृते । परंचपायसंक्षीरंदद्याद्बालविपत्तितः ॥ एकादशंद्वादशाहंवृषोत्सर्गविधिंविना (तथा) यत्र प्रणीयतेबालस्तत्रप्रायःप्रदीयते । किंचित्समानवयसांसंस्कृत्यान्नंयथाविधि ॥ भक्ष्यंभोज्यंचदातव्यंतथाचक्षुद्रभक्षिका । तद्वस्त्राणिप्रदेयानिसोपानत्कानितस्त्वमे कुमाराणांचबालानांभोजनंवस्त्रवेष्टनम् । यच्चोपजीवतेबालस्तद्धिप्रायप्रदीयते (तथा) भूमिनिक्षेपणंबालेआवर्षद्वयमाशिखम् । ततःपरंखननश्चेद्देहदाहोयथाविधि ॥ अचूडेप्यूर्ध्वंखनननिवृत्त्यर्थमावर्षद्वयमिति ॥ प्रागपिकृतचूडस्यतन्निवृत्त्यर्थमाशिखमिति ( तथा ) चूडाकर्मणिसंजातेविपत्तिस्तुयदाभवेत् सूतकांतेप्रकर्तव्यंवृषस्योत्सर्जनंतथा ॥ तत्रदाहःप्रकर्तव्यउदकंतत्रनिश्चितम् ॥ आद्यानिषोडशापिस्युःसपिंडीकरणंविना ॥ इदंपंचवर्षोत्तरम् ॥ जन्मतःपंचवर्षाणिभुंक्तेदत्तमसंस्कृतम् । पंचवर्षाधिकेबालेविपत्तिर्यदिजायते ॥ वृषोत्सर्गा

दिकंकर्मकर्तव्यमुदकंततः । अहन्यहनिसंप्राप्तेकुर्यात्श्राद्धानिषोडश ॥ पाय सेनगुडेनैर्वापिंडंदद्याद्यथाक्रमम् । उदकुंभप्रदानंचपददानानियानिच ॥ दीपदाना नियत्किंचित्पंचवर्षाधिकेसदा । कर्तव्यंतुस्वगृह्योक्तव्रतावाक्प्रेतत्तृप्तये ॥ स्वाहा कारेणैवकार्याणियेकोद्दिष्टानिषोडश । स्तृतुदर्भैस्तिलैःशुक्लैःप्राचीनावीतिना तथेतितत्रैवो[illegible] ॥ अत्रमूलंचिंत्यम् ॥ वार्षिकादितुनभवत्येव ॥ सपिंडनाभावेपि तत्वायोगाद्वचनाभावाच्च (दिवोदासीये) अव्रतेनिधनंप्राप्तेविप्रादौशूद्रजाति वत् । क्रियाःसर्वाःसमुद्दिष्टाःसपिंडीकरणंविना ॥ उदकंपिंडदानंचकृतचूडेवि धीयतइति ॥ स्त्रीणांतूद्वाहात्प्राक्उदकपिंडदानविकल्पः ॥ स्त्रीणांचैकेप्रत्ता नामितिगौतमोक्तेः ॥ स्त्रीशूद्राश्चसधर्माणइतिवचनात्शूद्रेप्येवम् ॥ एतद्वयो र्निमित्ताशौचंसर्ववर्णासमम् ॥ तुल्यंवयसिसर्वेषामतिक्रांतेतथैवचेतिव्याघ्रपा दोक्तेः (यानितु) निर्वृत्तचूडकेविप्रेत्रिरात्राच्छुद्धिरिष्यतेइति ॥ निवृत्तेक्षत्रिये षड्भिर्वैश्येनवभिरुच्यते । शूद्रेत्रिवर्षेन्यूनेतुमृतेशुद्धिस्तुपंचभिः ॥ अतऊर्ध्वंमृ तंशूद्रेद्वादशाहोविधीयते ॥ षड्वर्षांतमतीतेतुशूद्रेमासमशौचकमित्यांगिरसादी नि ॥ तानिविशिष्टविगानान्नादर्तव्यानीतिविज्ञानेश्वरमदनपारिजातादयः ॥ ते नैतद्वशाच्छूद्राणांव्यवस्थाप्राग्युक्ताहेयैव ॥ तुल्येवयसिसर्वेषामितिदाक्षिणात्य परम् ॥ अन्यदेशेकौमेक्ताव्यवस्थेतिशुद्धितत्त्वे ॥ अथजात्याशौचम् ॥ तच्चद्वि जपुंसामुपनयनोर्ध्वंप्रवर्तते ॥ त्रिरात्रमाव्रतादेशाद्दशरात्रमतःपरम् । क्षत्रस्यद्वा दशाहानिविशःपंचदशैवतु ॥ त्रिंशाद्दिनानिशूद्रस्यतदर्धंन्यायवर्तिनइतियाज्ञव ल्क्योक्तेः (यत्तुसएव) त्रिरात्रंदशरात्रंवाशावमाशौचमिष्यतइत्याह ॥ तत्रदशाहे त्रिरात्रमस्पृश्यत्वं ॥ एकादिनोत्पन्नेत्राशौचद्वयेदशाहमस्पृश्यत्वम् ॥ मरणाय दितुल्यंस्यान्मरणेनकथंचन । अस्पृश्यंतुभवेद्गोत्रंसर्वमेवसबांधवमित्यंगिरसो क्तेः ॥ दशाहाशौचपरत्वेदशरात्रमतःपरमित्यनेनपौनरुक्त्यापत्तेरितिशुद्धिवि वेकादयः ॥ तन्न ॥ स्मृतिभेदात्त्रिरात्रंदशरात्रंवेतिविकल्पायोगाच्च ॥ यस्तुपु राणंवेदानध्याप्यवृत्तिंविदधाति (तत्राहाश्वलायनः) द्वादशरात्रंमहागुरुषुदा नाध्ययनेवर्जयेरन्निति ॥ अत्रयावदुक्तनिषेधोवास्पृश्यत्वमात्रंवा ॥ ननुकमनोधि

कारः ॥ एकादशाहांतेवैश्यवदेवोक्तेः ॥ एकादशाहिकंमुक्त्वात्र्यहांतेविधीयतइ
ति (शुद्धितत्त्वेतु) त्रयःपुरुषस्यातिगुरवोभवंतिमातापिताचार्यश्चेतिविष्णूक्तेः॥
पित्रादयोमहागुरवः (भर्ताप्युक्तोरामायणे) पतिर्बन्धुर्गतिर्भर्तादैवतंगुरुरेवच
(शातातपः) पतिरेकोगुरुःस्त्रीणांसर्वस्याभ्यागतोगुरुः ॥ एकपदेमूढानांपितृ
मातृनिषेधार्थम्॥सोदकानांत्रिरात्रम्॥त्र्यहात्तूदकदायिनइतिमनूक्तेः(अग्निपुरा
णे) सपिंडतातुपुरुषेसप्तमेविनिवर्तते । समानोदकभावस्तुनिवर्तेताचतुर्दशे ॥ ज
न्मनामस्मृतेरेकेतत्परंगोत्रमुच्यते (बृहस्पतिः) दशाहेनसपिंडास्तुशुद्ध्यंतिप्रेत
सूतके । त्रिरात्रेणसकुल्यास्तुस्नात्वाशुद्ध्यंतिगोत्रजाः ॥ स्त्रीशूद्रयोस्तुविवाहो
र्ध्वंजात्याशौचम् ॥ वैवाहिकोविधिःस्त्रीणामौपनायनिकःस्मृतइत्युक्तेः ॥ दत्ता
नांभर्तुरेवहि ॥ स्वजात्युक्तमशौचंस्यान्मृतकेजातकेतथेति॥माधवीयेब्राह्माच्च॥
शूद्रस्यविवाहाभावेपिषोडशवर्षोर्ध्वंमासः ॥ अनूढभार्यःशूद्रस्तुषोडशाद्वत्सरा
त्परम् । मृत्युंसमधिगच्छेच्चेन्मासात्तस्यापिबांधवाः ॥ शुद्धिंसमधिगच्छंतिनात्र
कार्याविचारणेत्यपरार्केशंखोक्तेः ॥ निर्णयामृतमदनपारिजातादौत्वन्यथोक्त
म् (हारीतः) आमौंजीबंधनाद्विप्रःक्षत्रियश्चधनुर्ग्रहात् । आप्रतोदग्रहाद्वैश्यःशू
द्रोवस्त्रद्वयग्रहात् ॥ धनुःप्रतोदावष्टमेब्देद्वादशेवस्त्रद्वयमिति (मेधातिथिस्तु)
त्रिरात्रमात्रतादेशादित्यव्रतंकालोपलक्षणार्थम् ॥ सचकालःस्वकीयःसर्वेषां
चाष्टमवर्षरूपः॥तेनचतुर्णामपिवर्णानामुपनयनाभावेप्यष्टमादूर्ध्वंपूर्णमेवाशौ
चम् ॥ तत्रापिप्रागष्टमाच्छिशवःप्रोक्ताइतिस्मृत्यंतरादूर्ध्वंसंपूर्णमर्वाक्त्रिरात्र
म् ॥ येप्याषोडशाद्बालइत्याहुस्तेषामप्यष्टमादूर्ध्वम् ॥ शूद्रेमासएव ॥ ऊ
र्ध्वंसप्तभ्योवर्षेभ्यःशुद्धिःशूद्रस्यमासिकीतिवचनादित्याह ॥ हारलताशुद्धित
त्त्वादिगौडग्रन्थेष्वप्युक्तम् (अनुपनीतोविप्रइत्युक्त्वा) म्रियतेयत्रतत्रस्यादा
शौचंत्र्यहमेवहि । द्विजन्मनामयंकालस्त्रयाणांतुषडाब्दिकइत्यादिपुराणो
क्तेरुपनयनंकालोपलक्षणम् ॥ षडब्दपदंमासत्रयाधिकपरम् ॥ गर्भाष्टमेष्टमेवा
ब्दइत्युक्तेः (यत्तु जाबालः) व्रतचूडाद्विजानांचप्रतीतिस्तुयथाक्रमम् । दशाहत्र्य
हएकाहैःशुद्ध्यंत्यपिहिनिर्गुणाइति ॥ द्विजादंताः॥ इदंप्रतीतिष्टित्युक्तेःपंचाब्दो

पनीतपरमिति ॥ तदेतन्नाद्रियंतेवृद्धाः (यानितुपराशरः) एकाहाद्ब्राह्मणः
शुद्ध्येद्योग्निवेदसमन्वितः । त्र्यहात्केवलवेदस्तुद्विहीनोदशभिर्दिनैः ॥ केवल
वेदःकेवलश्रौताग्नेरप्युपलक्षणम् ॥ अयंसंकोचोहोमाध्ययनपरएवनतुसंध्यादा
वितिहारलतायां (अंगिराः) सर्वेषामेववर्णानांसूतकेमृतकेतथा । दशाहाच्छु
द्धिरेतेषामितिशातातपोब्रवीत् (देवलः) आशौचंदशरात्रंतुसर्वेषामपरेविदुः ।
निधनेप्रसवेचैवपश्यंतःकर्मणःक्षयम् ॥ अत्यंतात्कष्टस्यकर्महानौपीडावतोवि
प्रपरिचर्यापरम् ॥ शूद्रेदशरात्रमितिहारलतायाम् (दक्षः) सद्यःशौचंतथैकाह
स्त्र्यहश्चतुरहस्तथा । षड्दशाहादशाहश्चपक्षोमासस्तथैवच ॥ मरणांतंयथाचा
न्यद्दशपक्षास्तुसूतके (मिताक्षरायांस्मृत्यंतरे) चतुर्थेदशरात्रंस्यात्षण्निशाःपुं
सिपंचमे । षष्ठेचतुरहाच्छुद्धिःसप्तमेत्वहरेवतु ॥ इत्यादीनितान्यापदनापद्गुणा
वद्गुणावद्विषयाणिदेशांतरभेदाद्वाज्ञेयानि ॥ सद्यःशौचादिषडहांताःपक्षाया
यावरादिपराः ॥ अत्रमरणांतंजननादिनिमित्ताच्छिन्नम् ॥ शिष्टविगानान्नादर्त
व्यानीतिविज्ञानेश्वरः ॥ अस्नात्वाचाप्यहुत्वाचअदत्वाश्नंस्तथाद्विजः ॥ एवंवि
धस्यविप्रस्यसर्वदःसूतकंभवेदितिदक्षोक्तः ॥ अन्यपूर्वायस्यगेहेभार्यास्यात्तस्यनि
त्यशः । आशौचंसर्वकार्येषुदेहेभवतिसर्वदेतिब्राह्मादिवशाद्व्यवस्थेत्यपरार्कम
दनपारिजातादयः (माधवस्तु) वृत्तस्वाध्यायसापेक्षमघसंकोचनंतथेतिकलि
वर्ज्येषूक्तेः) दशाहएवविप्रस्यसपिंडेमरणेसति । कल्पांतराणिकुर्वाणःकलौ
भवतिकिल्बिषीतिहारीतोक्तेश्चन्यूनाशौचपक्षायुगांतरविषयाः ॥ मरणां
तादिपक्षास्तुनिंदार्थवादः ( अन्यथा ) नामधारकविप्रस्तुदशाहंसूतकीभवेदि
तिविरोधःस्यादित्याह ( यत्तु देवलः ) दशाहादित्रिभागेनकृतेसंचयनेक्रमात् ।
अंगस्पर्शनमिच्छंतिवर्णानांतत्त्वदर्शिनइतिपूर्णाशौचेस्पृश्यतामाह ( यच्चानुप
नीतातिक्रांताशौचेविश्वरूपादीतेनैवोक्तं ) स्वाशौचकालाद्विज्ञेयंस्पर्शनंतुत्रिभा
गतइति ) तदपियुगांतरेषु ॥ अस्थिसंचयनादूर्ध्वमंगस्पर्शनमेवचेतिमाधवीये
कलौनिषेधात् ( यत्तुहारलतायाम् ) चतुर्थेहनिकर्तव्यःसंस्पर्शोब्राह्मणस्य
हिवतिप्रचेतसोक्तेस्त्र्यहैकाहाशौचेपिचतुर्थाहएवांगस्पर्शइति ॥ तन्न ॥ देवला

दिवशेनास्यदशाहशौचत्वात ॥ येतुवर्णसंकरजामूर्धावसिक्ताद्यास्तेषामाशौ
चविशेषः कलौनोपयुक्तइतिनोच्यते ॥ प्रतिलोमजानांनाशौचम ॥ मलापकर्ष
णार्थंतुस्नानमात्रमितिविज्ञानेश्वरः (माधवस्तु) शौचाशौचेप्रकुर्वीरन्शूद्रवर्णस्य
संकराइतिब्राह्मोक्तेशूद्रवदाह ॥ हारलतायामप्येवम॥ दत्तकीतकृत्रिमादिपुत्रेषु
अहीनवर्णासुस्त्रीषुच सपिंडत्वेपिप्रसवेमरणेचपूर्वापरपित्रोर्भर्तुश्चत्रिरात्रमेव
नदशाहादि ॥ अनौरसेषुपुत्रेषुजातेषुचमृतेषुच। परपूर्वासुभार्यासुप्रसूतासुमृतासु
चेतित्रिरात्रानुवृत्तौविष्णूक्तेः॥ सपिंडानांत्वेकाहः॥ परपूर्वासुभार्यासुपुत्रेषुकृत
केषुच।भर्तृपित्रोस्त्रिरात्रंस्यादेकाहस्तुसपिंडतइतिमाधवीयेहारीतोक्तेः॥ सूतके
मृतकेचैवत्रिरात्रंपरपूर्वयोः । एकाहस्तुसपिंडानांत्रिरात्रंयत्रवैपितुरितिमरीच्यु
क्तेश्च (शंखः)अनौरसेषुपुत्रेषुभार्यास्वन्यगतासुच । परपूर्वासुचस्त्रीषुत्रिरात्रा
च्छुद्धिरिष्यते॥ परपूर्वापुनर्भूः ॥ इदंतुवर्णासु ( हीनवर्णास्तुशंखलिखितौ )
परपूर्वासुभार्यासुपुत्रेषुकृतकेषुच । नाध्यायोभवेत्तस्यनाशौचंनोदकक्रिया (ब्रा
ह्मेपि ) आशौचंतुत्रिरात्रंस्यात्समवर्णासुनिश्चितम (यत्तुषडशीतौ) अन्यपूर्वा
वरुढासुत्रिदिनाच्छुद्धिरिष्यते । तास्वेवानन्यपूर्वासुपंचाहोभिर्विशुद्ध्यतीति ॥
तत्रपंचाहेमूलंचिंत्यम (यत्तुयाज्ञवल्क्यः) अनौरसेषुपुत्रेषुभार्यास्वन्यगतासुचेत्ये
काहमाहतद सन्निधौज्ञेयम ॥ यदापितुरेकाहस्तदा सपिंडानांस्नानम ॥
अन्याश्रितेषुदारेषुपरपत्नीसुतेषुच । गोत्रिणः स्नानशुद्धाःस्युस्त्रिरात्रेणैव
तत्पितेतिप्रजापत्युक्तेः॥ पितेतिवोढुरुपलक्षणम ॥ तथोपक्रमात ॥ यत्तु
दत्तकेपालकप्रतियोगिकपुत्रत्वात्पूर्वपितुर्नत्रिरात्रम ॥ पूर्वसंबंधनिवृत्तेश्च
नदशाहादीतिकश्चित ॥ तन्न (जनकेपि) बैजिकादभिसंबंधादनुरुध्यादघंत्र्यह
मितिवाचनिकाशौचस्यानिवार्यत्वात ॥ पितृमरणेपिदत्तकादीनांत्रिरात्रम
(शुद्धितत्त्वेब्राह्मे) दत्तकश्चस्वयंदत्तःकृत्रिमःक्रीतएवचेत्युपक्रम्य ॥ मृतकेमृत
केचैवत्र्यहाशौचस्यभागिनइत्युक्तेः ॥ स्मृतिकौमुद्यांहारलतायामप्येवम ॥
दत्तकस्यपुत्रपौत्राणांजननेमरणेवासपिंडानामेकाहः ॥ बीजिनश्चेतिगौतमेन
साप्तपौरुषसापिंड्योक्तेः॥ सपिंडानांचैकाहस्योक्तत्वात ॥ सपिंडेतुपुत्रीकृते

सपिंडदत्तौरसयोर्भ्रात्रोस्तत्पुत्रयोर्दशाहएव ॥ तत्राकांक्षाभावात्सपिंडत्वेनदशा
हप्राबल्याच्च ॥ पूर्वापरयोर्भर्त्तुरुत्पन्नयोःपुत्रयोस्त्वाह (माधवीयेमरीचिः) मा
तुरैक्यात्तर्हिपितृकौभ्रातरावन्यगोत्रजौ । एकाहंसूतकेतत्रत्रिरात्रंमृतकेतयोरिति
दिक् (ऊढकन्यानांतुविष्णुराह) संस्कृतासुस्त्रीषुनाशौचम् ॥ पितृपक्षेतत्प्रसव
मरणेचेत् पितृगृहेस्यातांतदैकरात्रंत्रिरात्रंमरणेत्रिरात्रमितिविज्ञानेश्वरापरार्कौ
(माधवस्तु) प्रसवेपित्रिरात्रंपित्रोः ॥ एकरात्रंभ्रात्रादिबन्धुवर्गस्य ॥ दत्तानारीपि
तुर्गेहेसूयेताथम्रियेतवा । तद्बंधुवर्गस्त्वेकेनशुचिस्तज्जनकस्त्रिभिरितिब्राह्मो
क्तेरित्याह (यत्तुकश्चिदाह) पक्षपदेनभ्रातरोगृह्यंते ॥ वाक्यांतरेणभगिनीमृ
तौत्रिरात्रोक्तेरितितच्चिंत्यम् ॥ तदभावेतद्विरोधाच्च ॥ भ्रातुःप्रसवएकाहः ॥ मृ
तौत्रिरात्रमितिकेचित् ॥ युक्तातुपक्षिणी ॥ परस्परंमृतौभ्रातृभगिन्योःपक्षि
णीभवेदितिब्राह्मात् ॥ भ्रातृभिन्नानामेकाहः ॥ वर्गोक्तेः ॥ इतरेषांतुयथावि
धीतिवक्ष्यमाणवचनाच्च ॥ यत्तुप्रधानगृहेमृतौपित्रोःपूर्णंभ्रातुरहइतिकश्चि
त्सन्निर्मूलत्वान्नाशौचम् ॥ पितृपक्षेइत्येतद्विरोधावाच्चांतः ॥ दत्तानारीपितुर्गे
हेप्रधानेसूयतेयदा । म्रियतेवासदातस्याःपिताशुध्येत्त्रिभिर्दिनैरितिकल्पतरौ
शुद्धितत्त्वेच ॥ पितृगृहेप्रसवेतुपित्रादीनामाशौचंनास्ति ॥ मृतौपित्रोस्त्रिरात्रम
स्त्येव ॥ प्रत्ताप्रत्तासुयोषित्सुसंस्कृतासंस्कृतासुच । मातापित्रोस्त्रिरात्रंस्यादित
रेषांयथाविधि ॥ अजातदंतासुपित्रोरेकरात्रमितिमाधवीयेशंखकार्ष्णाजिनि
स्मृतेः ॥ बैजिकादभिसंबंधादित्युक्तेश्च ॥ स्मृत्यर्थसारेप्येवम् ॥माधवस्तुइदंत्रि
रात्रजातदंतपरम् ॥ दंतोत्पत्तेःप्रागेकरात्रंपित्रोः ॥ सद्यस्त्वप्रौढकन्यायांप्रौढा
यांवासराच्छुचिः । प्रदत्तायांत्रिरात्रेणादत्तायांपक्षिणीभवेदितिपुलस्त्योक्तेः
(अन्यस्तुकन्यामृतौपित्रोःपक्षिणीत्याहषडशीतावपि) पितृगेहादतोन्यत्रयदिपु
त्रीप्रमीयते । पक्षिणीतत्रपित्रोःस्यान्नान्येषामितिनिश्चयइति ॥ ग्रामांतरेइद
मितिस्मृत्यर्थसारे ॥ भ्रातुस्तुपक्षिणी ॥ श्वशुरयोर्भगिन्यांचमातुलायांचमातु
ले । पित्रोःस्वसरितद्वच्चपक्षिणींक्षपयेन्निशामितिवृद्धबृहस्पतिस्मृतेः (शुद्धित
त्त्वेकौर्मे) अदंतात्सोदरेसद्यआचूडादेकरात्रम् । आप्रदानात्त्रिरात्रंस्यादशरात्र

मतःपरम् ॥ पित्रोर्मृतौस्त्रीणांत्रिरात्रम् ॥ पित्रोरुपरमेस्त्रीणामूढानांतुकथंभवेत् ॥ त्रिरात्रेणैवशुद्धिःस्यादित्याहभगवान्यमइतिमाधवीयेवृद्धमनूक्तेः ॥ इदंदशाहांतः ॥ ऊर्ध्वंतुपक्षिणी ॥ भ्रातुर्भगिनीगृहेतस्यावातद्गृहेमृतौत्रिरात्रम् ॥ अन्यत्रतुपक्षिणीतिषडशीतावुक्तम् (ब्राह्मेपि) परस्परमृतौभ्रातृभगिन्योःपक्षिणीभवेत् । मातुलाशौचवत्पुत्र्याःपितृव्याशौचमिष्यतइति ॥ शिष्टास्त्वस्यनिर्मूलत्वात्पितृव्येस्नानमात्रमाहुः (त्रिंशच्छ्लोक्यां) प्रेतत्वाचार्यमातामहदुहितृसुतश्रोत्रियर्त्विक्सयाज्यस्वस्त्रीयेषुत्रिरात्रंत्रिदिवसमशुचिःसोदकस्तूभयत्र । पक्षिण्याशौचमृत्विक्दुहितृसुतसहाध्यायिबंधुत्र्यांतेवासिश्वशूरमित्रश्वशुरभगिनिकाभागिनिनेयप्रयाणे ॥ मातामह्यांचपित्रोःस्वसरिचविरतौमातुलेमातुलान्यांचाथोसद्ययोरीतरेवस्वविषयनृपतौग्रामनाथेनचष्टे । शिष्योपाध्यायबंधुत्रयगुरुतनयाचार्यभार्यासगोत्रानूचानश्रोत्रियेषुस्वगृहपरमृतौमातुलेचैकरात्रम् ॥ रात्रिंसब्रह्मचारिण्यथतुकथर्मापिस्वल्पसंबंधयुक्तेस्नानंवासोयुतंस्यादि दर्भापसकलंसर्ववर्णेषुतुल्यमिति ॥ अत्रमूलंमिताक्षरादौस्पष्टं ॥ दौहित्रभागिनेययोरुपनीतयोस्त्रिरात्रं ॥ अनुपनीतयोःपक्षिणी ॥ संस्थितेपक्षिणींरात्रिंदौहित्रेभगिनीसुते । संस्कृतेतुत्रिरात्रंस्यादितिधर्मोव्यवस्थितइतिवृद्धमनूक्तेः ॥ संस्कृतेदाहेन ॥ तेदाहेत्रिरात्रंनान्यथेतिगौडाः ॥ तन्न ॥ विशेषवैयर्थ्यात् ॥ मातुलादौसन्निधिविदेशाभ्यांपक्षिण्येकाहयोर्व्यवस्था (मनुः) त्रिरात्रमाहुराशौचमाचार्येसंस्थितेसति । तस्यपुत्रेचपत्न्यांचदिवारात्रमितिस्थितिः ॥ श्रोत्रियेस्वगृहेमृतेत्रिरात्रम ॥ श्रोत्रियेतूपसंपन्नेत्रिरात्रमशुचिर्भवेदितिस्मृतेरितिमाधवः ॥ एकग्रामीणेत्वेकाहः ॥ ऋत्विक्षुबहुवल्पकाश्रौतस्मार्तयाजनपरेत्रिरात्रैकरात्रेज्ञेये ॥ यमुद्दिश्यापिकर्मकुर्वतस्यवाचकः शब्दोभवतीतिशंबराचार्यैः कर्ममध्येऋत्विक्त्वतुक्तंतथापिकर्मण्याशौचनिषेधात्तदुत्तरमेवेतज्ज्ञेयम (गौडास्तु) एकोदकानांत्र्यहेगोत्रजानामहःस्मृतम । मातृबंधौगुरौमित्रेमंडलाधिपतौतथेतिजाबालोक्तेर्मातृबंधुष्वेकाहमाहुः ॥ शिष्येस्वोपनीतेत्र्यहः ॥ शिष्यसतीर्थब्रह्मचारिष्वक्रमेणत्रिरात्रमहोरात्रमेकाहइतिमाधवीयेबौधायनोक्तेः (अन्यत्रतुमनुः) मातु

त्वेपक्षिणीरात्रिंशिष्ठ्यर्त्विक्बांधवेषुचेति (बंधुत्रयम्) आत्मपितृष्वसृमातुलपु
त्राः ॥ पितुःपितृष्वसृमातृष्वसृमातुलपुत्राः ॥ मातुःपितृष्वसृमातृष्वसृमातुल
पुत्राश्चेतिविज्ञानेश्वरः ॥ अत्रपक्षिणी ॥ पितृष्वस्रादिकन्यानामूढानांत्वेका
हः ॥ तद्बंधुवर्गस्त्वेकेनेतिपूर्वोक्तब्राह्मात् (यत्तुषडशीत्याम्) सर्वेपित्रोर्भगि
न्यौयेयेपितामहयोस्तथा । येमातामहयोश्चैवभगिन्यौतत्प्रजास्त्रयः ॥ मातु
लाःस्वस्यपित्रोश्चपत्न्यश्चैषांप्रजास्त्रयः ॥ भ्रातरश्चेतिसर्वेषुपक्षिणीस्वगृ
हेऽग्रहम् ॥ सवंश्वशुरजामातृदौहित्रविपदिस्मृतम् (यच्चयमः) जामातरिमृ
तेशुद्धिस्त्रिरात्रेणोभयोःस्मृता ॥ पक्षिणीशालकानांस्यादितिशातातपोऽब्रवी
दिति ॥ निर्मूलत्वान्मिताक्षरादिविरोधाच्चोपेक्ष्यम् (मदनपारिजातेविष्णुः) अ
सपिंडेस्ववेश्मनिमृतएकरात्रम् (अत्रहरदत्तः) अंतःशवेचेत्यापस्तंबसूत्रमंतःशवे
ग्रामेधनुःशतादर्वागन्नमभोज्यम् ॥ दीपमुदकुंभंवोपनिधायतुभुंजीत ॥ यदिसमा
नवंशंनगृहमेवंसूतिकायामित्याह (प्रधानगृहमृतौतु) गृहेयस्यमृतःकश्चिदसपिं
डःकथंचन । तस्याप्यशौचंविज्ञेयंत्रिरात्रंनात्रसंशयइत्यंगिरसोक्तमितिमाधवः ॥
एतेनत्रिरात्रमसपिंडेषुस्वगृहेसंस्थितेषुचेतिकौर्मव्याख्यातम् (शुद्धितत्त्वेबृहन्म
नुः) श्वशूद्रपतिताश्चांत्यामृताश्चेद्द्विजमंदिरे । शौचंतत्रप्रवक्ष्यामिमनुनाभाषितं
यथा । दशरात्राच्छुनिमृतेमासाच्छूद्रेभवेच्छुचिः ॥ द्वाभ्यांतुपतितेगेहमंत्ये
मासचतुष्टयात् ॥ अत्यंतेवर्जयेद्गेहमित्येवंमनुरब्रवीत् ॥ अंत्योम्लेच्छः ॥ अ
त्यंतःश्वपाकइतिवाचस्पतिः (तत्रैवयमः) द्विजस्यमरणेवेश्मविशुध्यतिदिनत्र
यात् (संवर्तः) गृहशुद्धिंप्रवक्ष्यामिअंतस्थशवदूषिते । प्रोत्सृज्यमृन्मयंभांडंसि
द्धमन्नंतथैवच ॥ गोमयेनोपलिप्याथछागेनाघ्रापयेद्बुधः ॥ ब्राह्मणैर्मंत्रपूतैश्चहि
रण्यकुशवारिभिः ॥ सर्वमभ्युक्षयेद्वेश्मततःशुध्यत्यसंशयम् (बृहद्विष्णुः) ग्रा
ममध्यगतोयावच्छवस्तिष्ठतिकस्यचित् । ग्रामस्यतावदाशौचंनिर्गतेशुचितामि
यात् ॥ गृहेप्रवासीमृतेऽप्येवम् ॥ यत्तुमाधवीयेप्रचेतसामातृष्वस्रादिषुत्रिरात्र॥
क्तं ॥ मातृष्वसृमातुलयोःश्वश्रूश्वशुरयोर्गुरोः ॥ मृतेचर्त्विजियाज्येचत्रिरा
त्रेणविशुध्यतीति ॥ गुरुराचार्यः ॥ ऋत्विक्कुलागतः ॥ तत्स्वगृहमृतौज्ञेयम्

श्वशुरयोरन्यत्रमृतावपिसन्निधौत्रिरात्रम् ॥ असन्निधौपक्षिणी ॥ देशांतरेएकरात्रं ॥ वक्ष्यमाणविष्णूक्तेरितिमाधवगौडादयः ॥ अन्यत्रतुमातृष्वस्रादिषुपक्षिणी ॥ पित्रोःस्वसरितद्वच्चपक्षिणींक्षपयेन्निशामितिवृद्धमनूक्तेः (यत्तु वृद्धमनुः) भगिन्यांसंस्कृतायांतुभ्रातर्यपिचसंस्कृते । मित्रेजामातरिप्रेतेदौहित्रेभगिनीसुते ॥ शालकेतत्सुतेचैवसद्यःस्नानेनशुध्यतीति तत्तुभ्रातृदौहित्रादौदेशांतरे ॥ शालकसुतजामात्रोःस्वदेशेज्ञेयम् ॥ शालकेतुस्वदेशेएकाहः ॥ आचार्यपत्नीपुत्रोपाध्यायमातुलश्वशुरश्वशुर्यसहाध्यायिशिष्येष्वेकरात्रमिति माधवीयेविष्णूक्तेः ॥ हरदत्तीयेदशश्लोक्यामप्येवम् ॥ श्वशुर्यःशालकः ॥ देशांतरेस्नानम् ॥ श्वशुरयोर्देशांतरेएकाहः (जाबालः) एकोदकानांतुत्र्यहोगोत्रजानामहःस्मृतम् । सर्वत्रमूल्याभावेपिक्रियाकर्तुर्दशाहतः ॥ गुरोःप्रेतस्यशिष्यस्तुपितृमेधंसमाचरेत् । प्रेताहारैःसमंतत्रदशरात्रेणशुद्ध्यतीतिमनूक्तेः ॥ शिष्य इत्युपलक्षणम् ॥ निरन्वयेसपिंडेतुमृतेसतिदयान्वितः । तदशौचंपुराचीर्त्वाकुर्यात्तु पितृवत्क्रियामिति माधवीयेब्राह्मोक्तेः (दिवोदासीये) सगोत्रोवासगोत्रोवायोग्निंदद्यात्सखेनरः । सोपिकुर्यान्नवश्राद्धंशुद्धश्चदशमेहनि ॥ यत्रैकविषयेपक्षिण्येकाहादिपक्षद्वयमुक्तं तत्रसन्निधिविदेशभेदैर्याद्यक्तत्वाव्यवस्था ॥ (त्रिंशच्छ्लोक्याम्) वानप्रस्थेयतौचोपरमतिकुलजेयंढकेवाप्लवः स्याद्योयिद्गोविप्रगुप्त्यैमृतवतितुदिनंयुद्धविद्धेचसद्यः ॥ अत्रमूलमाकरेस्पष्टम् ॥ युद्धमृतिर्न्मृतस्यस्नानम् ॥ उद्यतैराहवेशस्त्रैःक्षत्रधर्महतस्यच । सद्यःसंतिष्ठतेयज्ञस्तथाशौचमितिस्थितिरितिमनूक्तेः ॥ यज्ञोंत्यकर्म ॥ सर्वंतदैवेत्यर्थः (यस्तुभारतेराजधर्मेषु) अशोच्योहिहतःशूरःस्वर्गलोकेमहीयते । नह्यन्नमुदकंतस्यनस्नानंनाप्यशौचकमिति ॥ श्राद्धादिनिषेधःसपुत्राद्यभावपरः ॥ अतएवतत्रकर्णादीनांश्राद्धमुक्तम् ॥ अन्येतुदशपिंडनिषेधमाहुर्यतिवत् (यत्तुपराशरः) आहवेपिहतानांचएकरात्रमशौचकमितितद्युद्धक्षतेनकालांतरमृतेर्ज्ञेयम् ॥ असन्निधौस्नानमितिमाधवः (शुद्धितत्त्वेग्निपुराणे) दंष्ट्रिभिःशृङ्गिभिर्वापिहताम्लेच्छैश्चतस्करैः । येस्वाम्यर्थेहतायांतिराजन्स्वर्गंनसंशयः ॥ सर्वेषामेववर्णानांक्षत्रियस्यवि

शेस्रतः (यत्तुबृहस्पतिः) डिंबाहवेविद्युताचराज्ञांगोविप्रपालने । सद्यःशौचंमृत
स्याहुस्त्रायंचान्येमहर्षयः ॥ तच्चशस्त्रंविनापराङ्मुखहतेचत्रिरात्रम् ॥ राज्ञाव
ध्येहतेसद्यःशौचमन्यत्रत्रिरात्रम् (तथैवव्याघ्रः) क्षतेर्नम्रियतेयस्तुतस्याशौचंभ
वेद्विधा । आसन्नाहात्त्रिरात्रंस्याद्दशरात्रमतःपरम् ॥ शस्त्राघातेत्र्यहादूर्ध्वंयदि
कश्चित्प्रमीयते । आशौचंप्राकृतंतस्यसर्ववर्णेषुनित्यशः (शस्त्राघातेक्षतंविना
शवस्पर्शेतुहारीतः) शवस्पृशोग्रामंनप्रविशेयुरानक्षत्रदर्शनाद्रात्रौचेदादित्य
स्य (यत्तुमनुः) अह्नाचैकेनराज्याचत्रिरात्रैरेवचत्रिभिः । शवस्पृशोविशुध्यंति
त्र्यहात्तूदकदायिनइति ॥ अह्नाराज्याचेत्यहोरात्रमित्युक्तम् ॥ त्रिभिस्त्रिरात्रैरि
तिनवरात्रमेवंदशरात्रमित्यर्थः ॥ तत्तदन्नाशनेतद्गृहवासेनापदिचज्ञेयम् (अंगि
राः) आशौचंयस्यसंसर्गादापतेद्गृहमेधिनः । क्रियास्तस्यनलुप्यंतेगृह्याणांच
नतद्भवेत् ॥ अथनिर्हाराद्याशौचम् ॥ स्नेहेनसवर्णनिर्हारेतदन्नाशनेतद्गृहवासे
चदशाहः ॥ तदन्नानशनेतद्गृहवासेत्र्यहः ॥ गृहावासेन्नाभक्षणेचैकाहः ॥ भृ
तिग्रहणेननिर्हारेदाहेचतज्जातेस्याशौचम् ॥ यदिनिर्हरतिप्रेतंतुप्रलोभाक्रांतमान
सः ॥ दशाहेनद्विजःशुध्येद्द्वादशाहेनभूमिपः ॥ मासार्धेनतुवैश्यस्तुशूद्रोमासेन
शुध्यतीतिकौर्मोक्तेः ॥ विजातीयनिर्हारेतुशवजातीयमाशौचम् ॥ अत्रभृतिग्रहो
द्विगुणम् ॥ अवरश्चेद्वरंवर्णंवरोवाप्यवरंयदि । वहेच्छवंतदाशौचंदृष्ट्वार्थेद्वि
गुणंभवेदितिव्याघ्रोक्तेः ॥ कौर्ममेतदितिगौडाः ॥ दाहेप्येवम् (यत्तुब्राह्मे) यो
सवर्णंतुमूल्येननीत्वाचैवदहेन्नरः । अशौचंतुभवेत्तस्यप्रेतजातिसमंनृपेतिसदाप
दिज्ञेयम् ॥ सोदकनिर्हारेतुदशाहइतिमाधवः (अलंकरणेतुशंखः) कृच्छ्रपादो
सपिंडस्यप्रेतालंकरणेकृते । अज्ञानादुपवासःस्यादशक्तौस्नानमिष्यते ॥ धर्मा
र्थमनाथसवर्णाहरणेक्रियाकरणेचद्विजस्यानंतयज्ञफलम् ॥ स्नानंप्राणायामो
ग्निस्पर्शश्चेतिमाधवीये ॥ अग्निदेप्येवम् ॥ प्रेतसंस्पर्शसंस्कारैर्ब्राह्मणोनैवदु
ष्यति । वोढाचैवाग्निदाताचसद्यःस्नात्वाविशुध्यतीत्यपरार्केवृद्धपराशरोक्तेः ॥
मातुलत्वादिसंबंधेत्रिरात्रम् ॥ असंबंधिद्विजान्वहित्वादहित्वाचसद्यःशौचम् ॥
संबंधेत्रिरात्रमितिवैदीनसिस्मृतेः (गौतमीमिताक्षरायांवृद्धाचिः) सूतकात्तद्विगु

णांशावं शावाद्दिगुणमार्त्तवम् । आर्त्तवाद्दिगुणासूति ततोपिशवदाहकः ॥
अत्रपूर्वपूर्वणोत्तरनिवृत्तिरित्यर्थः ( विष्णुः ) मृतंद्विजंनशूद्रेणहारयेन्नशूद्रन्द्विजेन
(देवलः) ब्रह्मचारीनकुर्वीत शववाहादिकाःक्रियाः । यदिकुर्याच्चरेत्कृच्छ्रंपुनः
संस्कारमेवच (याज्ञवल्क्यः) आचार्यपित्रुपाध्यायान्निर्हृत्यापिव्रतीव्रती । अनु
गमनेतुसपिण्डेनदोषः ॥ विहितंहिसपिण्डानां प्रेतनिर्हरणादिकम् । तेषांक
रोतियःकश्चित्तस्याधिक्यंनविद्यत इतिदेवलोक्तेः ॥ दोषस्यात्त्वसपिण्डस्य त
त्रनाद्यक्रियांविनेति हारीतोक्तेश्च ( समोत्कृष्टवर्णेतुमाधवीयेकण्वः ) अनुग
म्यशवंबुद्ध्यास्नात्वास्पृष्ट्वाहुताशनम् । सर्पिःप्राश्यपुनःस्नात्वा प्राणायामैर्विशु
ध्यतीति ॥ हीनवर्णेतुक्षत्रियेऽहः ॥ वैश्येपक्षिणी ॥ शूद्रे त्रिरात्रम् ॥ क्षत्रिय
स्यवैश्येऽहः । शूद्रे पक्षिणी वैश्यस्यशूद्रेऽहरितिविज्ञानेश्वरः (माधवस्तु ) वि
प्रस्यवैश्येद्व्यहः ॥ क्षत्रस्यशूद्रेप्येवम् ॥ अन्यत्प्राग्वत् ॥ स्नानाग्निस्पर्शघृत
प्राशनानिसर्वत्रेत्याह (हीनवर्णस्यदाहौर्ध्वदेहिककरणेतुब्राह्मे ) ब्राह्मणोहीनव
र्णस्यनकुर्यादौर्ध्वदेहिकम् ॥ कामाल्लोभात्तथामोहात्कृत्वातज्जातितांव्रजेत्
( मनुः ) व्रात्यानांयाजनंकृत्वापरेषामन्त्यकर्मच । अभीचारमहीनंचत्रिभिः
कृच्छ्रैर्व्यपोहति ॥ परेषांसर्ववर्णानांहीनेषुतत्रहैगुण्यत्रैगुण्यचातुर्गुण्यायूह्यम्
( अथरोदने ) समोत्तमवर्णयोः संचयनात्पूर्वं सचैलस्नानमूर्ध्वमाचमनम् ॥
हीनवर्णेषुतुसंचयात्प्राक्सचैलमूर्ध्वं स्नानमात्रम् ( विप्रस्यक्षत्रवैश्यविषयेतुब्रा
ह्मे ) अस्थिसंचयनेविप्रो रौतिचेत्क्षत्रवैश्ययोः । तदास्नातःसचैलस्तु द्विती
येहनिशुध्यति ॥ कृतेतुसंचयेविप्रः स्नानेनैवशुचिर्भवेत् ॥ क्षत्रस्यवैश्येप्येवम् ॥
शूद्रे तुसंचयात्प्राक्विप्रस्यत्रिरात्रम् ॥ क्षत्रवैश्ययोर्द्विरात्रम् ॥ ऊर्ध्वंतुद्विजाना
मेकाहः ॥ शूद्रस्यशूद्रे स्पर्शंविनासंचयात्पूर्वमेकाहः ॥ ऊर्ध्वंतद्योतिर्रितिमा
धवीयेज्ञेयम् (शुद्धितत्त्वेपारस्करस्तु) अस्थिसंचयनादूर्ध्वंमासंयावद्द्विजातयः ॥
दिवसेनैवशुध्यन्ति वाससांक्षालनेनच ॥ सजातेदिवसेनैवव्र्यहात्क्षत्रियवैश्ययो
रित्युक्तम् ॥ सपिण्डानांरोदननिर्हारादावदोषइत्युक्तंप्राक् (विज्ञानेश्वरस्तु )
मृतस्यबांधवैःसार्द्धं कृत्वातुपरिदेवनम् । वर्जयेत्तदहोरात्रं दानश्राद्धादिकर्मचेति

पारस्करोक्तेःसर्वत्रैकरात्रमाह (अथाशौचान्नभक्षणेविष्णुः) ब्राह्मणादीनामा
शौचे यःसकृदेवान्नमश्नातितस्यतावदाशौचम् ॥ यावत्तेषामाशौचन्त्वपगमेप्राय
श्चित्तमिति (अज्ञानेत्वंगिराः) अन्तर्दशाहभुक्त्वान्नंसूतकेमृतकेऽपिवा ॥ अस्या
शौचंभवेत्तावद्यावदन्नंव्रजत्यधः ॥ प्रायश्चित्तंत्वमत्याविप्रस्यवर्णक्रमेणैकाहत्र्य
हपञ्चाहसप्ताहोपवासः ॥ दशविंशतिःषष्टिःशतञ्चप्राणायामाःपञ्चगव्याश
नञ्च ॥ अभ्यासेद्विगुणम् ॥ आपदितुप्राणायामशतंपञ्चशतमष्टशतमष्टसहस्रं
गायत्रीजपश्च ॥ मत्यापदितुसवर्णाशौचेत्रिरघमर्षणंगायत्र्यष्टसहस्रञ्च ॥ क्ष
त्रियाशौचेउपवासस्तत्रवैश्याशौचेत्रिरात्रोपवासश्च ॥ शूद्राशौचेकृच्छ्रः ॥ क्षत्र
वैश्ययोःपञ्चशतमष्टशतंगायत्रीजपः ॥ उत्तमेषुशूद्रस्यसर्वत्रस्नानम् ॥ मत्याना
पदिविप्रस्यवर्णेषुसांतपनकृच्छ्रमहासांतपनचांद्रायणानि ॥ अभ्यासेतुमासिकद्वैमा
सिकत्रैमासिकषण्मासिकानीत्यादिमाधवीयादौज्ञेयम् ॥ अपदासस्यस्वदास्युत्प
न्नस्यसपिण्डमृतौस्नानमात्रेणस्वामिकार्येस्पृश्यत्वम् ॥ भक्तदासस्यत्र्यहोर्ध्व
म ॥ सद्यःस्पृश्योगर्भदासोभक्तदासस्त्र्यहाच्छुचिरितिस्मृत्यन्तरोक्तेः ॥ मृत्य
कर्मकराःशूद्रदासीदासास्तथैवच ॥ स्नानेशरीरसंस्कारेगृहकर्मण्यदूषिता इति
शातातपोक्तेश्च ॥ एतच्चानन्यसाध्येतत्कार्यमात्रे ॥ अन्यत्रमासाद्याशौचमस्त्ये
व ॥ एवंदास्यामपि ॥ सूतिकायास्तस्याअस्पृश्यत्वमपिमासमात्रम् ॥ दासीदा
सश्चसर्वोवैयस्यवर्णस्ययोभवेत् । तद्वर्णस्यभवेच्छौचं दास्यामासस्तुसूतकमित्यं
गिरसोक्तेः(षडशीतावपि) स्वामिशौचेनदासाद्याःस्पृश्यामासात्तुकर्मसु । यो
ष्याःस्युर्मासतोदासीसूतीचेत्स्पृश्यतामियात् ॥ दत्तदासादीनांस्वसपिंडमरणा
दौस्वाम्याशौचसमसंख्यदिनोर्ध्वं सत्यपिमासाद्याशौचेस्वामिकार्येस्पृश्यतेतिह
रदत्तः ॥ दासांतेवासिभृतकाःशिष्याश्चैकत्रवासिनः । स्वामितुल्येनशौचेनशु
ध्यंतिमृतसूतकेइतिबृहस्पतिस्मृतेः (दासश्चात्र) गृहजातस्तथाक्रीतोलब्धोदा
यादुपागतः । अन्नकालभृतस्तद्वदाहितःस्वामिनाचयः ॥ मोक्षितोमहतश्चर्णाद्यु
द्धप्राप्तःपणेजितः । तवाहमित्युपगतःप्रव्रज्यावसितःकृतः ॥ भक्तदासश्चविज्ञेय
स्तथैववडवाहृतः ॥ विक्रेताचात्मनःशास्त्रेदासाःपंचदशस्मृताइति ॥ नारदोक्तेषु

गर्भभक्तदासीविनाज्ञेयाः॥वडवादासीतयाहृतस्तामुद्वाह्यदासोजातइत्यर्थः॥ अंते वास्यपितेनैवोक्तः॥स्वशिल्पमिच्छन्नाहर्तुंबांधवानामनुज्ञया। आचार्यस्यवसेदंते कृत्वाकालंसुनिश्चितम् ॥ आचार्यःशिक्षयेदेनंस्वगृहेदत्तभोजनमिति ॥ शिष्य स्तत्तुल्योविद्यार्थी (दासादेःस्वामितत्सपिंडमरणेतुविष्णुः) पत्नीनांदासनामा नुलोम्येनस्वामितुल्यमाशौचम् ॥ मृतेस्वामिन्यात्मीयमितिप्रतिलोमदासाना माशौचाभावः ॥ वर्णानामानुलोम्येनदास्यंनप्रतिलोमतइतियाज्ञवल्क्योक्तेः (अथरात्रौजननेमरणेवा) रात्रिंत्रिभागांकृत्वाद्यभागद्वयेचेत्पूर्वंदिनमंत्येतूत्तरमि तिमिताक्षरायाम् ॥ यत्तुप्रागर्धरात्रात्प्राक्वासूर्योदयात्पूर्वंदिनमित्युक्तंतद्दे शाचारतोव्यवस्था ॥ एवंचाशौचसाहिताग्नेर्दाहंतद्भिन्नस्यमरणमारभ्यज्ञेय म् ॥अनग्निमतउत्क्रांतेराशौचादिद्विजातिषु । दाहादग्निमतोविंद्याद्विदेशस्थे मृतेसतीतिपैठीनसिस्मृतेः ॥ साग्निराहिताग्निः ॥ आहिताग्निश्चेत्प्रवसन्म्रि येतपुनःसंस्कारंकृत्वाशववदाशौचमितिवसिष्ठेविशेषोक्तेः ॥ दाहादेवतुकर्त व्यंयस्यवैतानिकोविधिरितिब्राह्माच (यत्तु) धूर्तस्वामिनारामांडारेणचोक्त साहिताग्नेरपिमरणाद्येवदशरात्रंदशाहंशावमाशौचमिति मरणनिमित्तत्वात्त स्य॥ यत्तु दाहादेवतस्याशौचमुक्तंतत्संस्कारनिमित्ताशौचंपृथगेव ॥ तेनगृह्या ग्नेःसंस्कारांगंत्रिरात्रम् ॥ श्रौताग्नेस्तुदशरात्रम् ॥ मरणनिमित्तं तूभयोर्दशाह म् ॥ दाहात्प्रागपीतितद्वचनविरोधात्पूर्वस्यैवोत्कर्षोन्मूलकल्पनालाघवाच्च चिन्त्यम् ॥ अथातिक्रान्ताशौचम् ॥ तत्राशौचमध्येजननादौज्ञातेतच्छेषेणशु द्धिः॥ विगतंतुविदेशस्थंशृणुयाद्योह्यनिर्दशम् । यच्छेषंदशरात्रस्यतावदेवाशु चिर्भवेदितिमनूक्तेः॥ अयंकोचदेतत्पुत्रातिरक्तविषयम् ॥ तेषांत्वाशौचमध्ये श्रवणेपितदाद्येवदशाहादि ॥ पितरौचेन्मृतौस्यातांदूरस्थोपिहिपुत्रकः । श्रु त्वातद्दिनमारभ्यदशाहंसूतकीभवेदित्यस्यसर्वापवादत्वादित्याहुस्तन्न ॥ ज्ञानम रणस्यनिमित्तत्वादनग्निमतउत्क्रांतेरित्यादिविरोधाच्च (स्मृत्यर्थसारेपि) जनने मरणेवाप्रथमदिनादूर्ध्वंज्ञातेपुत्रादीनांशेषेणैवशुद्धिरिति ॥ षडशीतावपरार्के चैवम् (दशाहादूर्ध्वंज्ञातेतुवृद्धवशिष्ठः) मासत्रयेत्रिरात्रंस्यात्षण्मासेपक्षिणीत

था । अहस्तुनवमादर्वागूर्ध्वंस्नानेनशुध्यति ॥ जननेत्वतिक्रांताशौचंनास्त्येव ॥
नाशुद्धिःप्रसवाशौचेव्यतीतेषुदिनेष्वपीतिदेवलोक्तेः ॥ पितुःस्नानंतत्रापिभवत्ये
व ॥ निर्दशंज्ञातिमरणंश्रुत्वापुत्रस्यजन्मच । सवासाजलमाप्लुत्यशुद्धोभवतिमानवइ
तिमनूक्तेः ॥ तच्चातिक्रांताशौचंदशाहादिजात्याशौचविषयम् ॥ नत्वनुपनीता
दिनिमित्तत्रिरात्रादौ ॥ उपनीतेतुविषयेतस्मिन्नेवातिकालजमितिव्याघ्रोक्तेः ॥
निर्दशंज्ञातिमरणमतिक्रांतेदशाहेत्विति मनूक्तेश्च (माधवीयेदेवलस्तु) आत्रि
पक्षात्त्रिरात्रंस्यात्षण्मासात्पक्षिणीततः । परमेकाहमावर्षादूर्ध्वंस्नात्वाविशुध्य
तीत्याह ॥ तत्रापदनापद्विषयत्वेनव्यवस्था ॥ इदंचैकदेशे ॥ देशांतरेतुस्नानमात्र
म ॥ देशांतरमृतंश्रुत्वाक्लीबेवैखानसेयतौ । मृतेस्नानेनशुध्यंतिगर्भस्रावेचगोत्रि
णइतिपराशरोक्तेरितिविज्ञानेश्वरः ॥ स्नानंवत्सरांते ॥ अर्वाक्त्रिपक्षात्त्रिरात्र
मंषण्मासाच्चदिवानिशम । अहःसंवत्सरादर्वाग्देशांतरमृतेष्वपीतिवृद्धोक्तेरि
तिमाधवः ॥ इदंचपिंडानांदेशांतरेस्नानंभोदकानामित्युक्तम् (लक्षणंत्वाहबृह
स्पतिः) महानद्यंतरंयत्रगिरिर्वाव्यवधायकः । वाचोयत्रविभिद्यंतेतद्देशांतरमु
च्यते ॥ देशांतरंवदंत्येकेषष्टियोजनमायतम् । चत्वारिंशद्वदंत्यन्येत्रिंशदन्येतथै
वचेति ॥ एतत्सर्वंमातापितृभिन्नविषयम् ॥ तयोस्तुपितरौचेदितिपूर्वपैठीनसि
वाक्यात्सदापूर्णमेवदशाहादि (स्मृत्यर्थसारेपि) मातापितृमरणेदूरदेशेपिसंवत्स
रोर्ध्वमपिपुत्रोदशाहादिकंपूर्णमाशौचंकुर्यात ॥ स्त्रीपुंसयोःपरस्परंसपत्नीषुचैव
मिति (शुद्धितत्त्वादयोगौडास्तु) ऊर्ध्वंसंवत्सरादाद्यादबंधुश्चेच्छ्रुतेमृतः । भवेदे
काहमेवात्रयतिसंन्यासिनांनत्विति देवलोक्तेः ॥ पितरोरन्दमध्येत्रिरात्रमूर्ध्वमे
काहः ॥ बंधुर्मातापिताभर्ताच ॥ पूर्वोक्तदशाहस्तुकलिंगादिदेशपरइत्याहुः ॥
तेबंधुपदस्यपुत्रादिपरत्वे मानाभावादुपेक्ष्याः ( सापत्नमातुस्तुदक्षः ) पितृप
त्न्यामपेतायांमातृवर्जंद्विजोत्तमः ॥ संवत्सरेव्यतीतेपित्रिरात्रमशुचिर्भवेत ॥
हीनवर्णामातृषुसपत्नीषुचैवमितिस्मृत्यर्थसारे ॥ केचित्तुपितुःपत्न्यांप्रमीतायामौर
सेतनयेतथैतिब्राह्मोक्तेरौरसेपीदमाहुः ॥ पडशीतावप्येवम् ॥ एतत्सर्ववर्णतुल्य
म ॥ तुल्यंवयसिसर्वेषामतिक्रांतेतथैवचेतिव्याघ्रोक्तेः ॥ अथाशौचसंपाते

च्यते ॥ तत्र शावे शावं सूतके सूतकम् ॥ शावे सूतकं सूतके शावं वा ॥ तत्राप्युत्तरं का
लतः पूर्वेण समन्यूनमधिकं चेति द्वादश भेदाः ॥ यद्येकदिने समन्यूनमधिकं वाशौ
चद्वयं तत्र तंत्रेणान्यसिद्धिः ॥ द्वयोरेककालत्वात् ॥ यदा तु द्वितीयादिदिनेषूत्तरं
सजातीयं शावे जननं वा समकालं न्यूनकालं वा परं स्यात्तदा षट्सु पक्षेषु पूर्वशेषेण शु
द्धिः ॥ अंतरा जन्ममरणे शेषाहोभिर्विशुध्यतीति याज्ञवल्क्योक्तेः ॥ अंतरा ज्ञा
ते इत्यर्थः ॥ ज्ञातस्यैव जननादेर्निमित्तत्वात् ॥ पूर्वाशौचोत्तरं तन्मध्योत्पन्ने ज्ञाते तू
त्तरमेव कार्यम् (शुद्धितत्त्वेप्युक्तम्) पूर्वाशौचांतरुत्पन्नं समानं लघु वा निमित्तं त
त्कालादुपरि श्रुतं स्वाशौचहेतुरेव ॥ अज्ञातं तु नाश्र विज्ञातेन दोषः स्याच्छ्राद्धादिषु
कथंचनेत्यस्य शौचसांकर्येपि प्रवृत्तेः ॥ तेनाज्ञानाद्वृषोत्सर्गादौ कृते पश्चाज्ज्ञाते
पि नावृत्तिरिति (माधवीयेयमर्थोपि) जनने जननं चेत्स्यान्मरणे मरणं तथा । पूर्वशेषे
ण शुद्धिः स्यादुत्तराशौचवर्जनम् ॥ अत्र केचिदंतर्दशाहे स्यातां चेत्पुनर्मरणजन्मनी ।
तावत्स्यादशुचिर्विप्रो यावत्तत्स्यादनिर्दशमिति ॥ मनुपराशराद्यैर्दशा[illegible]ा
त्पूर्णाशौचेनैव पूर्वशेषेण शुद्धिः ॥ त्र्यहाद्यल्पाशौचसंपाते तूत्तरेणैव शुद्धिरित्या
हुः ॥ हरदत्तोप्येवमाह ॥ गौडा अप्येवम् ॥ तन्न ॥ याज्ञवल्क्यादिवचनेन दशाहस्य
तुल्यकालाशौचोपलक्षणत्वात् ॥ समानाशौचसंपाते प्रथमेन समापयेत् ॥ अस
मानं द्वितीयेन धर्मराजवचो यथेति माधवीये शंखोक्तेः ॥ अपरार्कमिताक्षरादि
विरोधाच्च ॥ यदा तु सूतके शावं समन्यूनमधिकं वा तदा न पूर्वशेषाच्छुद्धिः (तदाहां
गिराः) सूतके मृतकं चेत्स्यान्मृतके त्वथ सूतकम् । तत्राधिकृत्य मृतकं शौचं कुर्यान्न
सूतके (षट्त्रिंशन्मते) शावाशौचे समुत्पन्ने सूतकं तु यदा भवेत् । शावेन शुध्यते
सूतिर्न सूतिः शावशोधिनी (चतुर्विंशतिमतेपि) मृतेन शुध्यते जातं न मृतं जातके
न तु ॥ अतो यदा दशाहजननमध्ये तद्दिने वा त्र्यहादिशावं तदा पूर्वेणाशुद्धावपि तन्नि
मित्तमस्पृश्यत्वं भवत्येव ॥ मरणोत्पत्तियोगे तु गरीयो मरणं भवेदिति कौर्माच्च
(गौतमव्याख्यायां वृद्धाचारिरपि) सूतकाद्द्विगुणं शावं शावाद्द्विगुणमार्तवम् ।
आर्तवाद्द्विगुणा सूतिस्ततोपि शवदाहकः ॥ अत्र पूर्वपूर्वेण नोत्तरोत्तरनिवृत्तिर
स्पृश्यत्वाधिक्यादित्यर्थः (षडशीतावपि) स्वभावबहुसूतिस्तु न्यूनशावविशो

ध्विनीतिरात्रिशेषादौवर्धिताद्विविदिनैरागंतुकैःसूतैर्बहुत्वंनस्वभावेन ॥ अतस्तत्र
न्यूनशावस्यापिनपूर्वेणाशुद्धिरितिवक्तुंस्वभावेनेत्युक्तम् ( ब्राह्मेपि ) नागंतुकैर
श्याहोभिराशौचमपनुद्यते । नचपातनिमित्तेनशावस्यान्यस्यशोधनमिति ॥ एवं
नवपक्षाः ॥ यदातुत्र्यहाद्यल्पाशौचमध्येसजातीयंविजातीयंवादीर्घकालमुत्तरं
तदाप्युत्तरंपूर्णंकार्यम् ॥ नपूर्वेणाशुद्धिः ॥ स्वल्पाशौचस्यमध्येतुदीर्घाशौचंभवे
द्यदि । नपूर्वेणविशुद्धिःस्यात्स्वकालेनैवशुध्यतीत्युशनसोक्तेः ॥ तेनत्र्यहादि
शावमध्येदशाहादिसूतकेपिनपूर्वेणाशुद्धिरित्यपरार्कः ॥ शावनिमित्तस्पृश्य
त्वंचभवत्येव ( शुद्धिविवेकेतु ) शावेनशुध्यतेसूतिरितिप्रागुक्तेस्तत्राप्युत्तरा
शौचनिवृत्तिरुक्ता ॥ तन्न ॥ उत्तरस्यकालाधिक्येनबलवत्त्वात् ( माधवीयेप
मोपि ) अघवृद्धिमदाशौचंपश्चिमेनसमापयेत् । यथात्रिरात्रेप्रक्रांतेदशाहंप्रवि
शेद्यदि ॥ आशौचंपुनरागच्छेत्तत्समाप्यविशुध्यति ( हारीतोपि ) गुरुणालघुशु
ध्येतुलघुनानैवतद्गुरुर्विति गुरुत्वंलघुत्वंचकालकृतमेव ॥ पूर्वानुरोधात् ॥ एतच्च
हरदत्तेनस्पष्टमुक्तम् ॥ मिताक्षरायामप्येवम् ( यत्तु ) आद्यानांयौगपद्येतुज्ञेया
शुद्धिर्गरीयसी । मरणोत्पत्तियोगेतुगरीयोमरणंभवेदितिहारीतकौर्मादितत्रा
स्पृश्यत्वाभिप्रायंशावस्यगुरुत्वंज्ञेयम् ( क्वचिदल्पकालेनापिदीर्घकालाशौच
निवृत्तिमाहदेवलः ) परतःपरतोशुद्धिरघवृद्धौविधीयते ॥ स्याच्चेत्पंचतमादह्नः
पूर्वेणैवात्रशिष्यते ॥ अस्यार्थः अघवृद्धौदीर्घाशौचेपरतोशुद्धिःपरमाशौचम् ॥
यदिपूर्वाशौचमुत्तरस्यपंचमदिनात्परतोनुवर्ततेतदापूर्वेणैवशुद्धिः ॥ पूर्वस्योत्तरा
शौचावधिकव्यापित्वेपूर्वशेषाच्छुद्धिरित्यर्थः ॥ यथाषष्ठमासेगर्भपात
निमित्तषडहाशौचमध्येदशाहपातेपूर्वेणोत्तरनिवृत्तिः ॥ यथावात्र्यहमध्येस्रा
वपातनिमित्तचतुरहपंचाहयोरितिकश्चित् ॥ तन्न ॥ दशाहावधिपूर्वशेषशु
द्ध्याविदन्नवाक्यविरोधात् ॥ षष्ठादिदिनेपूर्णाशौचमंत्यरात्रौतु द्व्यह इत्यनौ
चित्याच्च ॥ अस्मद्गुरवस्तुपंचतमादह्नआशौचंततोन्यूनंत्र्यहादिचेत्स्यात्तस्मि
न्विषयेपूर्वेणैवाशुद्धिःशिष्यते ॥ दशाहादिरात्रिशेषेत्र्यहादिपातेत्र्यहाद्यल्पा
शौचानांपरस्परं रात्रिशेषेसंपातेचन द्व्यहादिवृद्धिरित्यर्थमाहुः ( क्वचित्पूर्व

शेषेणाशुद्धेरपवादमाहगौतमः ) रात्रिशेषेसतिद्वाभ्यां प्रभातेतिसृभिरिति ॥ प्रभातेंत्ययामे ॥ त्रिशेषेतुद्व्यहाच्छुद्धिर्यामशेषेशुचिस्त्र्यहादितिशातातपोक्तेः ॥ इदंशावांतेसूतकपातेसजातीयेवातुल्यम् ॥ अत्रकेचित् ॥ रात्रिशब्दोऽहोरात्रपरः ॥ अहःशेषेद्वाभ्यांप्रभातेतिसृभिरितिशंखलिखितोक्तेः ॥ अथयदिदशरात्राःसन्निपतेयुराद्यंदशरात्रमाशौच मानवमाद्दिवसादतऊर्ध्वंद्विरात्रेणाव्युष्टायांत्रिरात्रेणेतिबौधायनोक्तेः ॥ पुनःपातेदशाहात्प्राक्पूर्वेणासहगच्छति। दशमेऽह्निपतेद्यस्याहर्द्वयात्सविशुद्ध्यतीति ॥ प्रभातेतुत्रिरात्रेणादशरात्रेष्वयंविधिरितिदेवलोक्तेश्च ॥ नवमदशमशब्दौचोपात्यांत्यदिनपरौ ॥ तेनसप्तरात्रादावपितथेत्याहुः ॥ माधवीयेप्येवम् ( अन्येत्वाहुः) अन्तर्दशाहेस्यातांचेत्पुनर्मरणजन्मनी । तावत्स्यादशुचिर्विप्रो यावत्तत्स्यादनिर्दशमिति ॥ मनुपराशराद्यैर्दशमदिनेनोत्तरस्यशुद्धेरुक्तत्वाद्विरोधःस्पष्टएव ॥ विरोधेच ॥ यद्वैकिंचनमनुरवदत्तत्भेषजम् । कलौपाराशरस्मृतिरित्यनेनपूर्ववचसांबाधःअतएववाचस्पतिनातेषामनाकरत्वमुक्तम्॥ साकरत्वेपिजातिमात्रविप्रादिविषयंदेशांतरविषयमवायुगान्तरविषयंवास्तु॥तेनगौतमीयेरात्रिशब्दोनाहोरात्रपरः॥रात्रिमात्रावशिष्टे इतिमिताक्षरोक्तेश्च ॥ नक्तुक्तविकृतिरिवान्यथाव्याख्यायुक्ता ( माधवस्तु) अनिर्गतदशाहमितिपूर्वस्वग्रन्थविरोधादुपेक्ष्यइति ( अस्मत्पितृचरणास्तुबौधायनीये) आनवमाद्दिवसादितिद्वितीयाशौचस्यनवमंदिनंप्रथमस्यदशममेवाहः ॥ द्व्यहादिवृद्धेः ॥ पूर्वशेषापवादत्वात्तस्यचन्यायतोद्वितीयदिनादेवप्रवृत्तेः ॥ अतऊर्ध्वमितिदशमरात्रिपरम् ॥ शंखलिखितोक्तौदेवलोक्तौचाहःशेषेदशमेह्निचातीतेरात्रौपतेदित्यर्थः ॥ दशाभ्यांपितानामकुर्य्यादितिवत् ॥ तेननसन्वाद्यैर्विरोधोनापिमिताक्षराद्यैरित्याहुः ॥ अपरार्केनिर्णयामृतस्वरसोप्येवम् ( यत्तुतत्रैवब्राह्मे ) आद्यम्भागद्वयंयावत्सूतकस्यतुसूतके । द्वितीयेपतितेत्वाद्यात्सूतकाच्छुद्धिरिष्यते ॥ अतऊर्ध्वंद्वितीयात्तु सूतकान्ताच्छुचिस्मृतः ॥ एवमेवविचार्यस्यान्मृतकेमृतकान्तरे । मृतकस्यान्तरेयत्र मृतकंप्रतिपद्यते ॥ सूतकस्यान्तरेवाथ मृतकंयत्रविद्यते ॥ मृतकान्तेभवेत्तत्र शुद्धिर्वर्णेषुसर्वशः इति ॥

अस्यार्थस्तत्रैवोक्तः ॥ पूर्वाशौचचरमाहोरात्रस्यदिनरूपेआद्यभागद्वयेऽन्याशौ चपातेपूर्वेणशुद्धिः ॥ भागद्वयेऽर्धरात्रौसूतकान्तरेद्वितीयात्पूर्वभिन्नात्सूतकांता द्द्यहादिरूपाच्छुद्धिरिति ॥ अपरार्केत्वाशौचकालंत्रिधाविभज्यनिर्णयविष यत्वेनेदमुक्तम् ॥ अस्यवचनस्यनिर्मूलत्वोक्तिरज्ञोक्तिरेव ॥ अतःपूर्वाशौचान्त्य रात्रावन्याशौचेहोरात्रद्वयमधिकंरात्रेरन्त्ययामेतुदिनत्रयमिति भट्टचरणोपदि ष्टःपन्थाः ॥ एतत्सम्पूर्णाशौचसम्पातएव ॥ रात्रिशेषेत्रिरात्रादिसम्पातेतुपूर्व शेषेणैवशुद्धिः ॥ द्विरात्रादिवृद्धेः पूर्ववाक्यैर्दशाहविषयत्वादपवादाभावे शेष शुद्धेरेवसामान्यतःप्रवृत्तेः ॥ षडशीतौतुदशाहान्तेत्र्यहपातेपक्षिणीत्रिदिनवृद्धि रुक्ता ॥ रात्रिशेषेयदाशौचं पूर्वानधिकमापतेत् । ऊर्ध्वंदिनद्वयंपूर्वाद्यामशेषे दिनत्रयमिति ॥ अनधिकंसमंन्यूनंवातत्तुच्छम् ॥ निर्मूलत्वादन्ते पक्षिण्यादि पातेपक्षिद्विरात्रादिवृद्ध्यापत्तेश्च ॥ पूर्वाशौचांतर्वर्धितद्वित्रिदिनमध्येऽधिका शौचांतरपातेतुवर्धितस्याल्पत्वादधिकेनैवशुद्धिः ॥ नचवर्धितस्यपूर्वशेषत्वंशं कनीयम् ॥ रात्रिशेषपूर्वशेषशुद्ध्यपवादेनैमित्तिकावृत्तिन्यायोज्जीवनात् ॥ अपवादाभावेउत्सर्गस्यप्राप्तेः ( अपवादांतरमाहशंखः) मातर्यग्रेप्रमीतायामशु द्धौम्रियतेपिता । पितुःशेषेणशुद्धिस्यान्मातुःकुर्यात्तु पक्षिणीम् ॥ पादत्रयंस्पष्ट म ॥ तुर्यस्यत्वयमर्थः ॥ पित्राशौचमध्येमातृमृतौपित्राशौचान्तेमातुःपक्षिणीम धिकांकुर्यादिति ॥ अत्राशुद्धावित्युक्तेरात्महादेःपितुराशौचाभावान्मातृमरणे नपक्षिणी ॥ किन्तुपूर्णमेवाशौचम् ॥ इयंचपक्षिणीतृतीयादिदिनपरा ॥ नाद्य दिनद्वये॥ प्रतिनिमित्तनैमित्तिकावृत्तिन्यायापवादपूर्वशेषापवादत्वादितिपद्द चरणाः॥ सपिण्डाद्याशौचेनमातापित्रोराशौचापगमोनास्त्येव॥ एवंभर्तुरपि॥ इयंचपक्षिणीदशमदिनात्पूर्वंमातृमरणेज्ञेया ॥ दशम्यांरात्रौतत्प्रभातेवामातृम रणेद्द्यहत्र्यहसमुच्चितापक्षिणीतिकश्चित् ॥तन्न॥ संख्यांतरोपजननापत्त्यात्र्य हादिश्रुति बाधापत्तेः ॥ अतएवैकादेयाः षट्देयाइत्यादौ श्रुतसंख्याबाधापत्तेःस मुच्चयोनिरस्तोद्वादशे ॥ गुरुणालघोरंतर्गतेः ॥ गुरुणालघुशुद्ध्येदित्युक्तेश्च ॥ मातुरन्वारोहणेतुनपक्षिणी ॥ यदानारीविशेदग्निं प्रियस्यप्रियवांछया । तदा

शौचंविधातव्यंभर्त्राशौचक्रमेणाहीति पृथ्वीचन्द्रोदयेलघुहारीतोक्तेः ( तत्रैव षडशीतिमतेपि) मृतंपतिमनुव्रज्य पत्नीचेदनलंगता। नतत्रपक्षिणीकार्या पैतृकादेवशुध्यति ॥ पुत्रोन्योवाग्निदस्तस्यास्तावदेवाशुचिस्तयोः। नवश्राद्धञ्च पिण्डं च युगपत्तुसमापयेत् ॥ गृहीताशौचानांपुत्राणांपितुःसंस्कारेमातुःसपिंडस्यवामरणेनायंनिर्णयः ॥ अतिक्रान्तकालाद्यमानर्मिमित्तस्यबलवत्त्वात् ॥ द्वादशवर्षोत्तरसंस्काराशौचमध्येसपिण्डमरणेप्येवम् (यत्तुअपरार्केब्राह्मे) ऋग्वेदवादात्साध्वीस्त्रीनभवेदात्मघातिनी । त्र्यहाशौचेतुनिर्वृत्तेश्राद्धंप्राप्नोतिशाश्वर्वादितितद्भर्तुराशौचोत्तरमन्वारोहणेत्रिरात्राशौचपरमिति पृथ्वीचन्द्रः ॥ ब्राह्मणादेःक्षत्रियाद्यनुगमनेल्पाशौचपरमित्यपरार्कः ( शुद्धितत्त्वादयोगौडास्तु) भर्तुराशौचोत्तरमन्वारोहणेत्रिरात्रम् ॥ सहगमनेतुसम्पूर्णम् ॥ युद्धहतस्य सद्यःशौचेन्वारोहणेब्राह्मोक्तेस्त्रिरात्रत्वात् ॥ भर्तुरपिच्त्र्यहेणापिण्डदानम् ॥ एकचित्तेतुसद्यःशौचमित्याहुः ॥ अन्यत्प्रागुक्तम् ॥ पूर्वशेषेणशुद्धेरपवादांतरमुक्तंषडशीत्याम् ॥ पूर्वाशौचेनयाशुद्धिः सूतकेमृतकेचसा। सूतिकामग्निदंहित्वा प्रेतस्यचसुतानपि (निर्णयामृतेस्मृतिसंग्रहेपि) इयंविशुद्धिरुदितासूतिकासग्निदम्बिना॥ इदंमूल्येनदाहकरणेमातुलादिसम्बन्धेनदाहमात्रकरणेतुत्रिरात्रमेवेत्युक्तंप्राक् (वृद्धात्रिः) सूतकात्तद्विगुणंशावं शावात्तद्विगुणमार्तवम्। आर्तवात्तद्विगुणासूतिस्ततोपिशवदाहकः ॥ तथाशौचसंपातेपिनशावजननिमित्तकार्यप्रतिबन्धः ॥ आशौचेतुसमुत्पन्ने पुत्रजन्मयदाभवेत् । कर्तुस्तात्कालिकीशुद्धिः पूर्वाशौचेनशुध्यतीति प्रजापतिस्मृतेः (आशौचेतुद्विविधेपिशातातपः)अन्तर्दाहेचजननात्पश्चात्स्यान्मरणंयदि। प्रेतमुद्दिश्यकर्तव्यं पिण्डदानं यथाविधि ॥ प्रारब्धेप्रेतपिण्डेतु मध्येचेज्जननंभवेत्। तथैवाशौचपिण्डांस्तु शेषान्दद्याद्यथाविधि ॥ मातुःपक्षिणी ॥ मध्येपितुरेकादशाहंकुर्यात् ॥ आद्यं श्राद्धमशुद्धोपिकुर्यादेकादशेहनीइतिस्मृतेः॥केचित्त्विदंक्षत्रियादिपरम्॥विप्रादेस्त्वाशौचांतरमेकादशाहश्राद्धंनेत्याहुः (अतएवविज्ञानेश्वरेण) दशमंपिण्डमुत्सृज्यरात्रिशेषेशुचिर्भवेदितिशुचित्वंमहे कोहिष्यांगविप्रानिमंत्रणपरमितिवद

तात्रशुद्धेरंगत्वंदर्शितम् ॥ एवंवृषोत्सर्गशय्यादानादावपिदेवयाज्ञिकेनत्वाशौ
चांतरेपिभवत्येवेत्युक्तम् ॥ अथाशौचापवादः ॥ सचपञ्चधा ॥ कर्तृतःद्रव्यतःमृ
तदोषतःविधानाच्च ॥ आद्योब्रह्मचारीइत्यादिषु ॥ नैष्ठिकानांवनस्थानां यती
नांब्रह्मचारिणां ॥ नाशौचंकीर्तितंसद्भिःपतितेचतथामृतइतिकौर्मोक्तेः ॥ तु
र्युपादेशावेवापितथैवचेतिदेवलपाठः ॥ आशौचमन्त्यकर्मोपलक्षणम् ॥ ब्रह्म
चारीनकुर्वीत शववाहादिकाःक्रियाः । यदिकुर्याच्चरेत्कृच्छ्रम्पुनः संस्कार
मेवचेतिदेवलोक्तेः ॥ एतत्पित्राद्यतिरिक्तविषयम् ॥ आचार्यस्वमुपाध्यायंमातरं
पितरंगुरुम् । निर्हृत्यतुव्रतीप्रेतंनव्रतेनवियुज्यतइतिमनूक्तेः (हारीतः) आचार्यं
स्वमुपाध्यायंपितरंमातरंगुरुम् । निर्हृत्यतुव्रतीप्रेतंनव्रतेनवियुज्यते ॥ मातापित्रो
स्तुयत्प्रोक्तंव्रतचारीतुपुत्रकः । व्रतस्थोपिहिकुर्वीतपिंडदानोदकक्रियाम् ॥ भव
त्यशौचंनैवास्यनवाग्निस्तस्यलुप्यते । स्वाध्यायंचप्रकुर्वीतपूर्ववद्विधिदर्शितम्
(संवर्तः) अन्यगोत्रोपसंबंधःप्रेतस्याग्निंददातियः । पिंडंचोदकदानंचसदशाहंस
माचरेत् ॥ निर्हरणमंत्यकर्मपरम् ॥ एवंमातामहस्य ॥ यथाव्रतस्थोपिसुतःपितुः
कुर्यात्क्रियांनृप । तथामातामहस्यापिदौहित्रःकर्तुमर्हतीत्यपरार्केभविष्योक्तेः ॥
मातापित्रोरुपाध्यायाचार्ययोरौर्ध्वदेहिकम् ॥ कुर्वन्मातामहस्यापिव्रतीनभ्रश्य
तेव्रतादितिकालादर्शाच्च ॥ तत्रांत्यकर्मनिमित्तमस्पृश्यत्वंदशाहमस्त्येव ॥ सगो
त्रोवासगोत्रोवायोग्निंदद्यात्सखेनरः । सोपिकुर्यान्नवश्राद्धंशुद्ध्येत्तुदशमेहनीति
दिवोदासोक्तवचनात् ॥ अतएवब्रह्मचारिणःशवकर्मणोव्रतान्निवृत्तिरन्यत्रमा
तापित्रोर्गुरोश्चेतिगौतमीयेव्रतनिवृत्तेरेवपर्युदासोनाशौचस्य ॥ संध्यादिकर्मलो
पस्तुनास्ति ॥ नत्यजेत्सूतकेकर्मब्रह्मचारीस्वकंक्वचिदितिछंदोगपरिशिष्टात् ॥
पित्रोर्गुरोर्विपत्तौतुब्रह्मचार्यपियःसुतः । सुव्रतश्चापिकुर्वीतअग्निंपिंडोदक
क्रियाम् ॥ तेनाशौचंनकर्तव्यंसंध्याचैवनलुप्यते । अग्निकार्यंचकर्तव्यंसायंप्रात
श्चनित्यशइतिचंद्रिकायांसंवर्तोक्तेश्च ॥ अत्रकर्मानधिकाररूपाशौचनिषेध
एव (अपरार्कमाधवादयस्तु) एकाहमाशौचमाहुःआचार्यंवाप्युपाध्यायंगुरुंवा
पितरंत्वा ॥ मातरंवास्वयंदग्ध्वाव्रतस्थस्तत्रभोजनम् ॥ कृत्वापततितेनातस्मात्प्रे

तान्नंतत्रभक्षयेतअन्यत्रभोजनंकुर्यान्नचतैःसहसंवसेत ॥ एकाहमशुचिर्भूत्वाद्वितीयेहनिशुध्यतीतिब्राह्मोक्तेः॥ तदन्नभोजनेतुप्रायश्चित्तंपुनरुपनयनमाशौचंच॥ दिवोदासादयस्तुब्राह्मोक्तेःप्रथमेह्निसंध्यादिलोपः ॥ ब्रह्मचारीयदाकुर्यात्पिंडंनिर्वपणांपितुः।तावत्कालमशौचंस्यात्पुनःस्नात्वाविशुद्ध्यतीतिप्रजापतिवचनात॥द्वितीयाहादौपिंडदानकालेएवास्पृश्यत्वमात्रंनान्यदेत्याहुः॥दशाहमस्पृश्यत्वेपिकर्मांगस्नानविधानार्थमेतदितियुक्तम॥ अंत्यकर्माकरणेतुब्रह्मचारिणःपित्रादिमरणेप्याशौचाभावएव॥ सोपिब्रह्मचार्यकालएव॥ समावर्तनोत्तरंतुपूर्वमृतानांत्र्यहाशौचंभवत्येव ॥ आदिष्टीनोदकंकुर्यादाव्रतस्यसमापनात । समाप्तेतदकंदत्वा त्रिरात्रमशुचिर्भवेदितिमनूक्तेः ॥ तत्रापिविकल्पः॥ पितर्यपिमृतेनैषांदोषोभवतिकर्हिचित । आशौचंकर्मणोंतेस्यात्त्र्यहंवाब्रह्मचारिणामितिछंदोगपरिशिष्टात ॥ तथाकृतजीवच्छ्राद्धेनकिमप्याशौचंनकार्यमितिहेमाद्रिः (शुद्धितत्त्वेकौर्मे) सद्यःशौचंसमाख्यातंदुर्भिक्षेचाप्युपद्रवे । डिंबाहवहतानांचविद्युतापार्थिवैर्द्विजः ॥ उपद्रवेत्यंतमरके ॥ उपसर्गमृतेचैवसद्यःशौचंविधीयतइतिपराशरोक्तेः ॥ उपसर्गोत्यंतमरकइतिशूलपाणयनिरुद्धभट्टादयः ( याज्ञवल्क्योपि ) आपद्यपिचकष्टायांसद्यःशौचंविधीयतइतिमरणसमयेपिनाशौचम (तथाचशुद्धिरत्नाकरेदक्षः) स्वस्थकालेत्विदंसर्वंसूतकंपरिकीर्त्तितं। आपद्गतस्यसर्वस्यसूतकेपिनसूतकम ॥ अतःसतिवैराग्येसंन्यासोप्यातुरस्यभवतीतिकेचित(अथकर्मतःत्रिंशच्छ्लोक्यां) तत्तत्कार्येषुसत्स्वव्रतिनृपनृपवद्दीक्षितर्त्विक्स्वदेशभ्रंशापत्स्वप्यनेकश्रुतिपठनभिषक्कारुशिल्पातुराणाम॥ संप्रारब्धेषुदानोपनयनयजनश्राद्धयुद्धप्रतिष्ठाचूडातीर्थार्थयात्राजपपरिणयनाद्युत्सवेष्वेतदर्थे ॥ नाशौचमितिशेषः ॥ सत्त्वीअन्नसत्रवान ॥ मुख्यसत्रस्यदीक्षितपदात्सिद्धेः ॥ व्रतीअनंतव्रतादिनियमवान ॥ नव्रतिनांव्रतेइतिविष्णूक्तेः (प्रचेताः) कारवःशिल्पिनोवैद्यदासीदासास्तथैवच। राजानोराजभृत्याश्चसद्यःशौचाःप्रकीर्तिताः॥ कारवःसूपकाराद्याः ॥ शिल्पिनश्चैलनिर्णेजकाद्याः ॥ आतुरस्यव्याधिनाशार्थदानादौतुलादानादेः ॥ प्रारंभोनांदीश्राद्धंसंकल्पोवा ॥ यजनंतडागोत्सर्ग

कोटिहोमादिः (लघुविष्णुः) व्रतयज्ञविवाहेषु श्राद्धे होमेऽर्चने जपे ॥ आरब्धे सूतकं न स्यादनारब्धे तु सूतकम् ॥ प्रारम्भो वरणं यज्ञे संकल्पो व्रतसत्रयोः । नांदीश्राद्धं विवाहादौ श्राद्धे पाकपरिक्रियेति ॥ पाकस्य परिसमंतात्क्रिया ॥ पाकप्रोक्षणमिति शुद्धिप्रदीपस्तन्मंदं ॥ रूढेर्योगापहारित्वात् ॥ तीर्थेति आशौचे आकस्मिकतीर्थप्राप्तौ ॥ विवाहदुर्गयज्ञेषु यात्रायां तीर्थकर्मणि । न तत्र सूतकं तद्वत्कर्मयज्ञादि कारयेदिति पैठीनसिस्मृतेः ॥ अत्र विशेषः प्रागुक्तः ॥ जपः पुरश्चरणादिः स्तोत्रपाठः ॥ अविच्छेदेन संकल्पितहरिवंशश्रवणादि च (अत एवोक्तं ब्राह्मे) गृहीतनियमस्यापि न स्यादन्यस्य कस्यचिदिति ॥ एवं देवपूजादि (मदनपारिजाते यमोऽपि) शिवविष्णवर्चने दीक्षा यस्य चाग्निपरिग्रहः । श्रौतकर्माणि कुर्वीत स्नातः शुद्धिमवाप्नुयात् (गौडशुद्धितत्त्वे मंत्रमुक्तावल्यां) जपो देवार्चनविधिः कार्यो दीक्षान्वितैर्नरैः । नास्ति पापं यतस्तेषां सूतकं वा यतात्मनाम् (राघवभट्टीये नारदः) अथ सूतकिनः पूजां वक्ष्याम्यागमचोदिताम् । स्नात्वा नित्यं च निर्वर्त्यमानस्या क्रियया तु वै ॥ बाह्यपूजाक्रमेणैव ध्यानयोगेन पूजयेत् ॥ यदि कामो न चेत्कामी नित्यं पूर्ववदाचरेत् (यत्तु नृसिंहकल्पे) सदा मंत्रजपं मुक्त्वा यदि स्यादशुचिर्नरः । मनसा विहितस्तत्र स्मरेन्मन्त्रं न तु चरेत् ॥ तन्मूत्राद्याशौचपरम् (रामार्चनचन्द्रिकायाम्) अशुचिर्वा शुचिर्वापि गच्छंस्तिष्ठन्स्वपन्नपि । मंत्रैकस्मरणो विद्वान्मनसैव सदाभ्यसेत् ॥ कालनियमाभावे तु स्तोत्र हरिवंशादि हेयमेव ॥ उत्सवो रथयात्रादिः ॥ एषु नाशौचम् ॥ अयं चाशौचाभावो नान्यगतत्वे आर्तौ च ज्ञेयः ॥ अत्र मूलमाकरे स्पष्टम् ॥ अत्र दीक्षितस्य अवभृथात्पूर्वमेवाशौचाभावः ॥ तत्रादित्वाशौचमस्त्येव ॥ तेन वैतानोपासनाः कार्या इति वैतानत्वेऽप्यवभृथादिन भवत्येव (अत एवोक्तं माधवीये ब्राह्मे) तद्वद्गृहीतदीक्षस्य वैविध्यस्य महामखे । स्नाने त्ववभृथे यावत्तावत्तस्य न सूतकमिति ॥ वैतानोपासनाः कार्या इत्यनेनैव सिद्धे ऋत्विजां दीक्षितानां चेति पुनर्दीक्षितग्रहणं यजमानस्वसंकल्पस्वार्थस्नानप्राप्त्यर्थं वेति विज्ञानेश्वरः ॥ वस्तुतस्तु दीक्षया संस्कृतस्य प्रागवभृथात्कर्मप्राप्त्यर्थं दीक्षितग्रहणम् ॥ तेन ततः पूर्वं निषेध एव ॥ यत्तु प्रारम्भो वरणं यज्ञे इति तदृत्वि

कुपरम् (तथा च छंदोगपरिशिष्टे) नदीक्षरणायाः परं यज्ञेनकृच्छ्रादित पश्चरन्निति॥
शुद्धितत्त्वेप्येवम् ॥ ऋत्विजांच मधुपर्कोत्तरमाशौचाभावः ॥ गृहीतमधुपर्कस्य
यजमानात्तु ऋत्विजः । पश्चादशौचेपतितेनभवेदितिनिश्चयइतिब्राह्मात् ॥
(अतएवरामांडारः) चतुर्णांवरणपक्षेऽन्येषामाशौचेऽन्य आगमयितव्यइत्याह
एवंस्मार्तेपि ॥ तुलाकोटिहोमादौमधुपर्केसतिदोषाभावोज्ञेयः ॥ यत्तु प्रारम्भोव
रणांयज्ञइतितत्रापिमधुपर्कांतंज्ञेयम् ॥ तेनाधानेष्टिपशुबन्धादौतदभावादन्येभवं
तीतिसिद्धम् (अपवादांतरमाहयाज्ञवल्क्यः) वैतानोपासनाःकार्याःक्रियाश्चश्रु
तिचोदनात् ॥ तत्रत्यागमात्रेस्नानोत्तरंस्वयंकर्तृत्वम् ॥ श्रौतेकर्मणितत्कालंस्नातः
शुद्धिमवाप्नुयादितिस्मृतेः ॥ त्यागातिरिक्तेतुश्रौतेस्मार्तेचान्यस्यैवकर्तृत्वम् ॥
सूतकेमृतकेचैवअशक्तौश्राद्धभोजने । प्रवासादिनिमित्तेषुहावयेन्नतुहापयेदिति
ततस्पत्युक्तेः ॥ नित्यानिनिवर्तेरन्वैतानवर्ज्यम् ॥ शालाग्नौचैकेऽन्यएतानिकुर्यु
रितिपैठीनसिस्मृतेश्चेतिविज्ञानेश्वरः ॥ एकग्रहणांपजार्थं ॥ तेनस्मार्तंकार्यमेवे
तिहारलतायाम् ॥ दाक्षिणात्यास्तुविकल्पमाहुः (अपरार्कादिनिबन्धास्तु)
श्रौतंसर्वंस्वयंकार्यं ॥ स्मार्तेतुत्यागातिरिक्तेऽन्यस्यैवकर्तृत्वम् (त्यागमात्रेतुस्व
स्य) कर्मवैतानिकंकार्यंस्नानोपस्पर्शवान्स्वयमितिहारीतोक्तेः ॥ दर्शंचपूर्णमा
संचकर्मवैतानिकंचयत् । सूतकेपित्यजेन्मोहात्प्रायश्चित्तीपतेद्द्विज इति मरी
च्युक्तेः ॥ जन्महान्योर्वितानस्यकर्मत्याशोनविद्यते । शालाग्नौकेवलोहोमःका
र्यएवान्यगोत्रजैरितिजाबालोक्तेश्चेत्याहुः ॥ आशार्केप्येवम् ॥ याज्ञिकाअप्ये
वम् ॥ सूतकेतुसमुत्पन्नेस्मार्तंकर्मकथंभवेत् । पिण्डयज्ञंचरुंहोममसगोत्रेणकार
येदितिजातूकर्ण्योक्तेश्च ॥ चरुःस्मार्तस्थालीपाकः ॥ श्रवणाकर्मादिश्चेति
विज्ञानेश्वरः ॥ प्रारब्धंतुसपिंडेनापिकार्यम् ॥ नचतत्कर्मकुर्वाणाः सनाभ्योप्यशु
चिर्भवेदितिमनूक्तेः (छन्दोगपरिशिष्टेपि) होमःश्रौतेतुकर्तव्यःशुष्कान्नेनफले
नवा । अकृतंहावयेत्स्मार्तेतदभावेकृताकृतम् ॥ अकृतंव्रीह्यादि ॥ कृताकृतंतंदुला
दि ॥स्मार्तहोमादौतुविकल्पोज्ञेयः ॥ शालाग्नौचैकइतिप्रागुक्तेः ॥ यदाकरणं
तदान्यद्वारा ॥ अत्रेदंतत्त्वम् ॥ येषांबह्वृचादीनांद्वादशरात्रमहोमेपि नाग्निर्वि

च्छेदस्तैर्नकार्यम् ॥ तैत्तिरीयाद्यैःकार्यम् ॥ त्रिरात्रमहूयमानोग्निर्लौकिकःसंप
द्यतेइतिसुदर्शनभाष्येवचनात् ॥ समारूढेत्वरणौतेनापिनकार्यम् ॥ किंतुपुनरा
धानमेव ॥ समारोपप्रत्यवरोहयोराशौचापवादाभावादनन्यकर्तृकत्वाच्च ॥ अ
न्यथापुनराधानमपिस्यात् ( यत्त्वाश्वलायनः ) शौचापिसूतकेशावपर्वणीष्टिंम
हापदि । पुष्पवत्यांचभार्यायांनकुर्यात्तांकदाचन ॥ स्मार्ताग्निःसूतकेशावेस्वयं
नजुहुयाद्द्विजः । श्रौताग्निस्तुसकृद्धुत्वासमाप्तेवास्वयंहुनेदितितदपिसमारूढप
रम् (तदाहसएव) स्मार्ताग्निरात्मनोन्येषामभावेसूतकादिषु । समारोप्यतदंतेषु
विहृत्यजुहुयात्स्वयमिति (तथाचमनुः) प्रत्यूहेन्नाग्निषुक्रियाइतिवैश्वदेवस्त्वग्
निसाध्यत्वेपिवचनान्निवृत्तिः ॥ विप्रोदशाहमासीतवैश्वदेव विवर्जितइतिसं
वर्तोक्तेः (यद्यपि) पंचयज्ञविधानंतुनकुर्यान्मृतजन्मनोरितितेनैवोक्तेः पूर्वोनि
षेधोवृथर्थस्तथाप्यापस्तंबादीनांवैश्वदेवस्यपंचयज्ञभिन्नत्वात्पृथङ्निषेधः ॥ हर
दत्तस्त्वाशौचेपिब्रह्मचैवैश्वदेवःकार्यः ॥ तस्यहवनध्यायोयदात्माशुचिर्यद्देश
इतिब्रह्मयज्ञस्यैवाशौचेविशिष्यनिषेधात् ( संध्यादीनामप्यवादमाहापरार्केपु
लस्त्यः ) संध्यामिष्टिंचरुंहोमंयावज्जीवंसमाचरेत् । नत्यजेत्सूतकेवापित्यजन्ग
च्छेदधोद्विजः ॥ सूतकेमृतकेचैव संध्याकर्मसमाचरेत् । मनसोच्चारयेन्मंत्रान्प्रा
णायामृतेद्विजः ( यत्तु चंद्रिकायांजाबालः ) संध्या पंचमहायज्ञान्नैत्यकंस्मृ
तिकर्मच । तन्मध्येहापयेत्तेषांदशाहांतेपुनःक्रियेति (यच्चसंवर्तः) सूतकेकर्मणां
त्यागःसंध्यादीनांविधीयते ( यच्चविष्णुपुराणम् ) सर्वकालमुपास्यातुसंध्ययोः
पार्थिवेष्यते । अन्यत्रसूतकाशौचविभ्रमातुरभीतितइतितत्पूर्णसंध्यापरम् ॥ अ
र्घ्यांतामानसीसंध्याकुशवारिविवर्जितेतिशुद्धिदीपेच्यवनोक्तेः ॥ पैठीनसिस्त्व
र्घ्यमंत्रोच्चारणमाह ॥ सूतकेसावित्र्यांजलिंप्रक्षिप्यसूर्यंध्यायन्नमस्कुर्यात् ( प्र
योगपारिजातेभारद्वाजोपि ) सूतकेमृतकेकुर्यात्प्राणायाममसमंत्रकम् । तथामा
र्जनमंत्रांस्तुमनसोच्चार्यमार्जयेत् ॥ गायत्रींसम्यगुच्चार्यसूर्यायार्घ्यंनिवेदयेत् । मा
र्जनंतुनवाकार्यं मुपस्थानंनचैवहि ( ग्रहणेश्राद्धादावप्याशौचापवादमाहव्या
घ्रः)स्मार्तकर्मपरित्यागोराहोरन्यत्रसूतकेइति (लैंगेपि) सूतकेमृतकेचैवनदोषो

राहुदर्शने। तावदेवभवेच्छुद्धिर्यावन्मुक्तिर्नदृश्यते (प्रयोगपारिजातेबृहस्पतिः) कन्याविवाहेसंक्रान्तौ सूतकंनकदाचन (वृद्धशातातपः) यदाभोजनकालेतु अशुचिर्भवतिद्विजः। भूमौनिक्षिप्यतंग्रासं स्नात्वाविप्रोविशुध्यति॥ भक्षयित्वातुतंग्रासमहोरात्रेणशुध्यति। अशित्वासर्वमेवान्नं त्रिरात्रेणविशुध्यति॥ इदमविशेषात्सूतकादिपरमपीतिशुद्धितत्त्वेमूलपाणौच॥ अथद्रव्यतः (मरीचिः) लवणेमधुमांसेच पुष्पमूलफलेषुच। शाककाष्ठतृणेष्वप्सुदधिसर्पिःपयःसुच॥ तिलौषधाजिनेचैवपक्वापक्वेस्वयंग्रहः॥ पण्येषुचैवसर्वेषुनाशौचंमृतसूतके। स्वयमेवस्वाम्यनुज्ञयाग्राह्यंनतद्धस्तादित्यर्थः॥ क्रयेतुतद्धस्तादपिनदोषः॥ पक्वंलड्डुकादि॥ अपक्वंतंडुलादि॥ एतदन्नसत्रपरम्॥ अन्नसत्रप्रवृत्तानामामसन्नमगर्हितम्। भुक्त्वापक्वान्नमेतेषांत्रिरात्रंतुव्रतीभवेदित्यंगिरसोक्तेः॥ पक्वान्नमादेनादि॥ नतुभक्ष्यम (षट्त्रिंशन्मते) उभाभ्यामपरिज्ञातेसूतकेनैवदोषकृत् एकेनापिपरिज्ञातेभोक्तुर्दोषमुपावहेत्॥ विवाहोत्सवयज्ञेषुत्वंतरामृतसूतके। परैरन्नंप्रदातव्यंभोक्तव्यंचद्विजोत्तमैः॥ भुंजानेषुतुविप्रेषुत्वंतरामृतसूतके। अन्यगेहोदकाचान्ताःसर्वेतेशुचयःस्मृताः (बृहस्पतिः) विवाहोत्सवेत्याद्युक्त्वापूर्वसंकल्पितान्नेषुनदोषःपरिकीर्तितः (षडशीतौ) संसर्गश्चेदस्यवाशौचंयस्यास्ति क्रांतिकालता। तदीयस्यपदार्थस्यनाशौचंविद्यतेक्वचित् (शुद्धितत्त्वे) शुध्येदित्यनुवृत्तौविष्णुः॥ प्रोक्षणेनपुस्तकमिति (अथमृतदोषेहेमाद्रौषट्त्रिंशन्मतेकौर्मेच) व्यापादयेद्यआत्मानंस्वयमग्न्युदकादिभिः। विहितंतस्यनाशौचंनापिकार्योदकक्रिया॥ शवदर्शनंयावदाशौचमस्त्येव॥ हतानांनृपगोविप्रैरन्वक्षंचात्मघातिनामितियाज्ञवल्क्योक्तेः (शुद्धितत्त्वेकौर्मे) सद्यःशौचंसमाख्यातंशापादिमरणेतथा। आदिपदादभिचारहते (भविष्ये) स्वेच्छयामरणंविप्राच्छृंगिदंष्ट्रिसरीसृपैः। अंत्यांत्यजविशोद्बंधैरात्मनाचैवताडनैः। पाखंडमाश्रिताश्चैवमहापातकिनस्तथा॥ स्त्रियश्चव्यभिचारिण्यश्चारूढपतितास्तथा॥ नतेषांस्नानसंस्कारोनश्राद्धंनसपिंडनम् (गौतमः) प्रायोनाशकशस्त्राग्निविषोदकोद्बंधनप्रपतनैश्चेच्छतामिति॥ नाशौचमितिशेषः (अंगिराः) चंडालादुदका

स्सर्पाद्ब्राह्मणाद्वैद्युतादपि। दंष्ट्रिभ्यश्चपशुभ्यश्चमरणंपापकर्मणाम् ॥ उदकं
पिंडदानंचप्रेतेभ्योयत्प्रदीयते । नोपतिष्ठतितत्सर्वमंतरिक्षेविनश्यति ॥ षट्त्रिं
शन्मतेप्येवम् ( ब्राह्मेपि ) शृङ्गिदंष्ट्रिनखव्यालविषवह्निक्रियाजलैः ॥ व्यालो
गजः ॥ सुदूरात्परिहर्तव्यःकुर्वन्क्रीडामतस्तुयः । नागानांविप्रियंकुर्वन्हतश्चा
प्यथविद्युता । निगृहीतःस्वयंराज्ञाचौर्यदोषेणकुत्रचित् । परदारान्हरंतश्चद्वे
षात्तु पतिभिर्हताः॥असमानैश्चसंकीर्णैश्चंडालाद्यैश्चविग्रहात् ॥ कृत्वातैर्निह
तास्तद्वच्चंडालादीन्समाश्रिताः ॥ शस्त्राग्निगरदाश्चैवपाखंडाःक्रूरबुद्धयः। क्रो
धात्प्रायंविषंवह्निंशस्त्रमुद्बंधनंजलम् ॥ गिरिवृक्षप्रपातंचयेकुर्वंतिनराधमाः । कु
शिल्पजीविनोयेचसूनालंकारकारिणः ॥ मुखेभगास्तुयेकेचित्क्लीबप्रायानपुंस
काः ॥ ब्रह्मदंडहतायेचयेचापिब्राह्मणैर्हताः । महापातकिनोयेचपतितास्तेप्र
कीर्तिताः ॥ पतितानांनदाहःस्यान्नांत्येष्टिर्नास्थिसंचयः । नचाश्रुपातःपिंडोवा
कार्यंश्राद्धादिकंक्वचित् ॥ एतानिपतितानांतुयःकरोतिविमोहितः । तप्तकृच्छ्र
द्वयेनैवतस्यशुद्धिर्नचान्यथा ॥ एतद्बुद्धिपूर्वं ( सर्वेषांकरणेतुमाधवीयेवशिष्ठः )
यआत्मत्यागिनांकुर्यात्स्नेहात्प्रेतक्रियांद्विजः । सतप्तकृच्छ्रसहितंचरेच्चांद्रायण
व्रतम् ( अज्ञानेतु ) कृत्वाग्निमुदकंस्नानंस्पर्शंवहनंकथाम् । रज्जुच्छेदाश्रुपातं
चतप्तकृच्छ्रेणशुध्यतीतिज्ञेयम् ॥ प्रत्येकंबुद्धिपूर्वमेतदितिमदनपारिजातः ॥ प्र
त्येकंतुस्पर्शाश्रुणोर्मिताक्षरायाम् ॥ तच्छवंकेवलंस्पृष्ट्वाश्रुवापातितंयदि । पूर्वो
क्तानामकारीचेदेकरात्रमभोजनम् ॥ एकरात्रंतुनाश्नीयात्त्रिरात्रंबुद्धिपूर्वकमि
तिमाधवीयेउत्तरार्द्धम् (अन्येषुतुसंवर्तः) एषामन्यतमंप्रेतंयोवहेत्तद्दहेत्तवा । क
टोदकक्रियांकृत्वाकृच्छ्रंसांतपनंचरेत् ॥ अज्ञानेत्वर्धम् ॥ एतदनाहिताग्नेः ॥ आ
हिताग्नेःकृच्छ्रएवेतिमाधवः ( मिताक्षरायां ) आत्मनस्त्यागिनांनास्तिपतिता
नांतथाक्रिया । तेषामपितथागांगातोयेसंस्थापनंहितम् ( आहिताग्नेस्तुविशे
षोहेमाद्रौभविष्ये ) वैतानंप्रक्षिपेदप्सुआवसथ्यंचतुष्पथे । पात्राणितुदहेदग्नौ
साग्निकेपापकर्मणि (छंदोगपरिशिष्टेपि) महापातकसंयुक्तोदैवात्स्यादग्नि
मान्यदि । पुत्रादिःपालयेदग्नीन्युक्तआदोषसंक्षयात् ॥ प्रायश्चित्तंनकुर्याद्यः

कुर्वन्वाम्रियतेयदि। गृह्यंनिर्वापयेच्छ्रौतमप्स्वस्येत्सपरिच्छदम्॥ पात्राणिद
द्यादिप्रायदहेदप्स्वेववाक्षिपेत् (माधवीयेपराशरः) आहिताग्निर्मृतोविप्रश्चं
डालेनात्मघातकः। दहेत्ब्राह्मणंविप्रोलोकाग्नौमंत्रवर्जितं॥ प्राजापत्यंचरेत्प
श्चाद्विप्राणामनुशासनात्। दग्ध्वास्थीनिपुनर्गृह्यक्षीरेणक्षालयेत्ततः॥ स्वे
नाग्निनास्वमंत्रेणपृथगेनंपुनर्दहेत् (हेमाद्रौतु) दाहयित्वाशवंतेषांशूद्रैरविधिपू
र्वकमित्युक्तम्॥ सतहर्पादिनामरणोज्ञेयम्॥ तांस्तेप्रेत्याभिगच्छंतियेकेचात्महनो
जनाइतिश्रुतावात्महननेएवदोषोक्तेः॥ प्रमादमरणेत्वाशौचादिसर्वंभवत्येव
(तदाहांगिराः) अथकश्चित्प्रमादेनम्रियेताग्न्युदकादिभिः। तस्याशौचंविधा
तव्यंकर्तव्याचोदकक्रिया (ब्राह्मेपि) प्रमादादपिनिःशंकस्त्वकस्माद्विधिचो
दितः। शृङ्गिदंष्ट्रिनखिव्यालविषविद्युज्जलादिभिः। चंडालैरथवाचोरैर्निहतो
वापिकुत्रचित्॥ तस्यदाहादिकंकार्यंयस्मान्नपतितस्तुसइति॥ प्रमादमरणेत्रि
रात्रमाशौचमितिगौडाःशुद्धितत्त्वादयः॥ दशाहादीतिदाक्षिणात्याः (अस्या
पवादोहेमाद्रौभविष्ये) प्रमादादिच्छयावापिनकुर्यात्सर्पतोमृते। नागपूजांवि
नानकुर्यादित्यर्थः (बौधायनोपि) बुद्धिपूर्वात्महंतृणांक्रियालोपोविधीयते॥
क्रियान्त्यकर्म॥ तत्रदुर्मरणनिमित्तंदानादिकार्य्यम्॥ तच्चविश्वप्रकाशादौ
शातातपीयेच॥ व्याघ्रेणनिहतेविप्रेविप्रकन्यांविवाहयेत्। सर्पदष्टेनागबलि
र्देयःसर्पश्चकांचनः॥ चतुर्निष्कमितंहैमंगजंदद्याद्गजैर्हते। राज्ञाविनिहतेदद्या
त्पुरुषंतुहिरण्मयं॥ चौरेणनिहतेधेनुंवैरिणानिहतेवृषम्। वृषेणनिहतेदद्याद्य
थाशक्त्यातुकांचनं॥ शय्यामृतेप्रदातव्याशय्यातूलीसमन्विता। निष्कमात्र
सुवर्णस्यविष्णुनासमधिष्ठिता॥ शौचहीनेमृतेचैवद्विनिष्कंस्वर्णजंहरिम्। सं
स्कारहीनेचमृतेकुमारमुपनाययेत्। निष्कत्रयंस्वर्णमितंदद्यादश्वंहयाहते। शु
नाहतेक्षेत्रपालंस्थापयेन्निजशक्तितः॥ सूकरेणहतेदद्यान्महिषंदक्षिणान्वितं।
कृमिभिश्चमृतेदद्याद्गोधूमान्पंचखारिकाः॥ वृक्षंवृक्षहतेदद्यात्सौवर्णंवस्त्रसंयुतं
शृङ्गिणानिहतेदद्याद्वृषभंवस्त्रसंयुतं। शकटेनहतेदद्याद्व्यंसोपस्कारान्वितम्॥
भृगुपातमृतेचैवप्रदद्याद्धान्यपर्वतम्। अग्निनानिहतेकार्यमुदपानंस्वशक्तितः॥

दारुणानिहतेचैवकर्तव्यासदनेसभा । शस्त्रेणनिहतेदद्यान्महिषींदक्षिणान्विताम् ॥ अश्मनानिहतेदद्यात्सवत्सांगांपयस्विनीं ॥ विषेणचमृतेदद्यान्मेदिनींहेमनिर्मितां॥ उद्बन्धनेनचमृतेकपिंकनकनिर्मितम् । मृतेजलेनवरुणंहैमंदद्याद्विनिष्कजं ॥ विषूचिकामृतेस्वादुभोजयेच्चशतंद्विजान् । घृतधेनुःप्रदातव्याकंठान्नकवलेमृते ॥ कासरोगेणचमृतेअष्टकृच्छ्रं व्रतंचरेत् । अतिसारमृतेलक्षगायत्र्याःप्रयतोजपेत् ॥ शाकिन्यादिग्रहग्रस्तेजपेद्रुद्रंयथोदितम् । विद्युत्पातेननिहतेविद्यादानंसमाचरेत् । अन्तरिक्षमृतेकार्यंवेदपारायणंतथा॥ सच्छास्त्रपुस्तकंदद्यादस्पृश्यस्पर्शतोमृते। पतितेचमृतेकुर्यात्प्राजापत्यांस्तुषोडश ॥ मृतेचापत्यरहितेकृच्छ्राणांनवतिंचरेत्॥ एवंकृतेविधानेतुविदध्यादौर्ध्वदेहिकं॥ तथावेधमरणेपिनदोषः ( तदाहतुर्मनुवृद्धगार्ग्यौ ) वृद्धःशौचमृतेर्लुप्तःप्रत्याख्यातभिषक्क्रियः । आत्मानंघातयेद्यस्तुभृग्वग्न्यनशनाम्बुभिः ॥ तस्यत्रिरात्रमाशौचंद्वितीयेत्वस्थिसंचयः । तृतीयेतूदकंकृत्वाचतुर्थेश्राद्धमाचरेदिति ( हेमाद्रौविष्णुधर्मेपि ) नरस्तुव्याधिरहितोनत्यजेदात्मनस्तनुम् ॥ असूर्यानामतेलोकाअंधेनतमसावृताः तांस्तेप्रेत्याभिगच्छंतियेकेचात्महनोजनाः ॥ अरिष्टैरात्मनोज्ञात्वामृत्युकालमुपस्थितम् । व्याधितोभिषजात्यक्तःपूर्णोवायुषिचात्मनः ॥ यथायुगानुसारेणसंत्यजेदात्मनस्तनुं । तस्मिन्कालेतनुत्यागाद्यथेष्टंफलमाप्नुयात् ॥ आयुषस्तुपुरादृष्टंमरणंब्रह्मणस्यच ॥ नेतिगौडानामपपाठः ॥ उत्तरार्धेअसंगतेः ॥ क्षत्रियस्यतुसंग्रामेमृतेभर्तरियोषितः ( अपरार्केब्रह्मगर्भः ) योजीवितुंनशक्नोतिमहाव्याध्युपपीडितः । सोग्न्युदकंमहायात्रांकुर्वन्नात्रप्रदुष्यति। अत्रोक्तवक्ष्यमाणवचोनिचयात्प्रयागातिरिक्तेऽचिकित्स्यरोगाद्युपहतानामधिकारः ॥ सोपिजीर्णवानप्रस्थस्यैवेतिविज्ञानेश्वरदेवयाज्ञिकादयः ॥ अतएवमिताक्षरादौभृगुपातानशनादिकंवानप्रस्थस्यैवोक्तम् ( मनुरपि ) आसांमहर्षिचर्याणांत्यक्त्वान्यतमयातनुम् । वीतशोकभयोविप्रो ब्रह्मभूयायकल्पतइति ॥ तेनान्यत्रापितद्विषयत्वेवामूलंक्यादितिकेचित् ॥ तन्न ॥ वानप्रस्थमरणंआशौचनिषेधात्॥ तेनग्रहस्थादिपरमेवेदं ॥ तेनयतेर्नाधिकारः ॥ काम्येऽनधिकाराच्च ॥ नैमित्तिकत्वेत्व

करणेदोषोनित्यताचस्यात । प्रयागेत्वरोगिणांरोगिणाञ्च (यत्तु) शूद्राश्च
क्षत्रियावैश्यास्त्यंत्यजाश्चतथाधमाः । एतेत्यजेयुःप्राणान्वैवर्जयित्वाद्विजंनृप ॥
पतित्वाब्राह्मणस्तत्रब्रह्महाचात्महाभवेदितितन्निर्मूलमितिभट्टाः ॥ तत्त्वंतुहेमा
द्रौव्रतकांडेऽलिखनान्निर्मूलत्वंचिंत्यमेव ॥ प्रक्रमात्तुपतित्वेपिभृगुपातमात्रपरंयु
क्तम ॥ ब्राह्मणस्याप्यनुज्ञातमितिवक्ष्यमाणाविरोधाच(यत्त्वादित्यपुराणे)अब्रा
ह्मणोवास्वर्गादिमहाफलजिगीषया । प्रविशेज्ज्वलनंतोयंकरोत्यनशनंतथेति॥
तत्प्रयागातिरिक्तापरमितिकेचित॥ हेमाद्रौत्वेतदग्रे प्रयागवटशाखाग्रादित्युक्ते
र्ब्राह्मणस्यप्रयागेपिनेतिप्रतीयते (माधवीयेऽपरार्केचादित्यपुराणे) दुश्चिकि
त्स्यैर्महारोगैःपीडितस्तुपुमानपि । प्रविशेज्ज्वलनंदीप्तंकरोत्यनशनंतथा॥ अगा
धतोयराशिंचभृगोःपतनमेवच । गच्छेन्महापथंवापितुषारगिरिमादरात ॥ प्र
यागवटशाखाग्राद्देहत्यागंकरोतिच । स्वयंदेहविनाशस्यकालेप्राप्तेमहामतिः ॥
उत्तमान्प्राप्नुयाल्लोकान्नात्मघातीभवेत्क्वचित ॥ महापापक्षयात्स्वर्गेदिव्यान्
भोगान्समश्नुते ॥ एतेषामधिकारस्तुसर्वेषांसर्वजंतुषु ॥ नराणामथनारीणांस
र्ववर्णेषुसर्वदा ॥ ईदृशंमरणंयेषांजीवतांकुत्रचिद्भवेत । आशौचंस्यात्त्र्यहंतेषां
वज्रानलहतेतथा ॥ वाराणस्यांम्रियेद्यस्तुप्रत्याख्यातभिषक्क्रियः । काष्ठपाषा
णमध्यस्थोजाह्नवीजलमध्यगः ॥ अविमुक्तोन्मुखस्तस्यकर्णमूलगतोहरः प्रण
वंतारकंब्रूतेनान्यथाकुत्रचित्क्वचित ॥ हेमाद्रौचैवम ॥ अत्रप्राप्तेकालेइत्युक्तेर
प्राप्तमरणकालायाःस्त्रियाअन्वारोहणेसम्पूर्णमेवाशौचम ॥ पृथ्वीचन्द्रस्त्वत्रा
पित्र्यहमाह ॥ शुद्धितत्त्वादिगौडग्रन्थेष्वप्येवम ॥ एतच्चवृद्धादिमरणंकलौनि
षिद्धम॥ भृग्वग्निपतनैश्चैववृद्धादिमरणंतथेति॥ माधवेनपृथ्वीचन्द्रेणचकलि
वर्ज्येषूक्तेःनचान्वयावद्दुक्तनिषेधः ॥ विशिष्टोद्देशेवाक्यभेदात ॥ नचकलौवानप्र
स्थाश्रमनिषेधादेवसिद्धेर्मरणनिषेधोव्यर्थइतिवाच्यम ॥ सर्ववर्णेष्वित्यादिभि
स्तद्भिन्नस्यापिप्राप्तेःकाम्यंभवत्येव ॥ येवैतन्वांविसृजंतीतिश्रुतेःस्मृत्यासंकोचा
योगात ॥ नचेयंस्वाभाविकमृत्युपराधीरपदोक्तेः (मात्स्यभारतादिषु) नलोक
वचनात्तातनवेदवचनादपि । मतिरुत्क्रमणीयातेप्रयागमरणंप्रतीत्युक्तेः ॥ अ

तएवविष्णुधर्मेरोग्यादिमरणमुक्तोक्तम् ॥ यथायुगानुसारेणसंत्यजेदात्मनस्तनु
मिति (काश्यामप्युक्तंमात्स्ये) अग्निप्रवेशंयेकुर्युरविमुक्तेविधानतः । प्रविशं
तिमुखंतेमेनिःसंदिग्धंवरानने (हेमाद्रौविवस्वान्) सर्वेन्द्रियविमुक्तस्यस्वव्यापा
राक्षमस्यच । प्रायश्चित्तमनुज्ञातमग्निपातोमहापथः ॥ धर्मार्जनासमर्थस्यक
र्तुःपापांकितस्यच । ब्राह्मणस्याप्यनुज्ञातंतीर्थेप्राणविमोक्षणम् ॥ अपरार्केचै
वम् ॥ सहगमनंकलौभवत्येव ॥ कलौनान्यागतिःस्त्रीणांसहानुगमनादृतइति
ब्रह्मवैवर्तात् ॥ एतेनमरणांतिकप्रायश्चित्तंकाशीखण्डादौचातुर्वर्ण्यस्य ॥ त
नुत्यागविधयश्चयुगांतरपराएव (प्रयागेपित्रिस्थलीसेतौस्कांदे) यथाकथंचि
त्तीर्थेस्मिन्प्राणत्यागंकरोतियः । तस्यात्मघातदोषोनप्राप्नुयादीप्सितान्यपि
(पाद्मेविष्णुः) देहत्यागंतथाधीराःकुर्वंतिममसन्निधौ । मत्तनुंप्रविशंत्येवनपुन
र्जन्मनेनराः (कौर्मे) व्याधितोयदिवादीनःक्रुद्धोवापिभवेन्नरः । गङ्गायमुनमा
साद्ययस्तुप्राणान्परित्यजेत् ॥ ईप्सितान्लभतेकामान्वदंतिमुनिपुंगवाः (तथा)
यागतिर्योगयुक्तस्यसत्वस्थस्यमनीषिणः । सागतिस्त्यजतःप्राणान्गंगायमुनसं
गमे (वाराहे) तत्रयोमुंचतिप्राणान्वटमूलेषुसुंदरि । सर्वलोकानतिक्रम्यममलो
कंप्रपद्यते (तथा) अकामोवासकामोवावटमूलेषुसुंदरि ॥ शीघ्रंप्राणान्प्रमुंचेत
यदीच्छेत्परमांगतिम् (तथा) पंचयोजनविस्तीर्णंप्रयागस्यतुमण्डले । व्यती
तान्पुरुषान्सप्तभविष्यांश्चचतुर्दश ॥नरस्तारयतेसर्वान्यस्तुप्राणान्परित्यजेत् ।
(ब्राह्मे) ध्यात्वाविष्णुपदाम्भोजंप्रयागेविष्णुतत्परः । तनुंत्यजंतिवैमाघेतस्यमु
क्तिर्नसंशयः ॥ दुष्कृतोपिदुराचारोब्रह्महत्यादिपातकी । हरिंध्यात्वात्यजेद्देहं
प्रायशोमुक्तिमान्भवेत् (भविष्योत्तरे) समासहस्राणितुसप्तवैजलेदशैकमग्नौपत
नेचषोडश । महाहवेषष्टिरशीतिगोग्रहेअनाशकेभारतचाक्षयागतिः ॥ इति
सामान्यतोपिफलम् ॥ एवमन्येपिविधयोज्ञेयाः ॥ यत्तुगौडाःप्रयागादिमरणं
ब्राह्मणभिन्नविषयमित्याहुस्तद्गुणपितामहचरणैः प्रयागविधौकृतमितिना
त्रोच्यते ॥ अत्रदशाहमाशौचम् ॥ त्रिरात्रस्थप्राप्तकालगोचरत्वादितिभट्टाः ॥
युक्तंतुत्रिरात्रम् ॥ दिवोदासीयेप्येवम् (शुद्धितत्त्वेपिकाश्यपः) अनशनमृताना

मशनिहतानामग्निजलप्रविष्टानां भृगुसंग्रामदेशांतरमृतानांजातदन्तानांचत्रिरा
त्रमिति ॥ एवंमरणांतप्रायश्चित्तेपि ॥ पूर्वोक्तपश्चात्महादेर्दाहाशौचादिनिषे
धस्तदानीमेव ॥ वत्सरांतेतुसर्वमौर्ध्वदेहिकंकुर्यात् ॥ गोब्राह्मणहतानांचपति
तानांतथैवच । ऊर्ध्वंसंवत्सरात्कुर्यात्सर्व्वमेवौर्ध्वदेहिकमितिहेमाद्रौषट्त्रिंश
न्मतात् ॥ एवंम्लेच्छीकृतानामपि ॥ गयाश्राद्धमपिकार्य्यम् ॥ ब्रह्महाचकृतघ्न
श्चगोघातीपंचपातकी। सर्वेतेनिष्कृतिंयांतिगयायांपिण्डपातनादित्यग्निपुरा
णात्(एवंब्राह्मेपि) क्रियतेपतितानांतुगतेसंवत्सरेक्वचित् । देशधर्मप्रमाणात्वा
द्गयाकूपेस्वबंधुभिः॥मार्तंडपादमूलेवाश्राद्धंहरिहरौस्मरन् ॥ सूर्यपदइत्यर्थः ॥
( तत्रवर्षमध्येकृत्यमुक्तमपरार्केवायुपुराणे) शुक्लपक्षेतुद्वादश्यांकुर्याच्छ्राद्धन्तुव
त्सरात् । द्वादशाहनिवाकुर्याच्छुक्लेचप्रथमेहनि ( छागलेयः) नारायणबलिः
कार्योलोकगर्हभियान्नरैः । तथातेषांभवेच्छौचं नान्यथेत्यब्रवीद्यमः (व्यासः)
नारायणंसमुद्दिश्य शिवंवायत्प्रदीयते । तस्यशुद्धिकरंकर्म तद्भवेन्नैतदन्यथेति॥
सचात्मघातादिप्रायश्चित्तंकृत्वाकार्यः (तदुक्तंहेमाद्रौषट्त्रिंशन्मते ) कृत्वाचां
द्रायणंपूर्वंक्रियाकार्यायथाविधि । नारायणबलिःकार्योलोकगर्हभयान्नरैः॥
पिण्डोदकक्रियाःपश्चाद्वृषोत्सर्गादिकंचयत् । एकोद्दिष्टानिकुर्वीत सपिण्डी
करणंतथा (दिवोदासीयेवृद्धशातातपस्तु) पतितेचमृतेशुद्धौ प्राजापत्यांस्तुषो
डश । मृतेचापत्यरहितेकृच्छ्राणांनवतिञ्चरेदित्याह ॥ इदंप्रायश्चित्तार्हपित्रा
दिविषयम् ॥ इन्द्रियैरपरित्यक्ता येचमूढाविषादिनः ॥ घातयन्तिस्वमात्मानं
चाण्डालादिहताश्चये ॥ तेषांपुत्राश्चपौत्राश्च दययासमभिप्लुताः । यश्चाश्रा
द्धंप्रतन्वन्ति विष्णुनासप्रतिष्ठितम् ॥ तथातेसंप्रवक्ष्यामिनमस्कृत्यस्वयम्भुवइति
हेमाद्रौतेनवोक्तेः (तत्रैवबौधायनेपि) नारायणबलिं व्याख्यास्यामोऽभिशस्त
पतितसुरापात्मत्यागिनां ब्राह्मणहतानाञ्चद्वादशवर्षाणिरात्रीणिवा कुर्वीतेति
( गृह्यपरिशिष्टेतु ) चाण्डालादित्याद्युक्ता ॥ दग्ध्वाशरीरंप्रेतस्य संस्थाप्या
स्थीनियत्नतः । प्रायश्चित्तन्तुकर्तव्यं पुत्रैश्चांद्रायणत्रयमित्युक्तम् ( मदनरत्ने
ब्राह्मे) प्रमादादपिनिःशङ्कस्त्वकस्माद्विधिचोदितः । चाण्डालैर्ब्राह्मणैश्चौरै

र्निहतोयत्रकुत्रचित् ॥ तस्यदाहादिकंकार्यंयस्मान्नपतितस्तुसः । चांद्रायणंतप्त
कृच्छ्रद्वयंतस्यविशुद्धये ॥ यद्वाकृच्छ्रान्पञ्चदशकृत्वातुविधिनादहेत् । बुद्धिपूर्वमृ
तानांतुत्रिंशत्कृच्छ्रंसमाचरेदित्युक्तम् (स्मृतिरत्नावल्यान्तु) द्विगुणंप्रायश्चित्तं
कृत्वावाप्यब्दात्सर्वंकार्यमित्युक्तं ॥ आत्मनोघातमुत्सृज्यतथैवचरेच्चांद्रायणद्वयं ।
तप्तकृच्छ्रचतुष्कंचत्रिंशत्कृच्छ्राणिवापुनः ॥ अर्वाक्संवत्सरात्कुर्याद्दहनादि
यथोदितम् । कृत्वानारायणबलिमनित्यत्वात्तदायुष इति ॥ इदञ्चात्मवधनिमित्त
न्तज्जातिवधप्रायश्चित्तेनसमुच्चितंकार्यम् ॥ अतएवबौधायनेनोक्तंद्वादशवर्षाणि
चीर्णावेति (मदनपारिजातेस्मृत्यर्थसारेच) ब्रह्महादीनांतद्योग्यंप्रायश्चित्तंकृ
त्वानारायणबलिःकार्यइत्युक्तम् ॥ एवंम्लेच्छीकृतानामपि ( यत्तुकश्चिदाह )
पुत्रकृतेनप्रायश्चित्तेनपितुःपापनाशेमानाभावः ॥ आत्मघातेतुवचनादस्तु ॥ म
हापातकेतुकथंस्यादिति ॥ सःस्वयमेवात्मवधप्रायश्चित्तस्यजातिवधनिमित्तेन
समुच्चयवदनहृदयशून्यएव ॥ नहिजातिवधनिमित्तम्पुत्रैःकार्यमितिवचनमस्ति ॥
पुत्रकर्तृकसर्वप्रायश्चित्तादिविप्लवापत्तेः ॥ प्रागुक्तबौधायनवचनाच्चेतिदिक् ॥
इदंप्रायश्चित्तार्हाणामेव ॥ प्रायश्चित्तानर्हाणान्तुपतितोदकमात्रंकार्यमिति
केचित् ॥ मदनपारिजातादिस्वरसोप्येवम् ॥ वस्तुतस्तु ॥ तदर्हानर्हयोर्वचनेनु
पादानादविशेषात्तयोरपिनारायणबलिरत्र श्राद्धञ्चेत्युक्तम् ॥ पतितोदकवि
धिस्तुपिशाचातिरिक्तविषयइत्यपरे (तथाहेमाद्रौब्राह्मे) पतितस्यतुकारुण्या
द्यस्तृप्तिंकर्तुमिच्छति । सोहिदासींसमाहूयसवर्णांदत्तवेतनाम् ॥ अशुद्धघटहस्तां
तां यथावृत्तम्ब्रवीत्यपि । हेदासिगच्छमूल्येन तिलानानयसत्वरम् ॥ तोयपूर्णं
घटञ्चेमं सतिलंदक्षिणामुखी । उपविश्यतुवामेन चरणेनततःक्षिप ॥ कीर्तयेः
पातकीसंज्ञां त्वंत्रिपिबेतिमुहुर्वदेः । निशम्यतस्यवाक्यंसालब्धमूल्याकरोतितत् ॥
एवंकृतेभवेत्तृप्तिः पतितानांचनान्यथेति ॥ इदञ्चमृताहेकार्यम् ॥ पतितस्यदासी
मृताह्नियद्वाघटमपवर्जयेदेतावतायमुपचरितोभवतीति मदनरत्नेविष्णूक्तेः ॥ इदं
चात्मत्यागिविषयम् ॥ आत्मत्यागिनःपतितास्तेनाशौचोदकभाजः स्युरित्यु
पक्रम्यविष्णुनाएतस्याभिधानादितिगौडाः ॥ यत्तु कश्चिदाह ॥ यःपतितोघट

स्फोटेनबान्धवैर्बहिष्कृतस्तद्विषयाणि क्रियानिषेधवाक्यानि ॥ जीवत्येवतस्मिन्नंत्यकर्मणः कृतत्वात्तत्पुनःकरणाभावादिति ॥ सबन्धुत्यागेनजातवैराग्यस्यकृतप्रायश्चित्तस्याप्यकरणापत्तेर्मिताक्षरादिविरोधमपश्यन्मूर्खइत्युपेक्षणीयः ॥ नचकृतघटस्फोटस्यसंग्रहविधिर्नेतिवाच्यम् ॥ मनुनाकृतघटस्फोटस्यत्यागमुक्त्वा ॥ प्रायश्चित्तेतुचरिते पूर्णकुम्भमपांनवम् । तेनैवसार्धंप्रास्येयुःस्नात्वापुण्येजलाशयइत्युक्तेः ॥ अन्यथाप्रायश्चित्तमात्रेणतत्प्रसंगात् ॥ अतोघटस्फोटेनबहिष्कृतस्यापिपित्रादेरब्दांतेनारायणबलिः निषेधास्तुपितृव्यादिपराइतितत्त्वम् ॥ केचित्तुनारायणबलौकृतेप्यंत्यकर्मसपिंडनवर्जंकार्यम् ॥ गोब्राह्मणहतानांचपतितानांतथैवच । व्युत्क्रमाच्चप्रमीतानांनैवकार्यासपिंडतेतिवचनात् ॥ ब्राह्मणादिहतेतातेपतितेसंगवर्जितइतिश्राद्धप्रकारोक्तेश्चेत्याहुस्ते हेमाद्रिस्थपूर्वोक्तषट्त्रिंशन्मतविरोधान्निर्मूलत्वाच्छ्राद्धप्रकारस्यवृद्धिश्राद्धविषयत्वादुपेक्ष्याः ॥ नारायणबलिस्तुहेमाद्र्याद्यनुसारेणोच्यते ॥ तत्रादौक्रियानिबंधेगारुडेतर्पणमुक्तम् ॥ कार्यंपुरुषसूक्तेनमंत्रैर्वावैष्णवैरपि । दक्षिणाभिमुखोभूत्वा प्रेतंविष्णुमितिस्मरन् ॥ अनादिनिधनोदेवः शंखचक्रगदाधरः । अक्षय्यःपुंडरीकाक्षः प्रेतमोक्षप्रदोभवेति ॥ शुक्लैकादश्यांदेशकालौसंकीर्त्यामुकगोत्रस्यामुकस्य दुर्मरणात्मघातजदोषनाशार्थं और्ध्वदेहिकसंप्रदानत्वयोग्यतासिध्यर्थं नारायणबलिंकरिष्यइतिसंकल्प्य ॥ ब्रह्माणांविष्णुंशिवंयमंप्रेतंचपंचकुंभेषु ॥ विष्णुःस्वर्णमयःकार्योरुद्रस्ताम्रमयस्तथा । ब्रह्मारौप्यमयस्तत्रयमोलोहमयोभवेत् ॥ प्रेतोदर्भमयःकार्यइतिदेवप्रकल्पनेतिगारुडोक्तासुसर्वासुहैमीषुवाप्रतिमासुषोडशोपचारैः पुरुषसूक्तेनाभ्यर्च्यारनीं प्रतिष्ठाप्य चरुंपुरुषसूक्तेनप्रत्यृचंनारायणायेदमितिहुत्वा ॥ देवानामग्रेदक्षिणाग्रदर्भेषुविष्णुरूपंप्रेतंस्मरन्नाम गोत्राभ्यांमधुघृततिलयुतान्दशपिंडान् यज्ञोपवीत्येवामुकगोत्रामुकशर्मन् प्रेतविष्णुरूपायतेपिंडउपतिष्ठतामितिदत्वापुरुषसूक्तेनाभिमंत्र्य तेनैवशंखोदकेनाभिषिच्याभ्यर्च्यामुकशर्माणममुकगोत्रंविष्णुरूपंप्रेतंतर्पयामीतिपुरुषसूक्तेनप्रत्यृचंतर्पयित्वा ॥ एकमामान्नंब्रह्मादिपं

चभ्योदद्यात् ( मंत्रस्तु ) ब्रह्मविष्णुमहादेवायमश्चैवसकिंकरः । बलिंगृहीत्वा
कुर्वंतुप्रेतस्यचशुभांगतिमिति ॥ मिताक्षरायांतुहेमबल्यादिनोक्तम् ॥ ततःप्रति
दैवतंत्रिविधंफलंशर्करामधुगुडघृतानिच निवेद्यपिंडानभ्यर्च्यनद्यांक्षिप्त्वारात्रौ
नवसप्तपंचवाविप्रान्निमंत्र्योपोषितोजागरंकृत्वा श्वोभूतेपुनर्विष्णुंयमंसंपूज्यैको
द्दिष्टविधिना श्राद्धपंचकंकरिष्यइत्युक्त्वाविष्णुंयमप्रेतान्स्मरन् विप्रानुपवे
श्यप्रेतस्थानेचैकंविष्णुंस्मरन् पाद्यावाहनार्घ्ययुतंतद्विप्रश्राद्धंकृत्वोल्लेखनादि
कृत्वान्नशेषेणविष्णवेब्रह्मणे शिवाययमायसपरिवारायचतुरःपिंडान्दत्वाप्रेत
नामगोत्रेस्मृत्वाविष्णुनाम्ना पंचमंदत्त्वाभ्यर्च्याचांतेभ्यो दक्षिणांदत्त्वैकंप्रेतं
स्मृत्वा विशेषतः संतोष्यविप्रैः प्रेतायेदंतिलोदक मुपतिष्ठतामितिसतिलमुदकं
दापयित्वाभुंजीतेति ॥ अत्रविशेषांतरंभट्टकृतांत्येष्टिपद्धतौज्ञेयम् सर्पहतेतुवर्ष
पर्यंतंपूर्वेह्न्येकभक्तपूर्वंशुक्लपंचम्यामुपवासंनक्तंवाकृत्वा पिष्टमयंनागमनंतवा
सुकिशंखपद्मकंबलकर्कोटकाश्वतरधृतराष्ट्र शंखपालकालियतक्षककपिलेति
नामभिःप्रतिमासंसंपूज्य पायसेनविप्रान्संभोज्य वत्सरांतेहैमंनागंगांचदत्त्वाना
रायणबलिंकुर्यात् ॥ एतन्मूलंतुहेमाद्रौज्ञेयम् ॥ बौधायनसूत्रेसर्पमृतानांनमोस्तु
सर्पेभ्यइतितिस्रआहुतीर्हुत्वोदकेमृतानां समुद्रायवयुनायहुत्वेतिक्रियांकुर्यादि
तिशेषः (व्यासः) सौवर्णभारनिष्पन्नंनागंकृत्वातथैवगाम् । व्यासायदत्त्वावि
धिवत्पितुरानृण्यमाप्तवान् (हेमाद्रौभविष्ये) पंचम्यांपन्नगंहैमंस्वर्णेनैकेनकार
येत् । क्षीराज्यपात्रमध्यस्थंपूज्यविप्रायदापयेत् ॥ प्रायश्चित्तमिदंप्रोक्तंनाग
दुष्टस्यशंभुनेति (अपरार्केस्मृत्यंतरेपि) तदैवशुद्ध्यतिप्रेतोनारायणबलौकृते ।
योददातिक्रियापिंडंतस्मैप्रेतायवैसुतः ॥ तस्यैवाशौचमुद्दिष्टंत्र्यहमेवनसंशयः ।
विष्णुश्राद्धसमाप्तौतुत्रयोदश्यांदिनत्रयम् ॥ आशौचंपिंडदःकुर्यान्नतुतद्बंधुगो
त्रजाः ॥ यस्यवैमृत्युकालेतुव्युच्छिन्नासंततिर्भवेत् ॥ सवसेन्नरकेनित्यंपंकमग्नः
करीयथेत्युपक्रम्य ॥ बलिंनारायणं कुर्यात्तस्योद्देशेनभक्तिमानितिगारुडो
क्तेरपुत्रस्यापिपत्न्याद्यैःकार्यइत्युक्तंदेवयाज्ञिकेन ॥ अथविधानादाशौचाभा
वः (यथायतिशूद्रमृतादिषु) त्रयाणामाश्रमाणांचकुर्याद्दाहादिकाःक्रियाः ।

यतेःकिंचिन्नकर्तव्यं नचान्येषांकरोतिस इतिब्राह्मात (उशनाः) एकोद्दिष्टंन कुर्वीतयतीनांचैवसर्वदा । अहन्येकादशेप्राप्तेपार्वणंतुविधीयते ॥ सपिण्डी करणंतेषांनकर्तव्यंसुतादिभिः । त्रिदंडग्रहणादेवप्रेतत्वंनैवजायते ॥ अथतत्सं स्कारंवक्ष्यामः (दत्तात्रेयः) एकोद्दिष्टंजलंपिण्डमाशौचंप्रेतसत्क्रिया । नकुर्या द्वार्षिकादन्यद्ब्रह्मीभूतायभिक्षवे ॥ वार्षिकादितिपूर्व्वभाविमासिकादिनिषे धोनतुदर्शादेः॥ संन्यासिनोप्याब्दिकादिपुत्रःकुर्य्याद्यथाविधीतिवायवीयोक्तेः (पृथ्वीचंद्रोदयेप्रजापतिः) अहन्येकादशेप्राप्तेपार्व्वणंतुविधीयते । सपिंडीक रणंतस्यनकर्तव्यंसुतादिभिः ॥ एषुसपिण्डनादिनिषेधानुवादेनपार्व्वणोक्तेस्त त्स्थानापन्नत्वंपार्वणस्यगम्यते ॥ नगिरागिरेतिब्रूयादैरंकृत्वोहेयमितिवत॥ इदं वार्षिकादिविधानंच त्रिदंडिनामेव॥एकदंडिपरमहंसादीनांतुनकिमपिकार्यम॥ पूर्वोक्तेशनेवाक्येत्रिदंडिग्रहणादिति शूलपाण्याद्योगौडाः ॥ त्रिदंडिशब्देन मनोदंडादिदण्डत्रयोक्तेः ॥ यस्यैतेनियतादण्डाःसत्रिदंडीतिचोच्यतइतिस्मृतेः ( बौधायनः ) नारायणबलिश्चास्यकर्तव्योद्वादशेहनि ॥ अस्यपार्वणेनसमुच योज्ञेयः (तंचसएवाह) कृत्वाविष्णोर्महापूजांपायसंविनिवेदयेत । अग्नौकृत्वा तुतच्छेषंव्याहृतीभिःसमाहितः॥यतीन्गृहस्थान्साधून्वानिमंत्र्यद्वादशावरान । अभ्यर्च्यगंधपुष्पाद्यैर्मंत्रैर्द्वादशनामभिः ॥ संभोज्यहव्येनान्येनदक्षिणांचनिवे दयेत । त्रयोदशंद्विजश्रेष्ठमात्मज्ञंसंयतेंद्रियम ॥ विष्णुंयथातथाभ्यर्च्यपाद्याद्यै श्चविधानतः । दद्यात्पुरुषसूक्तेनगंधपुष्पादिकंक्रमात ॥ वस्त्रालंकरणादीनि यथाशक्तिप्रदापयेत । उच्छिष्टसन्निधौतस्यदर्भानास्तीर्यभूतले ॥ भूर्भुवःस्वःस्व धायुक्तैस्तस्मैदद्याद्बलित्रयम । अश्वमेधसहस्रस्यवाजपेयशतस्यच ॥ तत्फलंल भतेदेवयःकरोतियतिक्रियाम ( शौनकस्तु ) शौनकोहंप्रवक्ष्यामिनारायणब लिंपरम । चण्डालादुदकात्सर्पाद्ब्राह्मणाद्वैद्युतादपि ॥ दंष्ट्रिभ्यश्चपशुभ्य श्चरज्जुशस्त्रविषाग्निभिः । देशांतरमृतानांचमृतानांवान्यसाधनैः ॥ जीवच्छ्रा द्धमृतानांचकनिष्ठानांतथैवच । यतीनांयोगिनांपुंसामन्येषांमोक्षकांक्षिणाम ॥ पुण्यायाघक्षयार्थायद्वादशेहनिकारयेत ॥ द्वादशंश्रवणोन्दांतेपंचम्यांपार्व

णोस्तुवेत्युक्त्वापूर्वोक्तंसर्वंविधिमुक्त्वाअतोदेवेतिषड्भिः पुरुषसूक्तेनप्रत्यृचंपा
यसंहुत्वाकेशवादिद्वादशनामभिस्तद्रूपिणोपिद्वादशविप्रान्संभोज्यतैरेवद्वादश
पिंडान्दद्यादित्यधिकमाह॥ युद्धमृतेतुप्रागुक्तम्॥ कृतजीवच्छ्राद्धमृतेसपिंडैराशौ
चादिकार्यंनवा (तदुक्तंहेमाद्रौलैंगे) मृतेकुर्यान्नकुर्याद्वाजीवन्मुक्तोयतःस्वयम्॥
कालंगतेद्विजेभूमौखनेद्वापिदहेत्तथा॥ पुत्रकृत्यमशेषंचकृत्वादोषोनविद्यते॥ जी
वच्छ्राद्धविशेषस्तत्रैवोक्तः॥ नित्यंनैमित्तिकंयत्तुकुर्याद्वासंत्यजेत्तथा। बांधवेपिमृ
तेतस्यनैवाशौचंविधीयते॥ सूतकंचनसंदेहः स्नानमात्रेणशुद्ध्यति॥ एतद्योगिवि
षयम्॥योगमार्गरतोपिचेतितस्याप्युक्तेः॥ तथाऽहिताग्नौप्रोषितमृतेतदस्थिदा
हात्पूर्वंपुत्रादीनामाशौचंसंध्यादिकर्मलोपश्चनास्ति।अनग्निमत्तउत्क्रांतेराशौ
चादिद्विजातिषु। दाहादग्निमतोविद्याद्विदेशस्थेमृतेसतीतिस्मृतेः॥ आहिताग्ने
र्देहात्प्रागपिदशाहः॥ संस्कारांगंचभिन्नोदशाहइतिधूर्तस्वामीरामांडारश्च॥
तच्चिंत्यम्॥ मलैकाहवचोविरोधाच्च॥ एतत्प्रागुक्तम्॥ अत्रदेहस्यैवसंभवेदाहः॥ आ
हिताग्नौविदेशस्थेमृतेसतिकलेवरम्॥निर्धेयंनाग्निभिर्यावत्तदीयैरपिदह्यतइति
ब्राह्मोक्तेः(तदभावेछंदोगपरिशिष्टे)विदेशमरणेस्थीन्याहृत्याभ्यज्यसर्पिषा।
दाहयेदूर्णयाच्छाद्यपात्रन्यासादिपूर्ववत्॥ अस्थ्नामलाभेपर्णानिशकलान्युक्त
यावृता॥ दाहयेदस्थिसंख्यानिततःप्रभृतिसूतकम्(हेमाद्रौषट्त्रिंशन्मते)कुर्या
द्दर्भमयंप्रेतंदर्भैस्त्रिंशतिषष्टिभिः।पालाशाभिःसमिद्भिर्वासंख्याचैवंप्रकीर्तिता
(भविष्ये)चत्वारिंशच्छिरःस्थानेग्रीवायांचदशैवतु।बाह्वोश्चैवशतंदद्याद्विंशतिं
चतयोरसि॥ उदरेविंशतिंदद्यात्त्रिंशतंकटिदेशयोः॥ऊर्वोश्चैवशतंदद्यात्त्रिंशतं
जानुजंघयोः॥ पादांगुलीषुदशवैएषाचप्रेतकल्पना(मदनरत्नेयज्ञपार्श्वः) शिर
स्यशीत्यर्धंदद्यात्ग्रीवायांतुदशैवतु। बाह्वोश्चैकशतंदद्याद्दशचैवांगुलीषुच॥
उरसित्रिंशतंदद्याद्विंशतिंजठरोदरे। द्वादशार्धंवृषणयोरष्टार्धंशिश्नएवतु॥ ऊर्वो
श्चैकशतंदद्यात्त्रिंशतंजंघयोर्द्वयोः। पादांगुलीषुदेदद्यादेतत्प्रेतस्यकल्पनम्॥ म
स्तकेनारिकेरंतुअलाबुंतालुकेतथा। पंचरत्नंमुखेन्यस्यजिह्वायांकदलीफलम्॥
चक्षुषोस्तुकपर्दौद्वौनासिकायांतुकालकम्। कर्णयोर्ब्रह्मपत्राणिकेशेवटप्ररोह

काः ॥ नालकंकमलानांतुअंत्रस्थानेविनिक्षिपेत् । मृत्तिकांतुनसायांतुहरितालक गंधकौ ॥ शुक्रेतुपारदंदद्यात्पुरीषेपित्तलंतथा । संधीषुतिलपिष्टंतुमांसेस्याद्यव पिष्टकम् ॥ मधुस्याल्लोहितस्थानेत्वचास्थानेमृगत्वचा । स्तनयोर्जर्जकेदेयेना सायांशतपत्रकम् ॥ कमलंनाभिदेशेस्याद्वृन्ताकंवृषणाश्रिते । लिंगेचरक्तमूलंतु परिधानंदुकूलकम् ॥ गोमूत्रंगोमयंगंधंसर्वौषध्यादिसर्वतइति॥ इदंनिरग्नेरपि ( तत्रैववृत्वमनुः ) प्रोषितस्यतथाकालोगतश्चेद्द्वादशाब्दकः । प्राप्तेत्रयोद शवर्षेप्रेतकार्याणिकारयेत् ( बृहस्पतिः ) यस्यनश्रूयतेवार्तायावद्द्वादशवत्स रात् । कुशपुत्रकदाहनेतस्यस्यादवधारणा ( भविष्ये ) पितरिप्रोषितेयस्यनवा र्तानैवचागमः । ऊर्ध्वंपंचदशाद्वर्षात्कृत्वातत्प्रतिरूपकम् ॥ कुर्यात्तस्यतुसंस्कारं यथोक्तविधिनाततः । तदादीन्येवसर्वाणिप्रेतकर्माणिकारयेत् । द्वादशाब्दप्र तीक्षापित्रभिन्नविषयेतिमदनरत्नेउक्तम् (गृह्यकारिकायांतु) तस्यपूर्ववयस्क स्यविंशत्यब्दोर्ध्वतःक्रिया । ऊर्ध्वंपंचदशाब्दात्तुमध्यमेवयसिस्मृता ॥ द्वादशाब्द त्सरादूर्ध्वमुत्तरेवयसिस्मृता । चांद्रायणत्रयंकृत्वात्रिंशत्कृच्छ्राणिवाश्रुतेः ॥ कु शैःप्रतिकृतिंदग्ध्वाकार्याःशौचादिकाःक्रिया इत्युक्तम् ( पराशरः ) देशांतरग तोनष्टस्तिथिर्नज्ञायतेयदि ॥ कृष्णाष्टमीह्यमावास्याकृष्णाचैकादशीचया ॥ उ दकंपिंडदानंचतत्रश्राद्धंचकारयेत् । इदंमासज्ञाने ॥ तत्राहिताग्नेःपूर्णाशौचम् ॥ अनाहिताग्नेस्तुत्रिरात्रम् ॥ अनाहिताग्नेर्देहस्तुदाह्योगृह्याग्निनास्वयम् । तद भावेपलाशानांवृन्तैःकार्यःपुमानपि॥वेष्टितव्यस्तथायत्नात्कृष्णसारस्यचर्मणा ऊर्णासूत्रेणबद्ध्वातुप्रलेप्तव्योयवैस्तथा ॥ सुपिष्टैर्जलसंमिश्रैर्दग्धव्यश्चतथा ग्निना । असौस्वर्गायलोकायस्वाहेत्युक्त्वासबांधवैः ॥ एवंपर्णशरंदग्ध्वात्रिरा त्रमशुचिर्भवेदितिब्राह्मोक्तेः ॥ इदंत्रिरात्रंनदशाहमध्येदाहे ॥ तत्रप्रोषितेकाल शेषःस्यादित्युक्तेः ॥ किंतुतदूर्ध्वम् ॥ तत्रपत्नीपुत्रयोःपूर्वमगृहीदाशौचयोर्दशा हाद्येव ॥ गृहीताशौचयोस्तुत्रिरात्रम् ॥ पत्नीमृतौभर्तुश्चैवं ॥ सपत्न्योश्चैव मितिस्मृत्यर्थसारे ॥ अन्यसपिंडनांतुसर्वत्रपर्णशरदाहेत्रिरात्रम् (तदाहांगिराः) देशांतरमृतंश्रुत्वानाशौचंचेत्कथंचन ॥ गृहीतमितिशेषः ॥ कालात्ययेपिकुर्वीत

दाहकालेदिनत्रयमिति (स्मृत्यर्थसारेतु) गृहीताशौचानांस्नानमात्रमुक्तंबह्वृच परिशिष्टेपि (अथातीतसंस्कारः) सचेदंतर्दशाहंस्यात्तत्रैवसर्वंसमापयेदूर्ध्वमाहि ताग्नेर्दाहात्सर्वमाशौचं कुर्यादन्येयुपत्नीपुत्रयोः पूर्वमगृहीताशौचयोःसर्वमा शौचं। गृहीताशौचयोःकर्मांगमितित्रिरात्रम् ॥ षडशीतावप्येवं ॥ विप्रवादर्शे तुप्रतिकृतिदहनेत्वग्निदेस्यात्त्रिरात्रमित्युक्तम् ॥ द्वादशवर्षादिप्रतीक्षोत्तरंदाहेतु पुत्रादीनांसर्वेषांत्रिरात्रमितिकल्पतरुदिवोदासादयः (अथप्रेतसंस्कारेकालः) ( हेमाद्रौगार्ग्यः ) प्रत्यक्षशवसंस्कारेदिनंनैवविशोधयेत् । आशौचमध्येसंस्का रेदिनंशोध्यंतुसंभवे॥ आशौचविनिवृत्तौचेत्पुनःसंस्क्रियतेमृतः। संशोध्यैवदिनं ग्राह्यमूर्ध्वंसंवत्सराद्यदि ॥ प्रेतकार्याणिकुर्वीतश्रेष्ठंतत्रोत्तरायणम् । कृष्णप क्षश्चतत्रापिवर्जयेत्तुदिनत्रयम् ( वाराहे ) चतुर्थ्यष्टमगेचंद्रे द्वादशेचविवर्जये त् । प्रेतकृत्यंव्यतीपातेवैधृतौपरिघेतथा । करणेविष्टिसंज्ञेचशनैश्चरदिनेतथा त्रयोदश्यांविशेषेणजन्मतारात्रयेतथा ॥ जन्मदशमैकोनविंशानिजन्मताराः ॥ (भारते) नक्षत्रेतुनकुर्वीतयस्मिन्जातोभवेन्नरः ॥ नप्रोष्ठपदयोःकार्यंतथाग्नेये चभारत ॥ दारुणेषुचसर्वेषुप्रत्यारेचविवर्जयेत् (काश्यपः) भरण्याद्रामघाश्ले षामूलंद्विचरणानिच । प्रेतकृत्येतिदुष्टानिधनिष्ठाद्यंचपंचकम् ॥ फाल्गुनीद्वित यंरोहिण्यनुराधापुनर्वसू । आषाढेद्वेविशाखाचभानिद्विचरणानिच (ज्योति र्नारदः) चतुर्दशीतिथिनंदाभद्रांशुक्रारवासरौ। सितेज्ययोरस्तमयंद्वंद्वाग्निभंवि षमांघ्रिभं ॥ शुक्लपक्षंचसंत्यज्यपुनर्दहनमुत्तमम् । वसूत्तरार्धतःपंचनक्षत्रेषुत्रिज न्मसु ॥ पौष्णाब्रह्मर्क्षयोश्चैवदहनात्कुलनाशनम् (अस्यापवादमाहतत्रैववैज वापः) प्रेतस्यसाक्षाद्दग्धस्यप्राप्तेत्वेकादशेहनि । नक्षत्रतिथिवारादिशोधनीयं नकिंचन ॥ युगमन्वादिसंक्रांतिदर्शेप्रेतक्रियायदि । दैवादापतितातत्रनक्षत्रादि नशोधयेत् (विश्वप्रकाशेपि) गुरुभार्गवयोर्मौढ्येपौषमासेमलिम्लुचे । नातीतः पितृमेधःस्याद्गयांगोदावरींविना (दानसमयतत्रैवोक्तम्) भद्रायांभूमिदानंस्या त्त्रिपादर्क्षेहिरण्यदः । वारेयुतत्तदर्णांतुवासोदानंविधीयते ॥ धनिष्ठापंचकमृते पंचरत्नानिदापयेत्। एकाशीतिपलंकांस्यंतदर्धंवातदर्धकम् ॥ नवग्रहात्रिपलंवा

पिदद्याद्विप्रायश्चित्तइत्यलंप्रसंगेन (हेमाद्रौवृद्धमनुः) अमृतंमृतमाकर्ण्यकृतंय
स्यौर्ध्वदैहिकम् । प्रायश्चित्तमसौस्मार्तंकृत्वाग्नीनादधीतच । जीवन्यदिसमा
गच्छेत्तघृतकुंभेनिमज्य्यतम् ॥ उद्धृत्यस्नापयित्वास्यजातकर्मादिकारयेत् । द्वाद
शाहंव्रतचर्याञ्चिरात्रमथवास्यतु ॥ स्नात्वोद्वहेत्तांभार्यामन्यांवातदभावतः । अ
ग्नीनाधायविधिवद्व्रात्यस्तोमेनवायजेत् ॥ अथेंद्राग्नेनपशुनागिरिंगत्वाचतत्र
तु । इष्टिमायुष्मतींकुर्यादीप्सितांश्चक्रतूंस्ततः ॥ अनाहिताग्नेस्तुचरुः (मृतवा
र्ताश्रवणेत्वाश्वलायनः) सुरभयएवयास्मिन्जीवेमृतशब्दइति ॥ यस्यतुजीवतएव
मृतिवार्तांश्रुत्वास्त्रियासहगमनंकृतंतदातद्वैधमेव ॥ भर्तुर्म्मरणज्ञानस्यैवनिमित्त
त्वात् ॥ प्रमात्वस्यगौरवेणायुक्तत्वाच्चेतिकेचित् ॥ तन्न ॥ मरणज्ञानस्यनिमित्त
त्वेतीतानागतयोरर्पितत्त्वापत्तेः ॥ भर्तुर्वैधदाहाभावेनतस्याःसहगमनाभावाच्च ॥
तस्मादाशौचवज्ज्ञातमरणस्यैवनिमित्तत्वं ॥ नचात्रतदस्ति ॥ परंकाम्यंमरणम
स्तु ॥ अतआत्महननदोषोस्तीतितातपादाः ॥ तथासर्प्पसंस्कारेकृतेत्रिरात्रमा
शौचंतद्विधिंचाह (शौनकः) अथवक्ष्यामिसर्प्पस्य संस्कारविधिमुत्तमम् ॥
सिनीवाल्यांपौर्णमास्यां पञ्चम्यांवापिकारयेत् ॥ कृतसर्प्पवधोविप्रःपूर्व्वंज
न्मनिवायदि । वधंप्रख्यापयेत्पापी चरेत्कृच्छ्रांश्चतुर्दश ॥ विप्रायलोहदण्ड
ञ्च तन्मूल्यंवापिदापयेत् (मूल्यमाह) निष्कत्रयंहिनिष्कंवा निष्कमेकंक
नीयसं ॥ अनुमत्यादिकर्तृणांनिष्कमर्धंतदर्धकं॥इदंस्वर्णरूप्ययोःशक्त्याज्ञेयम्
(संस्कारमाह) प्रियंगुव्रीहिगोधूमतिलपिष्टेनवापुनः । कृत्वासर्पाकृतिंशूर्प्पेनि
धायप्रार्थयेद्द्विजः ॥ गृहपूर्वंमृतःसर्पअस्मिन्पिष्टेसमाविश ॥ संस्कारार्थंमहंभ
क्त्याप्रार्थयामिसमासतः ॥वस्त्रोपवीतगंधाद्यैःसंपूज्यचहरेद्द्विजः । कुर्यात्संस्का
रसंकल्पंप्राणायामपुरःसरं ॥ यज्ञोपवीतिनाकार्यंसर्प्पसंस्कारकर्मतु । लौकि
काग्निंप्रतिष्ठाप्यसमिदाधानमाचरेत् ॥ ततोग्नेरग्निदिग्भागे भूमिंसंप्रोक्ष्यवा
रिभिः । चितिंकृत्वाथसंस्तीर्य्यकुशैराग्नेयकाग्रकैः ॥ पर्युक्ष्याग्निंपरिस्तीर्य
परिषिच्यसमर्चयेत् । कृत्वेध्माधानमाघारौचक्षुषीचयथाविधि ॥ सर्पंगृही
त्वायत्नेनचितिमारोपयेत्सुधीः । स्रुवेणजुहुयादाज्यमग्नौव्याहृतिभिस्त्रिभिः॥

सर्पास्येजुहुयादाज्यंव्याहृत्याचसमग्रया । आज्यशेषंस्रुवेणैवसर्पदेहेनिषेचयेत् ॥ च समस्थैर्जलैःसर्पंव्याहृत्याभ्युक्ष्यपाणिना । अग्नेरक्षाणइत्यनयासर्पायाग्निं प्रदापयेत् । उपतिष्ठेद्दह्यमानंनमोस्तुसर्पमंत्रतः ॥ ज्ञानतोज्ञानतोवापिकृतःसर्पवधोमया । पूर्वजन्मनिवासर्पतत्सर्वंक्षंतुमर्हसि ॥ क्षीराज्येनततश्चाग्निंप्रोक्ष्य व्याहृतिभिर्जलैः । नास्तिसंचयनंकुर्यात्स्नात्वाचस्वगृहंव्रजेत् ॥ ब्रह्मचर्यादिकंकार्यंत्रिरात्राशौचमिष्यते ॥ सचैलंतुचतुर्थेह्निस्नात्वाविप्रान्समर्चयेत् ॥ सर्पानंतस्तथाशेषःकपिलोनागएवच । कालिकःशंखपालश्चभूधरश्चेतिनामभिः ॥ गंधपुष्पाक्षतैर्धूपदीपाद्यैरर्चयेद्द्विजान् । घृतपायसभक्ष्यैश्चद्विजानष्टौतुभोजयेत् ॥ एवंकृतेविधानेनसर्पसंस्कारकर्मणि ॥ सर्पहिंसाकृतात्पापान्मुच्यतेनात्रसंशयः ॥ इतिसर्पसंस्कारः ॥ क्वचित्तुजीवतोप्यंत्यकर्माशौचंचकार्यम् ( यथा । प्रायश्चित्तानिष्कृतेः पतितस्यघटस्फोटे ) पतितस्योदकंकार्यंसपिंडैर्बांधवैःसह । निंदितेहनिसायाह्नेज्ञात्यृत्विग्गुरुसन्निधौ ॥ दासीघटमपांपूर्णंपर्यस्येत्प्रेतवत्तदा । अहोरात्रमुपासीरन्नाशौचंबांधवैःसहेतिमनूक्तेः ॥ निंदितेरिक्तादौ ( अपरार्केवशिष्ठोपि ) वेदविप्लावकशूद्रयाजकोत्तमवर्णावर्गपतितास्तेषांपात्रनिनयनमपात्रंसंस्कारादकृत्स्नंपात्रमादाय दासीअवर्णापुत्रोवाबंधुरसदृशोवागुणहीनः सव्येनपादेनप्रवृत्ताग्रान्दर्भाँल्लोहितान्वोपस्तीर्यापःपूर्णापात्रमस्मैनिनयेन्निनेतारं चास्यप्रकीर्णकेशाज्ञातयोन्वालभेरन्नपसव्यंकृत्वागृहेषुस्वैरमापद्येरन्नतऊर्ध्वंतेनतंधर्म्मयेयुस्तद्धर्माणस्तंधर्मयंतइति ॥ उत्तमवर्णाब्राह्मणादयः ॥ तेषांवर्गःसमूहस्तस्मात्पतिताब्रह्मादयः ॥ अपात्रसंस्कारःकुत्सितपात्रसमूहः ॥ प्रवृत्ताग्राःछिन्नाग्राः ॥ स्वैरंयथेच्छंधर्मादिकार्यंकुर्युः ॥ अस्माच्चनसामर्थ्यात्पात्रनिनयनात्प्राक्पतितज्ञातीनां धर्मकार्येष्वधिकारोनास्तीत्यपरार्कः ॥ तस्यविद्यागुरुयोनिसंबंधांश्चसन्निपात्यसर्वाण्युदकादीनिप्रेतकार्याणिकुर्युः ॥ पात्रंवास्यविपर्यस्येयुर्दासः कर्मकरोवाऽवकरादमेध्यंपात्रमानीयदासीघटात्पूरयित्वादक्षिणामुखःपदाविपर्यस्येदमनुदकंकरोमीति । नामग्राहंसर्वेन्वालभेरन् ॥ प्राचीनावीतिनोमुक्तशिखाअपउपस्पृश्यग्रामंप्रविशेयुरितिगौत

मोक्तेश्च ॥ उदकादीत्युक्तेर्दाहनिवृत्तिः ॥ प्रेतकार्याण्येकादशाहश्राद्धांतानि
दास्याहृतोंबुघटोदासीघटः ॥ तेनोदकेनामेध्यपात्रंपूरयित्वादासादिर्न्युब्जंवा
मपादेनकुर्यादितिहरदत्तः ॥ अत्रनामग्राहवचनमुदकादिप्रेतकार्येतद्वर्जनत्वार्थं ॥
तेनतत्तूष्णींभवति ॥ एतच्चप्रायश्चित्तानिच्छोः ॥ तस्यगुरोर्बांधवानांराज्ञश्चस
मक्षंदोषानभिख्याप्यतमनुभाष्यपुनःपुनराचारंलभस्वेति सयद्येवमप्यनवस्थि
तमतिः स्यात्ततोऽस्यपात्रंविपर्यस्येदितिशंखोक्तेः ॥ जीवंतमेवोद्दिश्यपिंडोद
कश्राद्धानिनाम्नादद्यादित्यपरार्कः ॥ कृतप्रायश्चित्तस्यघटस्फोटेकृतेऽपिसंग्रह
विधिमाहगौतमः ॥ यस्तुप्रायश्चित्तेनशुद्ध्येत्तस्मिन्शुद्धेशातकुंभमयंपात्रंपुण्य
ह्रदात्पूरयित्वास्रवंतीभ्योवा ॥ ततएनमुपस्पर्शयेयुरथास्मै तत्पात्रंदद्युस्ततसं
प्रतिगृह्यजपेच्छांताद्यौःशांतापृथिवीशांतंविश्वमंतरिक्षं योरोचनस्तमिहगृह्णा
मीत्येतैर्यजुर्भिःपावमानीभिस्तरत्समंदीभिःकूश्मांडैश्चाज्यंजुहुयाद्धिरण्यंदद्या
द्गांचाचार्याय ॥ यस्यतुप्राणांतिकंप्रायश्चित्तंसमृतःशुद्ध्येत्सर्वाण्येवतस्मि
न्नुदकादीनिप्रेतकर्माणिकुर्युरेतदेवशांत्युदकंसर्वेषूपपातकेषुभवति ॥ घटस्फोटो
त्तरंप्राणांतिकप्रायश्चित्तेकृतेतुमृतएवशुद्ध्येन्नतत्रसंग्रहविधिः ॥ अतस्तेनवि
नापिप्रेतकर्मकुर्यादित्यर्थः ॥ उपपातकेष्वपिघटस्फोटेकृतेएवंकार्यमित्यर्थः(या
ज्ञवल्क्यः) चरितव्रतआयातेनिनयेरन्नवंघटम् । जुगुप्सेरन्नचाप्येनंसंवसेयुश्चस
र्वशः ॥ कृतघटस्फोटस्यैवायंपरिग्रहविधिरितिमिताक्षरायामपरार्केच । अ
न्यथाप्रायश्चित्तमात्रेएतत्प्रसंगात् (मनुरपिघटस्फोटमुक्त्वा) निवर्तेरंस्ततस्त
स्मात्संभाषणासहासनैरित्युक्त्वा ॥ प्रायश्चित्तेतुचरितेपूर्णकुंभमपांनवम् । तेनै
वसार्द्धंप्रास्येयुःस्नात्वापुण्येजलाशयेइतितच्छन्दंप्रायुंक्त (अपरार्केवशिष्ठोऽपि)
पतितानांचरितव्रतानांप्रत्युद्धारोऽथाप्युदाहरंति ॥ अग्रेऽभ्युद्धरतांगच्छेत्क्रीड
न्निवहसन्निव । पश्चात्पातयतांगच्छेच्छोचन्निवरुदन्निवेत्याचार्यमातृपितृहं
तारस्तत्प्रसादादपगतपापास्तेषांप्रत्यापत्तिः ॥ पूर्णाह्रदात्प्रवृत्ताद्वा सकांच
नंपात्रंमाहेयंवाद्भिः पूरयित्वापोहिष्ठीयाभिरेनमद्भिरभिषिंचेयुः ॥ सर्वस्वा
भिषिक्तस्यप्रत्युद्धारःपुत्रजन्मनाव्याख्यातइति ॥ प्रत्युद्धारःपरिग्रहः ॥ तत्रो

ह्वरतांहसन्निवाग्रेसरः स्यात् ॥ पातयतांघटस्फोटंकुर्वतांशौचन्निवपश्चाद्दृग
च्छेत् ॥ मातापित्रादिहंतृणांपरिग्रहोनकार्यः ॥ तत्प्रसादेसतिचीर्णव्रतानांका
र्यः ॥ प्रवृत्तंनिर्भरः ॥ पुत्रजन्मनेत्यभिषेकोत्तरंजातकर्मादयःसंस्काराःपुत्रज
न्मवत्कार्याइत्यपरार्कोव्याचख्यौ ॥ अतएवविज्ञानेश्वरोघटेपवर्जितेज्ञातिमध्य
स्थोयवसंगवाम् ॥ प्रदद्यात्प्रथमंगोभिःसत्कृतस्यहिसत्क्रियेत्यत्रगवांभक्षणाभा
वेपुनर्व्रतंचरेदित्येतत्प्रकृते ॥ एवंचरितव्रतविधौविशेषोयमितिवदन्घटस्फोटो
त्तरंपरिग्रहएवैतन्नसर्व्वत्रेत्याह ॥ तस्मात्कृतेपिघटस्फोटेप्रायश्चित्तंपरिग्रहवि
धिःपुनःसंस्काराभवंतीतिसिद्धम् (तथाजीवच्छ्राद्धेकृतेहेमाद्रौबौधायनः) तत्रा
शौचंदशाहंस्यादित्यलंप्रसंगेन ॥ एवंसापवादेआशौचेउक्तेप्रतिशाखंभिन्नेप्यं
त्यकर्मणिसाधारणंकिंचिदुच्यते ॥ तत्राधिकारिणःप्रागुक्ताः ॥ सर्वाभावेधर्मपु
त्रोवाकार्यः ॥ अपुत्रेणसुतःकार्योयादृक्तादृक्प्रयत्नतः ॥ पिंडोदकक्रियाहेतो
र्नामसंकीर्तनायचेतिव्यासवचनात् ( गृह्यपरिशिष्टे ) असगोत्रःसगोत्रोवायदि
स्त्रीयदिवापुमान् । प्रथमेऽहनियःकुर्यात्सदशाहंसमापयेत् ॥ दद्यात्पिंडमितिशे
षः (भविष्ये) यत्राद्योदीयतेपिंडस्तत्रसर्व्वंसमापयेत् (ब्राह्मेपि) प्रथमेऽहनियो
दद्यात्प्रेतायान्नंसमाहितः । अन्नंनवसुचान्येषुसएवप्रददात्यपि (विज्ञानेश्वराद
यस्तु) केचित्तुअग्निंदद्यादितिव्याचक्षते ॥ सगोत्रोवाऽसगोत्रोवायोग्निंदद्या
त्सखेनरः । सोपिकुर्य्यान्नवश्राद्धंशुद्ध्येत्तुदशमेऽहनीति दिवोदासीये वचनाच्च
(तत्रैव) दृष्ट्वास्थानस्थमासन्नधर्म्मोन्मीलितलोचनम् । भूमिष्ठंपितरंपुत्रोयदिदा
नंप्रदापयेत् ॥ तदिशिष्टगयाश्राद्धादश्वमेधशतादपि (तानियथा) मोक्षंदेहिहृ
षीकेशमोक्षंदेहिजनार्दन । मोक्षधेनुप्रदानेनमुकुंदःप्रीयतांममेतिमोक्षधेनुमंत्रः ॥
देहिकामुष्मिकंयच्चसप्तजन्मार्जितंऋणम् ॥ तत्सर्वंशुद्धिमायातुगामेतांददतोम
मेतिऋणधेनोः ॥ आजन्मोपार्जितंपापंमनोवाक्कायकर्मभिः॥ तत्सर्वंनाशमाया
तुगोप्रदानेनकेशवेतिपापधेनोः (भारते) शुक्लपक्षेदिवाभूमौगंगायांचोत्तराय
णे । धन्यास्तातमरिष्यंतिहृदयस्थेजनार्दने (हेमाद्रौवाराहे) व्यतीपातेयसंक्रां
तिस्तथैवग्रहणंरवेः ॥ पुण्यकालास्तदासर्व्वंयदामृत्युरुपस्थितः (व्यासः) आ

सन्नमृत्युनादेयागौःसवत्सातुपूर्ववत्। तदभावेतुगौरेवनरकोत्तारणायवै॥ तदा यदिनशक्नोतिदातुंवैतरणींतुगाम्। शक्तोन्योरुक्तदादत्वादद्याच्छ्रे योमृतस्यतु (मदनरत्नेजातूकर्ण्यः) उत्क्रांत्यादीनिदानानिदशदद्यान्मृतस्यतु। गोभूतिलहिरण्याज्यवासोधान्यगुडानिच॥ रौप्यंलवणमित्याहुर्दशदानान्यनुक्रमात्॥ एतानिदशदानानिनराणांमृत्युजन्मनोः॥ कुर्यादभ्युदयार्थंतुप्रेतेपिहिपरस्यवै (ब्राह्मे) ताम्रपात्रंतिलैःपूर्णंप्रस्थमात्रंद्विजायतु॥ सहिरण्यंचयोदद्याच्छ्रद्धावित्तानुसारतः॥ सर्वपापविशुद्धात्मालभतेगतिमुत्तमाम्॥ उत्क्रांतवैतरण्यौचदशदानानिचैवहि। प्रेतेपिकृत्वातंप्रेतंशवधर्मेणदाहयेत् (तत्रैवपरिशिष्टे) म्रियमाणस्यकर्णेतुपुण्यमंत्रान्जपेत्ततः (क्रियानिबंधेगारुडेत्वष्टौदानान्युक्तानि) तुलसीसंनिधौकृत्वाशालग्रामशिलांतथा। तिललोहंहिरण्यंचकार्पासंलवणंतथा॥ सप्तधान्यंक्षितिर्गावएकैकंपावनंस्मृतमिति॥ दशदानवैतरणीधेनूत्क्रांतधेनुदानादिभट्टकृतांत्येष्टिपद्धतौज्ञेयम्॥ कृतांत्यकर्माधिकार्थंत्रीन्कृच्छ्रान्कुर्यादितितत्रैवोक्तम्॥ अत्रदेवयाज्ञिकेनमुमूर्षोर्मधुपर्कदानमुक्तम् (तदुक्तंवाराहे) दृष्ट्वासुविह्वलंह्येनंयममार्गानुसारिणम्। प्रयाणकालेतुनरोमंत्रेणविधिपूर्वकम्॥ मधुपर्कंत्वरन्गृह्यइसंमंत्रमुदाहरेत्॥ ओंगृहाणचेमंमधुपर्कमाद्यंसंसारनाशनकरंह्यमृतेनतुल्यम्। नारायणेनरचितंभगवत्प्रयाणांदाहेचशांतिकरणंसुरलोकपूज्यम्॥ अनेनैवतुमंत्रेणदद्याच्चमधुपर्ककम्। नरस्यमृत्युकालेतुपरलोकसुखावहम् (अथदुर्मरणेदिवोदासीये) चंडालादिमृतेविप्रेत्वंतरिक्षमृतेपिवा। कृच्छ्रातिकृच्छ्रचांद्रैस्तुशुद्धिस्तत्रप्रकीर्तिता (देवजानीयेजाबालिः) शूद्रेणदग्धोयोविप्रोनलभेच्छाश्वतींगतिम्। प्रायश्चित्तंप्रकुर्वीतब्राह्मणाःपापशुद्धये॥ चांद्रायणंपराकंचप्राजापत्यंविशोधनम् (गृह्यकारिकायाम्) उदक्यासूतिकावापियदिप्रेतंस्पृशंतिहि। तस्यैषविधिरादिष्टोवात्स्येनैवमहात्मना॥ एषसूतिकोक्तः (मदनरत्नेस्मृत्यंतरे) ऊर्ध्वोच्छिष्टाधरोच्छिष्टोभयोच्छिष्टेतथैवच। अस्पृश्यस्पर्शनेचैवखड्गादिमरणेपिच। एतद्दोषानुसारेणप्रायश्चित्तंसमाचरेत्॥ कृच्छ्रांस्त्रिषट्पंचदशांश्चांद्रत्रयमथापिवा। शुद्धेतदानींसंपा

द्य शवधर्म्मेणदाहयेत् ( गृह्यकारिकायाम् ) खट्वायांमरणेचैव त्रींस्त्रीन्कृच्छ्रा
न्प्रकल्पयेत् । सन्नांत्यजैस्तुसंस्पृष्टोमृतोदैवात्कथञ्चन ॥ एकत्रिंशत्कृच्छ्रै
स्तुशुद्धिरुक्तामनीषिभिः । कुणपेत्वर्धदग्धेतुचितास्पृष्टांत्यजातिभिः । तत्स्प
र्शनेदूषणाच्च त्रिभिःकृच्छ्रैर्विशुध्यति (धर्म्मप्रदीपे) चाण्डालसूतिकोदक्या
स्पृष्टेप्रेतेतथैवच । तस्यपापविशुद्ध्यर्थंकृच्छ्रान्पञ्चदशाचरेदित्युक्तम् (मनुः)
अस्त्वग्न्याहिताहुतिःशास्याच्छूद्रसंपर्कदूषिता ॥ अत्रापिकृच्छ्रत्रयम् ॥ अस्पृश्यस्प
र्शनेचैवेत्युक्तेः ( तत्रैवकर्म्मप्रदीपे) रात्रौवारात्रिशेषेवाम्रियंतेचेद्द्विजातयः ।
दाहंकृत्वायथान्यायंद्वौपिण्डौनिर्व्वपेत्सुतः ॥ रजस्वलागर्भिण्यादिमृतौतुव
क्ष्यामः ( निर्णयामृतेपारिजातेयमः ) संध्यायांवातथारात्रौ दाहःपाथेयक
र्मच । नवश्राद्धंचनोकुर्यात्कृतंनिष्फलतांव्रजेत् ॥ एतद्दिनमृतस्यरात्रिनिषेधा
र्थम् ( यत्तुस्कांदे ) यदिरात्रौदहेत्तस्यसमाप्तिर्दहनस्यतु । परेऽहन्युदितेसूर्ये
कार्यातस्योदकक्रिया ॥ दग्धस्यतुनवैकार्यारात्रौजातूदकक्रियेति ॥ तन्निर्मू
लं ( रात्रिमृतस्यतुतत्रैवसंग्रहे ) रात्रौदग्ध्वातुपिंडांतंकृत्वावपनवर्जितम् ॥ वप
नंनेष्यतेरात्रौश्वस्तनीवपनक्रियेति ॥ वपनंतुप्रातः ॥ तच्चसर्वैःपुत्रैःकार्यम् ॥ गं
गायांभास्करक्षेत्रेमातापित्रोर्गुरोर्मृतौ । आधानेसोमयागेचवपनंसप्तसुस्मृतमि
तिमिताक्षरायांस्मृतेः ॥ मरणस्यानंतरंगत्वान्नैमित्तिकमिदम् ॥ तदेवसंग्रहवच
नेनपरेद्युस्तत्क्रियतेतीर्थवत् ॥ तेनकस्यचिद्दाहांगत्वोक्तिश्चिंत्या ( मदनरत्नेगा
लवः) प्रथमेऽहनिकर्त्तव्यंवपनंचानुभाविनाम्। प्रेतस्यकेशश्मश्र्वादिवापयित्वा
ऽथदाहयेत् ॥ आशौचांतेतुपुनःकार्यंविधिबलात् ॥ मदनपारिजातेऽप्येवम् ॥
तेनसर्वस्याऽस्यानिर्मूलत्वोक्तिरज्ञोक्तिरेव ( स्मृतिरत्नावल्याम् ) शवंराज्युषि
तंचेत्त्रीन्कृच्छ्रान्कृत्वादहेत्सुतः ( मदनरत्नेऽङ्गिराः ) ऊर्ध्वोच्छिष्टाधरोच्छि
ष्टेह्यंतरिक्षमृतेपिवा । कृच्छ्रत्रयंप्रकुर्वीतआशौचेमरणेपिच ॥ अथसाग्नेर्विशे
षः ( कारिकायाम् ) कृष्णपक्षेप्रमीयेतयद्यग्निप्रातराहुतीः । शेषास्तुजुहुयाद्द
र्शपर्यंताःपक्षहोमवत् ॥ प्रतिपत्प्रातर्होमांताइत्यर्थः ॥ यद्याहिताग्निरपरपक्षे
म्रियेताहुतिभिरेनंपूर्वपक्षेहरेयुरित्याश्वलायनोक्तेः ॥ तदानीमेवजुहुयात्सायंका

लाहुतीरपि । सायंम्रियेतचेत्सायमाहुतीर्जुहुयादथ । तदानीमेवजुहुयात्प्रातःकालाहुतीरपि । सकृद्गृहीतमंत्रेष्टिभिन्नतंत्रंचहोमयोः ॥ दार्शंचापिप्रकुर्वीतस्थालीपाकंतदैवतु ( छंदोगपरिशिष्टे ) हुतायांसायमाहुत्यांदुर्बलश्चेद्गृहीभवेत् । प्रातर्होमस्तदैवस्याज्जीवेच्चसपुनर्नवा ॥ इदंशुक्लपक्षपरम् ॥दुर्बलोमुमूर्षुः ( त्रिकांडमंडनः ) दर्शेष्टिंचतदाकुर्यादिष्टिर्यदिनसंभवेत् । देवतानांप्रधानानामेकैकस्य हुनेत्पृथक् ॥ पुरोनुवाक्यायाज्याभ्यांचतुरात्तघृताहुतीः ( तथा) अग्न्यावरणयोरारूढेप्रमीयेतपतिर्यदि । प्रेतंस्पृष्ट्वाममथित्वाग्निं ज्ञात्वाचोपावरोहणम् घृतंस्त्रुवाद्वादशैापात्तंतूष्णींहुत्वाग्रवक्रिया ॥ विच्छिन्नश्रौताग्नेर्मृतौतुप्रेताधानंतत्रैवोक्तम् ॥ प्रेतंस्वाभ्यालयेक्षिप्त्वामथितान्यानलेरणी । सन्नधायारणींसंघेतयस्यैतियजुषाततः ॥ यस्याग्नयोजुह्वतोमांसक्रामाःसंकल्पयंतेयजमानमांसम ॥ जायंतुतेहविधेसादितायस्वर्गलोकमिमंप्रेतंनयंत्विवितमंत्रतः ॥ प्रणीयपावकंतूष्णींद्वादशैापात्तसर्पिषा । तूष्णींहुत्वाततःकुर्यात्प्रेतेमात्याइतिक्रियाम् ॥ नष्टेष्वग्निष्वथारण्योर्नाशेस्वामीम्रियेतचेत् । आहरेदरणीद्वंद्वंमनोज्योतिरृचाततः ( यज्ञपार्श्वः ) यजमानेचिताह्रूढेप्राग्न्यासक्तेसति । वर्ग्राद्यभिहतेवलौकथंकुर्वंतियाज्ञिकाः ॥ तदर्थंदग्धकाष्ठेनमंथनंतत्रकारयेत् । तच्छेद्यालाभतोन्येनदग्धशेषेणवापुनः ॥ हुत्वाज्यंलौकिकेवह्नौहुतशेषंदहेत्तुवा । अत्राग्नियुत्पत्सुपर्णाश्रैःशरीरोत्पत्तिः ॥शरीरेवासतिप्रेताधानेनाग्न्युत्पत्तिः ॥ उभयाभावेतुप्रेताधानेनाधिकाराद्दाहादिसंस्कारलोपः ॥ उदकदानाद्येवकार्यमितिकेशवीकारगतव्यप्रमुखाः ॥ तन्न ॥ निषेकाद्याःश्मशानांतास्तेषांवैमंत्रतःक्रियाइतिविरोधात् ॥ क्रियालोपगतायेचेतिनिषेधात्तदभावेपलाशानांवृंतैःकार्यः ॥ पुमानपीत्यभावेविधानस्यान्याभावेपिसाम्याच । तेनप्रेताहुत्यभावेपिस्वस्थक्द्रव्यांतरोक्तेरदृष्टार्थत्वात् ॥ प्रेताधानंदाहेपिभवत्येव ॥ प्रतिकृतेरग्नीनांचप्रेताधानप्रयोजकत्वाक्षतेः ॥ पत्न्याअप्येवम् ॥ दाहयित्वाग्निहोत्रेणस्त्रियंव्रतवतींपतिरिति याज्ञवल्क्योक्तेः ( यत्तु ) द्वितीयांचैवयोभार्यां दहेद्वैतानिकाग्निभिः ॥ जीवंत्यांप्रथमायांतुसुरापानसमंस्मृतमितितदाधानेसहानधिकृताधि

द्वयमिति विज्ञानेश्वरः ( मदनरत्नेब्राह्मेपि ) आहिताग्न्योश्चदंपत्यो र्यस्त्वादौम्रियतेभुवि । तस्यदेहःसपिण्डैश्च दग्धव्यस्त्रिभिरग्निभिः ॥ पश्चान्मृतस्य देहस्तुदग्धव्योलौकिकाग्निना । अनाहिताग्निदेहस्तुदाह्योगृह्याग्निनाद्विजैः (त्रिकांडमंडनस्तुविकल्पमाह ) ज्येष्ठायांविद्यमानायांद्वितीयायैस्त्वयोषिते । काम्यंनित्याग्निहोत्रंवानकथंचित्प्रयच्छति ॥ स्त्रीमात्रमविशेषेणादग्ध्वान्यैर्वैदिकादिभिः । विवाह्यादधतेयद्वाधानमेवास्तिचेद्धूरिति ॥ अत्रेदंतत्त्वम् ॥ साग्नेःपत्नीमृतौद्वौपक्षौ ॥ पुनर्विवाहेच्छायांपूर्वाग्निभिर्दहेदित्येकःपक्षः ॥ भार्यायैपूर्वमारिण्यैदत्त्वाग्नीनंत्यकर्मणि । पुनर्दारक्रियांकुर्यात्पुनराधानमेवचेतिमनूक्तेः ॥ दाहयित्वाग्निहोत्रेणस्त्रियंवृत्तवतींपतिरिति याज्ञवल्क्योक्तेश्च ॥ पुनर्विवाहाशक्तौनिर्मंथ्येनतांदग्ध्वापूर्वाग्निवदेवाग्निहोत्रेष्ट्यादिकार्यमित्यर्थः ॥ आहार्येणाहिताग्निंपत्नीचेत्याश्वलायनोक्तेः (भारद्वाजोपि) निर्मंथ्येनपत्नीमिति ॥ पूर्वाग्न्येकदेशेनदहेदितियाज्ञपार्श्वदेवयाज्ञिकादयः (यानिच ) तस्मादपत्नीकोप्यग्निहोत्रमाहरेदितिश्रुतिः (विष्णुःछन्दोगपरिशिष्टंच)मृतायामपिभार्यायांलौकिकाग्निंनहित्यजेत् । उपाधिनापितत्कर्मयावज्जीवंसमाचरेत् ॥ उपाधिर्हेमकुशपत्न्यादिः ॥ अन्येकुशमयींपत्नींकृत्वातुगृहमेधिनः । अग्निहोत्रमुपासंतेयावज्जीवमनुव्रताइत्यपरार्केस्मृत्यंतरात् (कात्यायनोपि) रामोपिकृत्वासौवर्णीं सीतांपत्नींयशस्विनीं । ईजेबहुविधैर्यज्ञैःसहभ्रातृभिरच्युतइत्यादीनि ॥ तानिपूर्वाग्निवदेवाग्निहोत्रादिपराणि ॥ नत्वपत्नीकस्याधानार्थानि ॥ क्रतुधीनामाधानाप्रयोजकत्वात् ॥ अपत्नीकस्याधानाप्रवृत्तिरितिमानवपरिशिष्टाच्च ॥ सोमोनभवत्येव॥ अपत्नीकोप्यसोमपइतिश्रुतेः ( यत्तुभरद्वाजापस्तंबसूत्रम्) दारकर्मणायद्यशक्तआत्मार्थमग्न्याधेयमिति ॥ अस्यार्थः ॥ पुनर्विवाहाशक्तौयदग्न्याधेयंपूर्वंकृतमस्तितदात्मार्थमेव ॥ नपत्न्यैस्यादिति ॥ ब्राह्मणभाष्यापरार्कशार्करामाण्डारादितत्त्वमप्येवम् ॥ त्रिकाण्डमण्डनस्तुपक्षद्वयमाह ॥ अन्येप्यपत्नीकस्याधानमाहुस्तदाशयंनविद्मः (वृद्धयाज्ञवल्क्यः) आहिताग्निर्यथान्यायंदग्धव्यस्त्रिभिरग्निभिः । अनाहिताग्निरेकेनलौकिके

ज्ञापरोजनः (क्रतुः) एवंवृत्तांसवर्णांस्त्रींद्विजातिःपूर्वमारिणीं। दाहयेदग्निहो त्रेणायज्ञपात्रैश्चधर्मवित् (कारिकायाम्) पत्नीमपिदहेदेवंभर्तुःपूर्वंमृतायदि। अनग्निकांदहेदेवंकपालेनहविर्भुजा (आशौचप्रकाशेक्रतुः) विधुरंविधवांचैव कपालस्याग्निनादहेत्। ब्रह्मचारियतीचैवदहेदुत्तपनाग्निना॥ तुषाग्निनाब्रह्मचारी रध्वव्यः कन्यकाबालएवच। अग्निवर्णंकपालन्तु कृत्वातत्रविनिक्षिपेत्॥ कारोर्ण्यादितत्रैवह्निर्जातोयःसकपालजः। अनुपनीतेयद्यपिजाताररायग्निः कैश्चिदुक्तस्तथापितस्यकलौनिषिद्धत्वोक्तेरयमेवज्ञेयः (स्मृत्यन्तरे) गृहस्थोब्रह्मचारीच विधुरोविधवाःस्त्रियः॥ औपासनश्चोत्तपनस्तुषाग्निस्तुकपालजः॥ (उत्तपनस्तु) दर्भाग्रेग्निन्तुप्रज्वाल्य पुनर्दर्भैस्तुसंयुतः। पुनर्दर्भैस्तृतीयेग्निरेषउत्तपनस्मृतः (यमः) यस्यानयतिशूद्रोग्निं तृणकाष्ठहवींषिच। प्रेतत्वंचसदातस्यसचाधर्मेणलिप्यते (देवलः) चण्डालाग्निरमेध्याग्निः सूतिकाग्निश्चकर्हिचित्। पतिताग्निश्चिताग्निश्च नशिष्टग्रहणोचितः (मनुः) दक्षिणेनमृतंशूद्रं पुरद्वारेणनिर्हरेत्। पश्चिमोत्तरपूर्वैस्तु यथासंख्यंद्विजातयः॥ अत्रप्रातिलोम्येनक्रमः॥ पूर्वामुखस्तुनेतव्योब्राह्मणोबांधवैर्गृहात्। उत्तराभिमुखोराजावैश्यःपश्चान्मुखस्तथा॥ दक्षिणाभिमुखःशूद्रोनिर्हर्तव्यःस्वबांधवैरित्यादिपुराणादित्यपरार्कः॥ तेनात्रैशच्छ्लोक्युक्तोनुलोमक्रमोहेयः (आश्वलायनः) ज्येष्ठप्रथमाःकनिष्ठजघन्यागच्छेयुः॥ आधानोत्तरंद्वितीयविवाहेकृतेयजमानमरणेश्रौतस्मार्ताग्न्योःसंसर्गः (बौधायनसूत्रे) अथयद्याहिताग्निर्द्वेभार्येविंदेतप्राक्संयोगान्म्रियेतौपासनंसंपरिस्तीर्याज्यं विलाप्यचतुर्गृहीतंगृहीत्वासमिद्वानग्नौजुहोति॥ संमितंसंकल्पयेथामितिमिंदाहुतीव्याहृतीश्चहुत्वाथैतमग्निमयंतेयोनिर्ऋत्विजइतिसमिधिसमारोप्यगार्हपत्येसमिधमभ्यादधातिप्रवतंनःसमनसाविति गार्हपत्यआज्यंविलाप्यचतुर्गृहीतंगार्हपत्ये जुहोत्ययन्नावग्निश्चरतिप्रविष्टइत्यपरंचतुर्गृहीत्वाचित्तिः स्रुगितिसग्रहंजुहोत्यथगार्हपत्येस्रुवाहुतीर्जुहोतिब्राह्मणएकहोतेतिदशभिरथप्राचीनावीत्यन्वाहार्यपचनेजुहोति येसमानायेसजाताइतिद्वाभ्यामथतत्रैवस्रुवाहुतिं जुहोत्यग्नयेकव्यवाहनायस्विष्टकृतेस्वधा

नमः स्वाहेत्यथयज्ञोपवीती द्वादशगृहीतेनस्रुचंपूरयित्वा पुरुषसूक्तेनाहवनीये
जुहोत्यथस्रुवाहुतीर्जुहोत्यग्नयेविविचयेस्वाहाग्नयेव्रतपतयेग्नयेपवमानायाग्न
येपावकायाग्नयेशुचयेस्वाहाग्नये पथिकृतेस्वाहाग्नयेतंतुमतेग्नयेवैश्वानराये
त्यथचतुर्गृहीतंजुहोतिमनोज्योतिरित्यतऊर्ध्वंपैतृकंकर्मप्रतिपद्यतइति ॥ आहि
ताग्नौविदेशमृतेपथिकृतीष्टिमृताग्निहोत्रंतद्दाहः पात्रयोजनंचकल्पसूत्रादिभ्यो
स्मत्पितामहकृतपद्धतेश्चज्ञेयमिति बहुवक्तव्येप्युपरम्यते (स्मार्ताग्निसूत्रेमदन
रत्नेकदेशपरिशिष्टेच) दुर्बलंस्नापयित्वातुशुद्धचैलाभिसंवृतम् । दक्षिणाशिर
संभूमौबर्हिष्मत्यांनिवेशयेत् ॥ घृतेनाभ्यक्तमाप्लाव्यशुद्धवस्त्रोपवीतिनम् । चं
दनोक्षितसर्वांगंसुमनोभिर्विभूषयेत् ॥ हिरण्यशकलान्यस्यक्षिप्त्वाछिद्रेषुसप्त
सु । मुखेष्वथापिधायैनंनिर्हरेयुःसुतादयः ॥ आमपात्रेग्निमादायप्रेतमग्निपुरः
सरम् । एकोनुगच्छेत्तस्यार्धमर्धपथ्युत्सृजेद्भुवि ॥ ऊर्ध्वमादहनंकार्यमासीनोद
क्षिणामुखः । सव्यंजान्वाच्यशनकैःसतिलंपिंडदानवत् ॥ अथपुत्रादिराप्लुत्यकु
र्याद्दारुचयंमहत् । तत्रोत्तानंनिपात्यैनंदक्षिणाशिरसंमुखे ॥ आज्यपूर्णांस्रुवंदद्या
द्दक्षिणाग्रांनसिस्रुचम् । पादयोरधरांप्राचीमरणीमुरसीतराम् ॥ पार्श्वयोःशूर्पं
चमसौसव्यदक्षिणयोःक्रमात् । मुसमेतुन्यसेन्न्युब्जमंतरूर्वोरुलूखलम् ॥ चां
त्रौर्विलीढमत्रैवअग्नेरप्ययंविधिः । अपसव्येनकृत्वैतद्वाग्यतःपितृदिङ्मुखः ।
अथाग्निंसव्यमावृत्त्वोदद्याद्दक्षिणतःशनैः ॥ अस्मात्त्वमधिजातोसित्वदयंजाय
तांपुनः । असौस्वर्गायलोकायस्वाहेतिपरिकीर्तयेत् ( तथा ) एवमेवाहिताग्ने
स्त्वपात्रन्यासादिकंभवेत् । कृष्णाजिनादिकंचात्रविशेषोध्वर्युचोदितः (तत्रैव)
अनयैवावृतानारीदग्धव्यायाव्यवस्थिता । अग्निप्रदानमंत्रोस्यानप्रयोज्यइति
स्थितिः ( इदंछन्दोगानामेव ) पात्रन्यासोक्तेरुत्तानदेहत्वंसाग्निपरम् ॥ निर
ग्निस्तुपुमानधोमुखःस्त्रीतूत्तानादाह्या ॥ सगोत्रजैर्गृहीत्वातुचितामारोप्यतेश
वः । अधोमुखोदक्षिणादिक्चरणस्तुपुमानिति । उत्तानदेहानारीतुसपिंडैरपिबं
धुभिरित्यादित्यपुराणादितिशुद्धितत्त्वहारलतादयः ॥ उत्तरशिरस्त्वंसामगेतर
परम् ॥ यारहेत्वग्निदानेऽन्योमंत्रः ॥ कृत्वातुदुष्कृतंकर्मजानतावाप्यजानता ॥

मृत्युकालवशंप्राप्यनरंपंचत्वमागतम्॥धर्म्माधर्म्मसमायुक्तंलोभमोहसमावृतम्। दहेयंसर्वगात्राणिदिव्यांल्लोकान्सगच्छतु॥ ज्वलमानंमहावह्निंशिरःस्थानेप्रदापयेत्॥ चतुर्वर्णेषुसंस्थानमेवंभवतिपुत्रके (अत्रक्रियानिबंधेगारुडेषट्पिंडदानमुक्तं) मृतस्योत्क्रांतिसमयेषट्पिंडान्क्रमशोददेत्। मृतिस्थानेतथाद्वारिचत्वरेतार्क्ष्यकारणात्॥विश्रामेकाष्ठचयनेतथासंचयनेचषट्(तथा)आदौदेयास्तुषट्पिंडादशादेयादशाहिकाः।स्थानेचार्धपथेतीतेचितायांशवहस्तके॥ श्मशानवासिभूतेभ्यःषष्ठंसंचयनेतथा (ततः) त्वंभूतकृज्जगद्योने त्वंलोकपरिपालकः॥ उक्तः संहारकस्तस्मादेनंस्वर्गंमृतं नयेत्यग्निंदत्वाऽस्मात्त्वमितिमंत्रेणार्धदग्धेआज्याहुतिरुक्ता(आहिताग्नौपराशरः) शम्यांशिश्नेविनिक्षिप्यअरणीमुष्कयोरपि। जुहूंचदक्षिणेहस्तेवामेतूपभृतंन्यसेत्॥ शिश्नेतूलूखलंदद्यात्पृष्ठेचमुसलंन्यसेत्॥ उरसिक्षिप्यदृषदंतण्डुलाज्यतिलान्मुखे। श्रोत्रेचप्रोक्षणींदद्यादाज्यस्थालींचचक्षुषोः॥ कर्णेनेत्रेमुखेघ्राणे हिरण्यशकलंन्यसेत्। अग्निहोत्रोपकरणमशेषंतत्रनिक्षिपेत् ( प्रचेताः ) स्नानंप्रेतस्यपुत्राद्यैर्वस्त्राद्यैःपूजनंततः। नग्नदेहंदहेन्नैवकिंचिद्देयंपरित्यजेत् (यमः) प्रेतंदहेच्छुभैर्गंधैःस्नापितंस्रग्विभूषितम् (आश्वलायनसूत्रे ) संस्थितेप्रेतालंकारान्कुर्वंति केशश्मश्रुलोमनखानिवापयंति नलदेनानुलिंपंतिनलदमालांप्रतिमुंचंतीति (माधवीयेब्राह्मे) दरिद्रोपिनदग्धव्योनग्नःकस्यांचिदापदि (तथा) निःशेषस्तुनदग्धव्यःशेषंकिंचित्त्यजेन्नरः ( दाहकालेऽग्निनाशेतुमदनरत्नेयज्ञपार्श्वः) यजमानेमृतेक्वापिचितादौवाप्रवेशिते। वर्षाद्यभिहतेस्मिंस्तुकथंप्रेतविकल्पना॥ शेषंदग्ध्वाप्रदग्धेषुनिर्मथ्यैवतुकारयेत् (अथपर्णशरादिदाहेनाग्निनाशेपश्चात्तद्देहालाभेमदनरत्नेब्राह्मे ) अथपर्णशरेदग्धेपात्रन्यासेकृतेसति। गतेऽर्वाग्नयुतद्देहोयदूर्ध्वंलभ्यतेक्वचित्॥ तदार्धदग्धकाष्ठानितानिनिर्मथ्यतंदहेत्॥ यद्यर्धदग्धकाष्ठंतुतदग्निर्वैनलभ्यते॥ तदातदस्थिखंडंतुनिक्षेप्तव्यंमहाजले (दंपत्योरेकदामृतौविशेषमाहापस्तंबः) तथैवप्रेतेसहैवपितृमेधोद्विवचनलिंगान्मंत्रान्संधारयंति॥ पितृमेधोदाहांतकर्म॥ दाहांतमेकतंत्रत्वमितिबौधायनोक्तेः॥ अस्थिसंचयनमप्येवम्॥ उदकपिण्डदा

नादिपृथगेव ॥ सगमनेप्येवम् (तदाहमदनरत्नेभाष्यार्थसंग्रहकारः ) एककाल
मृतौभार्या भर्त्ताचयदिचेत्तद्वयोः ॥ तंत्रेणादहनंकुर्य्यात्पिण्डश्राद्धंपृथक्पृथक् ॥
एककालेमृतौजायां पतीयदितदापितुः । विभज्याग्निंक्रियांकुर्य्यादितियत्तद
सांप्रतम् ॥ दाहान्तमेकतंत्रत्वमितियाज्ञिकसंमतम् ॥ मृतंपतिमनुव्रज्य यानारी
ज्वलनंगता । अस्थिसंचयनांतोस्या भर्तुःसंस्कारएवहि ॥ कीकसानान्तुसंस्का
रो न्यायसिद्धोपियोमतः । एककालेमृतेप्येवं कीकसानांविधिःस्मृतः ॥ नव
श्राद्धंसपिण्डांतं भिन्नकालमृतौयथा ( कपर्दिकारिकापि ) मृतेभर्तरितद्दाहा
त्प्राक्पत्नीम्रियतेयदि । पत्न्यांवाप्राक्प्रमीतायांदाहादर्वाक्पतिर्मृतः ॥ तत्रतं
त्रेणदाहःस्यान्मंत्रेषुद्वित्वमूह्यते । कीकसानान्तुसंस्कारः पृथगेवतयोर्भवेत् ॥
एकाहमृत्यौयुगपन्नवश्राद्धाकरंतयोः । मृतंपतिमनुव्रज्यपत्नीचेदनलंगता ॥ तत्रा
पिदाहस्तंत्रेण पृथगस्थिक्रियाभवेत् ॥ अस्थिसंचयनपृथक्त्वेविकल्पः (सहग
मनेसर्वत्रपाकैक्यमाहप्रचेताः) एकचित्यांसमारूढौ म्रियेतेदम्पतीयदि । तंत्रेण
श्रपणंकुर्यात्पृथक्पिण्डंसमाचरेत् (अथोदकदानंवशिष्ठः) शरीरमग्नौसंयोज्या
नवेक्षमाणाअपोभ्यवयन्तिसव्योत्तराभ्यांपाणिभ्यामुदकक्रियांकुर्व्वंत्ययुग्मस्
(आपस्तंबः)मातुश्चयोनिसंबंधेभ्यःपितुश्चासप्तमात्पुरुषाद्यावतांवासंबंधोज्ञा
यतेतेषांप्रेतेषूदकक्रियेति (याज्ञवल्क्यः) सप्तमाद्दशमाद्वापि ज्ञातयोभ्युपयंत्य
पः । अपनःशोशुचदघमनेनपितृदिङ्मुखाः ॥ सकृत्प्रसिंचंत्युदकं नामगोत्रेण
वाग्यताः । सप्तमाद्दशमाद्वादिवसादातदन्तमिति विज्ञानेश्वरः ॥ कातीयास्तुस
प्तमाद्दशमाद्वापुरुषादित्याहुः ॥ सप्तमाद्दशमाद्वापुरुषात्समानग्रामवासे यावत्स
म्बन्धमनुस्मरेयुरितिपारस्करोक्तेः ॥ मंत्रस्नानांगमेवेतिहेमाद्रिः ( प्रचेताः )
प्रेतस्यबांधवायथावृद्धमुदकमवतीर्य्यनोह्वर्षयेयुरुदकांते प्रसिंचेयुरपसव्ययज्ञोप
वीतवाससोदक्षिणामुखाब्राह्मणस्योदङ्मुखाप्राङ्मुखाश्च राजन्यवैश्ययोः ॥
सएव नदीकूलं ततोगत्वेत्युक्त्वा ॥ सचैलस्तुततःस्नात्वा शुचिःप्रयतमानसः ।
पाषाणानततआदाय विप्रेदद्याद्दशांजलीन् ॥ द्वादशक्षत्रियेदद्याद्वैश्येपंचदशस्मृ
ताः ॥ त्रिंशच्छूद्रायदातव्या ततस्तुप्रविशेद्गृहम् ॥ ततःस्नानंपुनःकार्यं गृहशौ

चंचकारयेत् ॥ प्रेतस्नानेविशेषः (शुद्धितत्त्वेआदिपुराणे) आदौवस्त्रंचप्रक्षाल्य तेनैवाच्छादितस्ततः । कर्तव्यंतैःसचैलन्तुस्नानंसर्वमलापहम् ॥ पूर्वपरिहितंवस्त्रंप्रक्षाल्यपुनःपरिधायस्नायादित्यर्थः ॥ अपनइतिमंत्रेणवामहस्तानामिकया जलालोडनम् ॥ अवतरणेवृद्धपुरःसरत्वोक्तेर्यथाबालंपुरस्कृत्येतिबौधायनीयम् ॥ जलादुत्थानपरमितिहारलतादयः (आश्वलायनः) सव्यावृतोव्रजन्त्यनीक्षमाणायत्रोदकमवहद्भवति तत्प्राप्यसकृदुन्मज्ज्यैकांजलिमुत्सृज्यतस्यगोत्रंनाम गृहीत्वेति ॥ प्रचेतसाऽन्वहमंजलित्रयमप्युक्तं ॥ त्रिःप्रसेकंकुर्युःप्रेतस्तृप्यत्विति (तथा) दिनेदिनेऽञ्जलीन्पूर्णान्प्रदद्यात्प्रेतकारणात् । तावद्वृद्धिश्चकर्तव्या यावत्पिण्डःसमाप्यते ॥ एकवृद्धिस्त्रिकवृद्धिर्वेत्यर्थः ॥ मदनरत्नेभरद्वाजगृह्येतु द्विकवृद्धिरप्युक्ता ॥ आशौचान्तेप्रदद्यात्तुप्रेतपुत्रस्तिलांजलीन् । प्रथमेह्निसद्द्यात्पिण्डयज्ञावृतादिवा ॥ त्रींश्चदद्याद्द्वितीयेऽह्नि तृतीयेपंचएवच । चतुर्थे सप्तसंख्यांस्तु पंचमेनवचोत्सृजेत् ॥ षष्ठेऽह्निचैकादशकाः सप्तमेतुत्रयोदश । अष्टमेपंचदशका नवमेदशसप्तच ॥ एकोनविंशतिंचाग्रेशतांजलिमतंस्मृतम् ॥ केचिद्दशांजलीन्प्राचुः केचिदाहुःशतांजलीन् । पंचपंचाशतंचान्ये स्वशाखोक्तव्यवस्थया (छंदोगपरिशिष्टे) अथानवेक्षयेत्पापः सर्वेचैवशवस्पृशः । गोत्रनामपदान्तेतुतर्पयामित्यनन्तरम् ॥ दक्षिणाग्रान्कुशान्कृत्वा सतिलन्तुपृथक्पृथक् (विष्णुपुराणे) सपिण्डीकरणंयावदृजुदर्भैःपितृक्रिया । सपिण्डीकरणादूर्ध्वं द्विगुणैर्विधिवद्भवेत् (रामायणे) इदंपुरुषशार्दूल विमलंदिव्यमक्षयम् ॥ पितृलोकेषुपानीयं मद्दत्तमुपतिष्ठताम् ॥ दानवाक्येविकल्पः (याज्ञवल्क्यः) कामोदकंसखिप्रत्ता स्वस्रीयश्वशुरर्त्विजाम् ॥ कामइच्छा ॥ प्रेततृप्तीच्छायांदेयमन्यथानेत्यर्थः (शंखपारस्करौ) आचार्येचैवम् ॥ मातामहयोश्चस्त्रीणांचाप्रत्तानां कुर्वीरंस्ताश्चतेषामिति ॥ द्विवचनान्मातामह्याअपि (शंखलिखितौ) उदकक्रियाकामंश्वशुरमातुलयोःशिष्येसहाध्यायिनिराजनिचेति (वृद्धमनुः) क्लीबाद्यानोदकंकुर्य्युस्तेनाव्रात्याविधर्मिणः । गर्भभर्तृद्रुहश्चैवसुराप्यश्चैवयोषितः (याज्ञवल्क्यः) नब्रह्मचारिणःकुर्युरुदकंपतितास्तथा (षडशीतौ) स्त्रीया

चारादपिभ्रष्टाः पतितायेचदूषिताः । नकुर्युरुदकंतेवै तेभ्योप्यन्नेनचैवहि (म
दनरत्नेहारीतः) पतितामपहृत्तानांचरन्तीनांचकामतः । प्रत्तानांचैवकन्यानां
निर्वर्त्यसलिलक्रिया (अपरार्केशंखलिखितौ) अपपात्रितस्यरिक्थपिण्डोद
कानिव्यावर्तते ॥ अपपात्रितःकृतघटस्फोटः ॥ तस्यापिसंग्रहविधौकृते आशौ
चोदकादिकुर्यादित्याशौचप्रकाशः (अथाशौचेनियमाः । याज्ञवल्क्यः) इति
संश्रुत्यगच्छेयुर्गृहंबालपुरःसराः ॥ विदश्यनिम्बपत्राणिनियताद्वारिवेश्मनः ॥
आचम्याग्न्यादिसलिलंगोमयंगौरसर्षपान् । प्रविशेयुःसमालभ्य कृत्वाश्मनि
पदंशनैः ॥ प्रवेशनादिकंकर्म्म प्रेतसंस्पर्शिनामपि । क्रीतलब्धाशनाभूमौ
स्वपेयुस्तेपृथक्क्षितौ ॥ इदंचाद्येह्नि (वसिष्ठः) अद्यप्रस्तेरगृहमनश्नंतआसी
रन्क्रीतोत्पन्नेनवावर्तेरन् (शुद्धितत्त्वेबैजवापः) शमीमालभन्तेशमीपापंशम
यत्विति ॥ अश्मानमश्मेवस्थिरोभूयासमिति ॥ अग्निमग्निर्नःशर्म्मयच्छ
त्विति ॥ ज्योतिस्त्वंतराणामजमुपस्पृशन्तःक्रीत्वालब्ध्वावान्यगेहादेकान्नमलव
णमेकरात्रम् ॥ दिवाभुंजीरंस्त्रिरात्रंचकर्म्मोपरमणम् ॥ क्रीताद्यशनमुपवासा
शक्तस्य (आश्वलायनस्तु) नैतस्यांरात्र्यामन्नंपचेरंस्त्रिरात्रमक्षारालवणाशि
नः स्युर्द्वादशरात्रंचेत्याह (अशक्तौरत्नाकरेआपस्तंबः) भार्याःपरमगुरुसंस्थायां
चाकालभोजनानिकुर्वीरन् ॥ यदास्मृतिःपरदिनेतावत्कालमित्यर्थः (बृह
स्पतिः) अधःशय्यासनादीना मलिनाभोगवर्जिताः । अक्षारालवणान्नाःस्यु
र्लब्धक्रीताशनास्तथा ॥ भोगोभ्यंगताम्बूलादिः ॥ क्षाराःपरिभाषायामुक्ताः
(यत्तुमार्कंडेयपुराणे) तैलाभ्यंगोबान्धवानामंगसंवाहनंचयत् । तेनचाप्या
यतेजंतुर्यच्चाश्नन्तिस्वबान्धवाः ॥ प्रथमेह्नितृतीयेच सप्तमेनवमेतथा । वस्त्रत्यागं
बहिःस्नानं कृत्वादद्यात्तिलोदकमिति ॥ तदन्त्यदिनपरम् ॥ आशौचान्तेतिल
कल्कैःस्नातागृहंप्रविशेयुरितिविष्णूक्तेः ॥ विष्णुपुराणेत्वस्थिसंचयोर्ध्वंभोगो
प्युक्तः ॥ शय्यासनोपभोगस्तु सपिण्डानामपीष्यते । अस्थिसंचयनादूर्ध्वंसंयो
गस्तुनयोषिताम् (भारते) तिलान्ददतपानीयं दीपंददतजाग्रतः । ज्ञातिभिःसह
भोक्तव्यमेतत्प्रेतेषुदुर्लभम् (मनुः) मांसाशनंचनाश्नीयुः शयीरंश्चपृथक्क्षितौ

( देवजानीयेकारिकायाम ) लवणाक्षीरमायाच्चा पूपमांसानिपायसम । वर्जये दाहृतान्नेषु बालवृद्धातुरैर्विना ॥ उपवासोगुरौप्रेते पत्न्याःपुत्रस्यवाभवेत् (मरीचिः ) प्रथमेह्नितृतीयेच सप्तमेदशमेतथा । ज्ञातिभिःसहभोक्तव्यमेतत्प्रेतेषुदुर्लभम ॥ भोजनंचादिवैव ॥ दिवाचैवतुभोक्तव्यममांसमनुजर्षभेतिविष्णुपुराणात् ॥ क्रीत्वालब्ध्वावादिवान्नमश्नीयुरितिपारस्करोक्तेश्च ( मदनरत्नेहारीतः ) पाणिषुमृन्मयेषुपर्णपुटकेषुवाश्नीरन् (देवजानीयेब्राह्मेशुद्धितत्त्वेआदिपुराणे) आशौच मध्येयत्नेनभोजयेत्स्वगोत्रजान् (अन्त्यदिनेतुमदनरत्नेब्राह्मे ) यस्ययस्यतुवर्णस्य यद्यत्स्यात्पश्चिमंत्वहः । सतत्रगृहशुद्धिंच वस्त्रशुद्धिंकरोत्यपि ॥ अन्त्यकर्मकालीनवस्त्रयेस्तुतंत्रैरौवोक्तम॥ ग्रामाद्बहिस्ततोगत्वाप्रेतपृष्ठेतुवाससी ॥ अंत्यानामाश्रितानांचत्यक्त्वास्नानंकरोत्यथेति (शंखः) दानंप्रतिग्रहोहोमःस्वाध्यायःपितृकर्मच । प्रेतपिंडक्रियावर्ज्यमाशौचेविनिवर्तते (कठकगृह्ये) यत्रप्राणोक्रमस्तत्रान्वहंमहाबलिंकुर्यादिति ( पारस्करः ) तदानीमेववस्त्रंतंडुलंदीपकांस्यभाजनंप्रेतायदद्यात् ( आशौचप्रकाशेभरद्वाजः ) वासोन्नंचजलंकुम्भेप्रदीपंकांस्यभाजनम । नग्नप्रच्छादनेश्राद्धेब्राह्मणायनिवेदयेत् ( भृगुः ) तिलोदकंतथापिंडान्नग्नप्रच्छादनादिकम । रात्रौनकुर्यात्संध्यायांयदिकुर्यान्निरर्थकम ( अथप्रेतपिंडःग्रहपिहेमाद्रौपारस्करेण ) ब्राह्मणेदशपिंडास्तुक्षत्रियेद्वादशस्मृताः । वैश्येपंचदशप्रोक्ताःशूद्रेत्रिंशत्प्रकीर्तिताः ( इत्युक्तंतथापि ) प्रेतेभ्यःसर्ववर्णेभ्यःपिंडान्दद्याद्दशैवत्वितितेनैवोक्तेः ॥ सर्वेषांदशैवज्ञेयामदनरत्नेप्येवम ( तथाचहेमाद्रौब्राह्मपाद्मयोः ) जात्युक्ताशौचतुल्यांस्तुवर्णानांकेचिदेवाहि । देशधर्मान्पुरस्कृत्यप्रेतपिंडान्वपंत्यपीत्युक्त्वा॥विप्रान्नेषुदशमपिंडोत्कर्षउक्तः॥ देयस्तुदशमःपिंडोराज्ञांवैद्वादशेहनि । वैश्यानांवै पंचदशेदेयस्तुदशमस्तथा ॥ शूद्रस्यदशमःपिंडोमासेपूर्णेह्निदीयते ॥ इतियुद्धमृतादेःसद्यःशौचेत्र्यहादौचतेनैवोक्तम ॥ सद्यःशौचेप्रदातव्यःसर्वेपियुगपत्तथा । त्र्यहाशौचेप्रदातव्यःप्रथमेहन्येकस्त्रवाहि । द्वितीयेहनिचत्वारस्तृतीयेपंचचैवहि । त्र्यहेप्रकारांतरंप्रागुक्तम ( शातातपः ) आशौचस्यचह्रासेतिपिंडान्दद्याद्दशैवतु ।

तत्रैकपात्रेसकृत्त्यक्त्वादर्शपिंडान्नदद्यात्। उत्तरीयशिलापात्रकर्तृद्रव्यविपर्यये । पूर्वदत्तांजलीन्नदद्यात्पूर्वपिंडांस्तथैवचेति ॥ गृह्यकारिकायांपात्रविपर्ययेदोषोक्तः ॥ शिलाविपर्ययेघटस्फोटादेर्नावृत्तिः ॥ अक्षाभ्यंजनादिपदकर्मणामुदकहार्यनिनयनवदप्रयोजकत्वात् ॥ तद्वचात्रालौकिकग्रहणम् ( केचित्तु ) नवान्यादायभाण्डानिआरब्धमुदकान्नतथैवेति प्रचेतसोक्तेःपात्रानेकत्वमाहुः । क्रियाकर्तुर्नाशेऽन्येनशेषःसमापनीयः ॥ एवंक्रियाप्रवृत्तानांयदिकश्चिद्विपद्यते । तदंशुनाक्रियाकार्यासर्वैर्वासहकारिभिरिति शुद्धितत्त्वेबृहस्पतिस्मृतेः ॥ पत्न्याः कर्तृत्वेरजोदर्शनेचतदंतेकुर्यात् ॥ शावाद्दिगुणमार्तवमित्युक्तेः ॥ आशौचांते आर्तवेकर्तुरस्वास्थ्येवान्येनक्रियासर्वानिवर्तनीयाकर्तुर्विपर्ययात्कालातिक्रमयोगाच ( वाराहे ) स्थंडिलेप्रेतभागंतुदद्यात्पूर्वाह्णएवतु । कृत्वातुपिंडसंकल्पनामगोत्रेणाहुन्दरि(मरीचिः) प्रेतायपिंडंबर्हिर्दद्याद्दर्भमंत्रविवर्जितम् । प्राग्दीच्यांचरुंकृत्वास्नातःप्रयतमानसः ॥ दर्भवर्जनमनुपनीतपरम् ॥ असंस्कृतानांभूमौपिंडंदद्यात्संस्कृतानांकुशेष्विति प्रचेतसोक्तेः ( मिताक्षरायांस्मृत्यंतरे ) भूमौमाल्यंपिंडंपानीयमुपलेवादद्युः ॥ शुनःपुच्छः ॥ फलमूलैश्चपयसा शाकेनचगुडेनच । तिलमिश्रन्तुदर्भेषुपिंडंदक्षिणतोहरेत् ॥ तूष्णींप्रसेकंपुष्पंचधूपंदीपंतथैवच । शालिनासक्तुभिर्वापिशाकैर्वाप्यथनिर्वपेत् ॥ प्रथमेहनियद्द्रव्यंतदेवस्याद्दशाहिकम् ( मदनरत्नेमात्स्ये) तैजसंमृन्मयंवाथपात्रंसंशोध्ययत्नतः । लौकिकाग्नावधिश्रित्यपचेदन्नंघृतप्लुतम् ॥ स्नात्वार्थतिलसंमिश्रंप्रदद्याद्दर्भसंस्तरे ( शुद्धितत्त्वेदेवजानीयेचब्राह्मे ) प्रथमेहनियोदद्यात्प्रेतायान्नंसमाहितः । अन्नंनवसुचान्येषुसएवप्रददात्यपि ॥ मृन्मयंभांडमादायनवंस्नातःसुसंयुतः । तंडुलप्रसृतिंतत्रत्रिःप्रक्षाल्यपचेत्स्वयम् ॥ सपवित्रैस्तिलैर्मिश्रंकृमिकेशविवर्जितम् । द्वारोपांतेततःक्षिप्त्वाशुद्धांवागौरमृत्तिकाम् ॥ भूपृष्ठेसंस्तरेदर्भान्याम्याग्रानदेशसंभवान् । ततोवनेजनंदद्यात्संस्मरन्गोत्रनामनी ॥ तिलसर्पिर्मधुक्षीरैःसंसिक्तंतन्नमेवहि ॥ दद्यात्प्रेतायपिंडंतुदक्षिणाभिमुखःस्थितः ॥ अर्घ्यैः पुष्पैस्तथाधूपैर्दीपैस्तोयैश्चशीतलैः । ऊर्णातंतुमयैःशुद्धैर्वासोभिःपिंडमर्चयेत् ॥ दिवसेदिवसे

देयः पिंडएवंक्रमेणतु। त्र्यहःशौचेप्रदातव्याःसर्वेपियुगपत्तथा ॥ त्र्यहाशौचेपिदातव्यास्त्रयःपिंडाःसमाहितैः ॥ द्वितीयेचतुरोदद्यादस्थिसंचयनंतथा ॥ त्रींस्तुदद्यात्तृतीयेह्निवस्त्रादिक्षालयेत्ततः । दशाहेपिचदातव्यःप्रथमेत्वेकएवहि ॥ एकस्तोयांजलिस्त्वेवंपात्रमेकंचदीयते ॥ द्वितीयेद्वौतृतीयेत्रीनित्याद्युक्त्वाएवंस्युःपंचपंचाशत्तोयस्यांजलयःक्रमात् ॥ तोयपात्राणितावंतिसंयुक्तानितिलादिभिरिति ॥ पात्रंकुंभः ॥ अत्राहःपदमहोरात्रपरम् ॥ तेनरात्रावपिदेयइतिगौडाः ॥ दिवसपदाद्रात्रौनेतिमैथिलाः ॥ एवंत्युक्तेसपिंडेनदशपिंडेप्रक्रांतेपुत्रागमेपिसनदद्यात् असगोत्रःसगोत्रोवेतिप्रागुक्तेः ॥ दाहकर्तैवदशाहंकुर्य्यादितिमिताक्षरायाम् (शुद्धितत्त्वेवायवीयेपि)असगोत्रःसगोत्रोवायदिस्त्रीयदिवापुमान्प्रथमेह्निनदात्प्रेतस्यपिंडंदद्यात्सएवहीति ( तत्रैव ) पूरकेणतुपिंडेनदेहोनिष्पाद्यतेयतः । कृतस्यकारणायोगात्पुनर्नावर्ततेक्रिया ( शुद्धिप्रकाशेवायवीयेपि ) निवर्तयतियोमोहात्क्रियामन्यनिर्वर्तिताम् । विधिघ्नस्तेनभवतिपितृहाचोपजायते ॥ तस्मात्प्रेतक्रियायेनकेनापिचकृतायदि । नतांनिवर्तयेत्प्राज्ञःसतांधर्ममनुस्मरन्निति ( आदिपुराणे ) पितृशब्दंस्वधांचैवनप्रयुंजीतकर्हिचित् । अनुशब्दंतथाचेहप्रयत्नेनविवर्जयेत् ॥ उपतिष्ठतामयंपिंडःप्रेतायेतिसमुच्चरेत्( क्रियानिबंधेव्यासः)प्रेतायपिंडंदत्वातुततोप्याह्निनात्यये(भविष्ये)ओदनासिद्धसक्तूनांशाकमूलफलादिषु । प्रथमेहनियद्दद्यात्तद्दद्यादुत्तरेहनि॥गृहद्वारिश्मशानेवातीर्थेदेवगृहेपिवा ॥ यत्राद्येदीयतेपिंडस्तत्रसर्वंसमापयेत्(ब्राह्मे)शिरस्त्वाद्येनपिंडेनप्रेतस्यक्रियतेसदा । द्वितीयेनतुकर्णाक्षिनासिकाश्चसमासतः ॥ गलांसभुजवक्षांसितृतीयेनयथाक्रमम् । चतुर्थेनतुपिंडेननाभिलिंगगुदानिच ॥ जानुजंघेतथापादौपंचमेनतुसर्वदा॥सर्वमर्माणिषष्ठेनसप्तमेनतुनाडयः ॥ दंतलोमान्यष्टमेनवीर्यंतुनवमेनच । दशमेनतुपूर्णत्वंतृप्तताक्षुद्विपर्ययइति (याज्ञवल्क्येनतु) पिंडयज्ञावृतादेयंप्रेतायान्नंदिनत्रयमित्युक्तम् ॥ अत्रफलतारतम्यंज्ञेयमितिविज्ञानेश्वरः ॥ तेनत्र्यहाशौचपरत्वंदेवयाज्ञिकोक्तंचिंत्यम् ॥ आशौचस्यह्रासेपिपिंडान्दद्याद्दशैवत्वितिवचनाच्च ॥ दिनत्रयावश्यकत्वार्थमितिहारलतादयः ( शातातपः )

जलमेकादशाहमाकाशेस्थाप्यंक्षीरंचमृन्मये(पारस्करः) मृन्मयेतांरात्रिंक्षीरो दकेविहायसिनिदध्युः ॥ प्रेतात्रस्नायीत्युदकंपिबत्वेदमितिक्षीरम् ॥ इदंरात्रावे वेतिगौडाः(गारुडेतु) अपक्वेमृन्मयेपात्रेदुग्धंदद्याद्दिनत्रयमित्युक्तम् ( हेमाद्रौपा द्मेतुदशाहमुक्तम्)तस्माद्विधेयमाकाशेदशरात्रंपयोजलम् । सर्वतापोपशांत्यर्थम ध्वश्रमविनाशनं(देवजानीयेकारिकायाम्) तत्रप्रेतोपकृतयेदशरात्रमखंडितम्। कुर्यात्प्रदीपंतैलेनवारिपात्रंचमार्तिकम् । भोज्यातभोजनकालेतुभक्तमुष्टिंचनि र्वपेत् ॥ नामगोत्रेणसंबुध्याधरिण्यांपितृयज्ञवत् ( शातातपः) भूलोकात्प्रेतलो कंतुगंतुश्राद्धंसमाचरेत् ॥ तत्पाथेयंहिभवतिमृतस्यमनुजस्यतु ( अथदशाहम ध्येदर्शपातेनिर्णयः । भविष्ये ) प्रवृत्ताशौचतंत्रस्तुर्यदिदर्शंप्रपद्यते । समाप्य चोदकंपिंडानस्नानमात्रंसमाचरेत् (ऋष्यशृंगः) आशौचमन्तरादर्शोयदिस्या त्सर्ववर्णानाम् । समाप्तिंप्रेततंत्रस्य कुर्यादित्याहगौतमः (पैठीनसिः) आद्येदावे वकर्तव्या प्रेतपिंडोदकक्रिया । द्विरेंदवेतुकुर्वाणाः पुनःशावंसमश्नुते (माता पित्रोस्तु । श्लोकगौतमः) अन्तर्दशाहेदर्शश्चेत्तत्रसर्वंसमापयेत् । पित्रोस्तुयाव दाशौचं दद्यात्पिंडाञ्जलाञ्जलीन् ॥ इदमपित्र्यहमध्येदर्शपाते ॥ तदूर्ध्वंदर्शे तुपित्रोरपितंत्रंसमाप्यमेव ॥ पित्रोराशौचमध्येतु यदिदर्शःसमापतेत्। तावदेवो त्तरंतंत्रंपर्यवस्येत्त्र्यहात्परमितिगालवोक्तेः ॥ अन्येषान्तुत्र्यहमध्येपिसमाप्ति रितिपराशरमाधवीयेनिर्णयामृतेचोक्तम् (कालादर्शेपि) दर्शेदशाहमध्येस्या दूर्ध्वंतंत्रंसमापयेत् । त्रिरात्रादुत्तरंपित्रोर्मृतावितिविनिश्चयः ॥ मदनपारिजा तेतुगालवीयमापदनौरसपुत्रादिविषयम् ॥ त्र्यहोर्ध्वमपिपित्रोर्नतंत्रसमाप्तिरि त्युक्तम् ॥ मदनरत्नेप्येवम् ॥ समतुदेशाचाराद्व्यवस्थेतिप्रतिभाति (अथास्थि संचयः ) तत्राश्वलायनेनचकृष्णपक्षएकादशीत्रयोदशीदर्शेषुआषाढी फाल्गुनी प्रोष्ठपदीभिन्नर्क्षेउक्तम् ॥ तदाशौचमध्येऽसम्भवेतदूर्ध्वंचप्रागब्दात्करणीयम् (आशौचमध्येतुमदनरत्नेसंवर्तः)प्रथमेह्नितृतीयेवासप्तमेनवमेतथा । अस्थिसंचय नंकार्यंदिनेतद्गोत्रजैःसह (छंदोगपरिशिष्टेतु) अपरेद्युस्तृतीयेवाअस्थिसंचयनं भवेदितिद्वितीयेप्युक्तम्।विष्णुकात्यायनौसंचयनंचतुर्थ्यामिति(माधवीयेयमः)

भौमार्कसंदवारेषु तिथियुग्मे विवर्जयेत् वर्जयेदेकपादर्क्षे द्विपादर्क्षेस्थिसंचयम् प्रदात् जन्मनक्षत्रे त्रिपादर्क्षे विशेषतः ( ब्राह्मे ) चतुर्थे ब्राह्मणानां तु पंचमे हनि भूभृताम् । नवमे वैश्यजातीनां शूद्राणां दशमात्परम् ॥ दशमेहनीति वा पाठः ( शौनकः) पालाशेष्ठवस्थिदाहे च सद्यः संचयनं भवेत् ॥ काम्यमरणे तु तस्य त्रिरात्रमाशौचम् ॥ द्वितीयेत्वस्थिसंचय इत्युक्तम् ( अंगिराः ) प्रेतो भूतं ततो हि स्थय: शुचिर्न करोति चेत् । देवतानां तु यजनं तं शापत्यथ देवताः ॥ तद्विधिः स्वस्वसूत्रे भट्टकृतौ ज्ञेयः ( हेमाद्रौ नागरखंडे ) श्रीणासंचयनस्यार्थे तानिवेश्य गुणां सांप्रतम् । यत्रस्थाने भवेन्मृत्युस्तत्र श्राद्धं प्रकल्पयेत् ॥ एको हिष्टं ततो मार्गे विश्रामे यत्र कारितः ॥ ततः संचयनस्यार्थे तृतीये श्राद्धमिष्यते (अपरार्के मदनरत्ने च ब्राह्मे) सद्यः शौचे तथैकाहे सद्यः संचयनं भवेत् । त्र्यहाशौचे तृतीये ह्नि कर्तव्यस्त्वस्थिसंचयः (तत्रैव) श्मशानदेवतायागं चतुर्थे दिवसे चरेत् । मृन्मयेषु च भांडेषु कुंभेषु रुचकेषु वा ॥ सुपक्वै र्भक्ष्यभोज्यैश्च पायसैः पानकैस्तथा । फलैर्मूलैर्वनोत्थैश्च पूज्याः क्रव्याददेवताः ॥ धूपो दीपस्तथा माल्यमर्घ्यं देयं त्वरान्वितैः । तत्र पात्राणि पूर्णानि श्मशानाग्नेः समंततः ॥ निवेदयद्भिर्वक्तव्यं तैः सर्वैरनहंकृतैः ॥ नमः क्रव्यादमुख्येभ्यो देवेभ्य इति सर्वदा ॥ ये त्र श्मशाने देवाः स्युर्भगवंतः सनातनाः । तेस्मत्सकाशाद्गृह्णंतु बलिमष्टांगमक्षयं ॥ प्रेतस्यास्य शुभान् लोकान् प्रयच्छंतु च शाश्वतान् । अस्माकमायुरारोग्यं सुखं च ददतां चिरम् ॥ एवं कृत्वा बलीन्सर्वान्क्षीरेणाभ्युक्ष्य वाग्यतः । एवं दत्वा बलिं चैव दद्यात्पिंडत्रयं बुधः ॥ एकं श्मशानवासिभ्यः प्रेतायैव तु मध्यमम् । तृतीयं तत्सखिभ्यश्च दक्षिणासंस्थमादरात् ॥ ततो यज्ञियवृक्षोत्थां शाखामादाय वाग्यतः ॥ प्रेतस्यास्थीनि गृह्णाति प्रधानां गोद्भवानि च ॥ शिरसो वक्षसोः पाण्योः पार्श्वाभ्यां चैव पादतः । पंचगव्येन संस्नाप्य क्षौमवस्त्रेणावेष्ट्य च ॥ प्रक्षिप्य मृन्मये भांडे नवे साच्छादने शुभे ॥ अरण्ये वृक्षमूले वा शुद्धे संस्थापयत्यपि । गृहीत्वास्थीनि तद्भस्म नीत्वा तोये विनिक्षिपेत् ॥ ततः संमार्जनं भूमेः कर्तव्यं गोमयांबुभिः । पूजां च पुष्पधूपाद्यैर्बलिभिः पूर्ववत्क्रमादिति ( अथ तीर्थेस्थिक्षेपविधिः (तत्रैव) तत्स्थानाच्छनकैर्नीत्वा कदाचिज्जाह्नवीजले । कश्चित्क्षिपति सत्पुत्रो दौहित्रो वा सहोदरः ॥ मातुः कुलं पितृ

कुलंवर्जयित्वानराधमः । अस्थीन्यन्यकुलस्थस्यनीत्वाचांद्रायणंचरेत् ( तत्रैव ब्रह्मांडपुराणे ) अस्थीनिमातापितृपूर्वजानांनयंतिगंगामपियेकथंचित् । सद्वां धवस्यापिदयाभिभूतास्तेषांतुतीर्थानिफलप्रदानि ॥ स्नात्वाततःपंचगव्येनसि क्त्वाहिरण्यमध्वाज्यतिलैश्चयोज्य । ततस्तुमृत्पिंडपुटेनिधायपश्यन्दिशंप्रेतग णोपगूढां ॥ नमोस्तुधर्मायवदेत्प्रविश्यजलंसमेप्रीतइतिक्षिपेच्च । उत्थायभास्वं तमवेक्ष्यसूर्यंसदक्षिणांविप्रमुखायदद्यात् ॥एवंकृतेप्रेतपुरस्थितस्यस्वर्गेगतिःस्या त्तुमहेंद्रतुल्या (यमः) गंगातोयेषुयस्यास्थिक्षिप्यतेशुभकर्मणः नतस्यपुनरावृ त्तिर्ब्रह्मलोकात्सनातनात् (तथा) अस्तंगतेगुरौशुक्रे तथामासेमलिम्लुचे । गं गायामस्थिनिक्षेपंनकुर्यादितिगौतमः ॥ दशाहांतर्नदोषः ॥ दशाहस्यांतरेयस्य गंगातोयेस्थिमज्जति । गंगायांमरणाद्यादृक्तादृक्फलमवाप्नुयादितिमदनरत्ने वृद्धमनूक्तेः (शौनकः) शौनकोऽहंप्रवक्ष्यामि अस्थिक्षेपविधिंक्रमात् । आदौ ग्रामाद्बहिर्गत्वास्नानंकुर्य्यात्सचैलकं ॥ प्रोक्षयेत्पंचगव्येनभुवंमंत्रैर्विचक्षणः । गायत्र्याद्यैःपंचगव्यमंत्रैर्निखातास्थिभूमिंप्रोक्षेदित्यर्थः ॥ उपसर्पादिभिर्मंत्रैःप्रा र्थनंखननंतथा । मृत्तिकोद्धरणंचास्थ्नांग्रहणंचयथाक्रमम् ॥ उत्ससर्पेतिचतुर्भि र्मंत्रैःक्रमेणप्रार्थनादिज्ञेयम् ॥ स्नात्वास्थिशुद्धिंकुर्वीतएतोन्विंद्रेतिसूक्ततः । स्पृ ष्ट्वास्पृष्ट्वाततःस्नानंपञ्चगव्येनशुध्यति ॥ दशस्नानानिकुर्व्वीततत्तन्मंत्रैर्विचक्ष णः । गोमूत्रंगोमयंक्षीरंदधिसर्पिःकुशोदकम् । भस्ममृन्मधुआदीनिमंत्रतस्तानि वैदश ॥ कुशैःसंमार्ज्जयेदस्थीन्यतोदेवेतिमंत्रतः । एतोन्विंद्रं शुचिर्व्वेतिनतमं हइतीतिच ॥ पावमानीर्ममाग्नेश्च रुद्रसूक्तंयथाक्रमम् ॥ एतैःकुशैर्मार्ज्ज नम् ॥ हेमश्राद्धंततःकुर्य्यात्पितॄनुद्दिश्ययत्नतः । पिण्डदानंप्रकुर्व्वीततत्रचाति लतर्प्पणम् ॥ अस्थिक्षेपांगंचेदम् ॥ अजिनंकंबलादर्भा गोकेशाःशणमेवच । भर्ज्जपत्रंताडपत्रंसप्तधावेष्टनंस्मृतम् ॥ हेमञ्चमौक्तिकंरौप्यंप्रवालंनीलकन्तथा । निक्षिपेदस्थिमध्येतुशुद्धिर्भवतिनान्यथा ॥ ततोहोमंप्रकुर्वीत तिलाज्येनविच क्षणः । उदीरतेतिसूक्तेनहुनेदष्टोत्तरंशतम् ॥ ततोगत्वाक्षिपेत्तोयेस्पर्शदोषोन विद्यते ॥ मूत्रंपुरीषाचमनंकुर्व्वन्नस्थीनिधारयेत् । अत्रदशदानंवैतरणीकरणमो

क्षपापधेनुदानमुक्तम्(दिवोदासीयेकाशीखण्डे)धनंजयोपिधर्मात्मा मातृभक्तिप रायणः । आदायास्थीन्यथीमातुर्गंगामार्गस्थितोभवत् ॥ पंचगव्येनसंस्नाप्यत थापंचामृतेनवै । यक्षकर्दमलेपैर्नाक्षिप्त्वापुष्पैःप्रपूज्यच । आवेष्ट्यनेत्रवस्त्रेणात तःपट्टांबरेणच ॥ ततःक्षुरसवस्त्रेणततोमांजिष्ठवाससा ॥ नेपालकंबलेनाथमृदा चार्थविशुद्धया॥ ताम्रसंपुटकेकृत्वामातुरंगान्यथोवहेत्(व्यासः)पट्टवस्त्रंचकौशे यंमांजिष्ठंश्वेतवस्त्रकम् । कंबलंशाणपट्टंचअजिनंचतथोत्तरम्॥एषांविकल्पः॥ अन्यप्रचात्रविशेषस्त्रिस्थलीसेतौदिवोदासीयेचज्ञेयः (संचयनोत्तरंश्राद्धमाहाश्व लायनः) श्राद्धमस्मैदद्युरितिस्मृत्यर्थसारे ॥ संचयनेकृतेमनुष्यलोकंगच्छतःपा थेयश्राद्धमामेनकार्यमिति ॥ अनुपनीतस्यनसंचयनम् ( अथनवश्राद्धंपृथ्वीचं द्रोदयेगिराः) प्रथमेह्नितृतीयेचपंचमेसप्तमेतथा । नवमैकादशेचैवतन्नवश्राद्धमु च्यते (शिवस्वामी) नवश्राद्धानिपंचाहुराश्वलायनशाखिनः । आपस्तंबाःषडि त्याहुर्विभाषान्त्वितरेषुहि ॥ पंचसकादशाहिकंविना ॥ मरणाहिषमेषुदिनेष्ठवे कैकंनवश्राद्धंकुर्यादानवमाद्यदिनवमंवच्छिद्यतेकादशेतत्कुर्यादितिमदनरत्नेबौ धायनोक्तेः ॥ (भविष्ये ) नवसप्तविशांराज्ञां नवश्राद्धान्यनुक्रमात् । आद्यंतयो र्वर्णयोस्तुषडित्याहुर्महर्षयः (हेमाद्रौवृद्धवशिष्ठः)अलब्ध्वातुनवश्राद्धं प्रेतत्वा न्नवमुच्यते । अर्वाक्तुद्वादशाहस्यलब्ध्वातरतिदुष्कृतम् ॥ अतःषडेव ॥एतान्ये वविषमश्राद्धानीत्युच्यंते (नागरखंडेतु) पंचमेसप्तमेतद्वद्दष्टमेनवमेतथा । दशमै कादशेचैवनवश्राद्धानितानिचेत्युक्तम् (कात्यायनस्तु) चतुर्थेपंचमेचैवनवमैका दशेतथा । यदत्रदीयतेजंतोस्तन्नवश्राद्धमुच्यते ॥ प्रथमेसप्तमेचैवेत्याद्यपाठेव्या सपाठः(बह्वृचानांतु) नवश्राद्धदशाहानि नवमिश्रंतुषडृतूनित्युक्तंनारायण वृत्तौ (दीपिकायाम्) अथतनुयादाद्यं चतुर्थेदिनेश्राद्धं ॥पंचमसप्तमाष्टनवदिग्रु द्रे यियुरमहिजैः ॥ प्रथमेह्नितृतीयेह्निपंचसप्तनवस्वपि । द्वौद्वौपिंडौप्रदातव्यौशे षेष्वेकंतुविन्यसेत् ॥ एकोविषमश्राद्धेवयवपिंडश्चैकइति द्वावित्यर्थः ॥ अत्र शाखाभेदाद्व्यवस्था (अपरार्केभविष्ये )नवश्राद्धं त्रिपक्षंचषण्मासंमासिकानि च । नकरोतिसुतोयस्तुतस्याधःपितरोगताः ( वाराहे ) गतोसिदिव्यलोकंत्वं

कृतांतविहितात्पथः। मनसावायुभूतेनविप्रेत्वाहंनियोजये। पूजयिष्यामिभो
गैस्त्वामेवंविप्रंनिमंत्रयेत् (आवाहनेपितत्रैव) इहलोकंपरित्यज्यगतोसिपरमां
गतिम्। मनसावायुभूतेनविप्रेत्वाहंनियोजयइति(तत्रैवबह्वृचपरिशिष्टे) अनू
दकमधूपंचगंधमाल्यैर्विवर्जितम्॥ नवश्राद्धममंत्रञ्चपिण्डोदकविवर्ज्जितम्॥
उदकमर्घ्यः॥ पिण्डोदकंशुंधंतांपितरइत्यवनेजनादि॥ एकोद्दिष्टेषुसर्व्वेषु
नस्वधानाभिरम्यताम्। नाग्नौकरणमंत्रश्च एकंवाप्रतिलोदकम्॥ अनपत्ये
षुसर्व्वेषु नस्वधानाभिरम्यताम्। स्वस्त्यस्तुविसृजेदेवं सकृत्प्रणववर्ज्जितम्॥
एकोद्दिष्टस्यपिण्डेतु अनुशब्दोनविद्यते। पितृशब्दंनकुर्व्वीत पितृहाचोपजा
यते॥ सपिण्डनात्प्रागितिहेमाद्रिः॥ तेनस्वधांप्रयुंजीत प्रेतश्राद्धेदशाहिके॥
इति ऋष्यशृंगोक्तौदशाहिकोक्तेरेकादशाहेस्वधाप्रयोगएवेति हारलतापरा
स्ता (रत्नावल्याम्) आशिषोद्विगुणादर्भाजयाशीःस्वस्तिवाचनम्। पितृ
शब्दःस्वसंबद्धःशर्म्मशब्दस्तथैवच॥ पात्रालंभोवगाहश्चउल्मुकोल्लेखनादि
कम्। तृप्तिप्रश्नश्चविकिरःशेषप्रश्नस्तथैवच॥ प्रदक्षिणाविसर्गश्चसीमांत
गमनंतथा। अष्टादशपदार्थाश्चप्रेतश्राद्धेविवर्ज्जयेत्॥ अत्रस्वधापितृतमःशब्दा
नांतिलोसीतिमंत्रेप्रेतशब्दोहेनतूष्णींवातिलावनम्॥ तूष्णीमर्घ्यदानम्॥ अमु
ष्मैस्वाहेतिप्रेतनाम्नापाणिहोमः॥ नाम्नाएकःपिण्डः॥ निनयनमंत्रेऊहः॥
अनुमंत्रणादित्वमंत्रकम्॥ अभिरम्यतामितिविसर्ज्जनम्॥ एवंनवश्राद्धवर्ज्जै
कोद्दिष्टेषु॥ नवश्राद्धेत्वमंत्रकंसर्वमितिनारायणवृत्तिः (क्रियानिबंधे) उत्तानं
स्थापयेत्पात्रमेकोद्दिष्टेसदाबुधः। न्युब्जंतुपार्वणेकुर्यात्तस्योपरिकुशान्न्यसेत्॥
नवश्राद्धंगृहेकुर्याद्वार्ययित्राग्नयोपिवा। सपिंडीकरणांतानिप्रेतश्राद्धानियानि
वै॥ तानिस्युर्लौकिकेवह्नावित्याहत्वाश्वलायनः॥ इदंसंभवेन्नेनकार्यम्॥ नव
श्राद्धेषुयच्छिष्टंगृहपर्युषितञ्चयत्। दंपत्योर्भुक्तशेषञ्चनतद्भुंजीतकर्हिचिदित्यं
गिरोवचनलिंगात्॥ द्वाभ्यांतदातुकृच्छ्राभ्यांशुद्धिःस्यात्तुविवेकिनामितिब्राह्म
उक्तम् (विघ्नेतुनिर्णयामृतेकश्यपः) नवश्राद्धंमासिकंचयद्यदंतरितंभवेत्। तत्तदु
त्तरसातंत्र्यादनुष्ठेयंप्रचक्षते (हेमाद्रौगालवः) शावेतुसूतकंचेस्यात्तन्निशायांचमृ

तौतथा । नवश्राद्धानिदेयानियथाकालंयथाक्रमम् ॥ निशायामाशौचांतेद्व्यह वृद्धौ (अन्वारोहणेतु) नवश्राद्धानिसर्वाणिसपिंडीकरणंपृथक् । एकएववृषो त्सर्गोगौरेकातत्रदीयते (आशौचांत्यदिनेकार्यमुक्तंब्राह्मे ) यस्ययस्यतुवर्णस्य यद्यत्स्यात्पश्चिमंत्वहः । सतत्रवस्त्रशुद्धिंचगृहशुद्धिंकरोत्यपि ॥ समाप्यदशमं पिंडंप्रेतस्पृष्टेतुवाससी । अंत्यानामाश्रितानांचत्यक्त्वास्नानंकरोतिच ॥ श्मश्रु लोमनखानांचयत्त्याज्यंतज्जहात्यपि । गौरसर्षपकल्केनतिलकल्केनसंयुतम् ॥ शिरःस्नानंततःकृत्वातोयेनाचम्यवाग्यतः । वृषभंगांसुवर्णंचस्पृष्ट्वाशुद्धोभवेन्न रः (क्रियानिबंधेगृह्यकारिकायाम्) अत्रपिंडत्रयंदद्युस्तत्सखिभ्यस्तथादिमम् ॥ प्रेतायमध्यमंतद्वत्तृतीयंचयमायवै (तथा) कर्त्रात्रप्रार्थिताःसंतोज्ञातिसंबंधिबांध वाः । दद्युरभ्यंगतःपूर्वंशीस्त्रोन्दमौंदकाञ्जलीन् ॥ पूर्ववन्नामगोत्राभ्यांनियमो नेहकश्चन (मदनरत्ने विष्णुहारीतौ) आशौचांतेकृतश्मश्रुकर्माणस्तिलकल्कैः सर्षपकल्कैर्वास्नाताःशुक्लवाससोगृहंप्रविशेयुस्तत्रशांतिकंकृत्वाब्राह्मणपूजनंकु र्युरिति (देवलः) दशमेहनिसंप्राप्तेस्नानंग्रामाद्बहिर्भवेत् । तत्रत्याज्यानिवासां सिकेशश्मश्रुनखानिच (अपरार्केबृहस्पतिः) नवमेवाससांत्यागोनखरोम्णांत थांतिमे (तत्रैवव्यासः) आशौचांत्यदिनेक्षौरंजनन्यांचशरीमृते ॥ सतत्प्रेताल्प वयसामित्याहापस्तंबः ॥ अनुभाविनांचपरिवापनमिति ॥ अनुभाविनःकनि ष्ठाइतिविज्ञानेश्वररत्नाकरादयः ॥ आशौचमनुभवतांपुंसांसर्वाशौचेतुमुंडनम् ॥ आज्ञयानरपतेर्द्विजन्मनांदारकर्ममृतसूतकेषुच । बंधमोक्षमखदीक्षणेष्वपि क्षौरमिष्टमखिलेषुचोडुषु ॥ इतिरत्नमालोक्तेर्जननाशौचेपीतिशुद्धितत्त्वादयः ॥ अत्रदेशाचारतोव्यवस्था ॥ परंशिखावर्ज्यम् ॥ केशश्मश्रु नखलोमानिवापयी तशिखावर्ज्यमितियोगिभल्लोक्तेः (यत्त्वापस्तंबः) नसमावृत्तावपेयुरन्यत्रविहा रादित्येके ॥ विहारोदर्शादियागः ॥ तेनविनासमावृत्तागृहस्थानवपेयुरित्यर्थः (यच्च) वृथाछिनत्तियःकेशान्तमाहुर्ब्रह्मघातिनमितितत् ॥ केशश्मश्रुधारयता मग्र्याभवतिसंततिरितिदानधर्मोक्तंकाम्यपरम् ॥ अनुभाविनःपुत्राद्यइत्येके ॥ पुत्रः पत्नीचवपनंकुर्यादंतेयथाविधि । पिंडदानोचितोन्योपिकुर्यादित्यंसमा

हितइत्यपरार्केव्यासोक्तेः (यत्तुमिताक्षरायाम्) द्वितीयेहनिकर्त्तव्यंक्षुरकर्मप्र यत्नतः । तृतीयेपंचमेवापिदशमेवाप्रदानतइति ॥ आप्रदानतइतिचतुर्थादीनि ॥ तत्प्रथमदिनेसम्भवेज्ञेयम् ॥ अलुप्तकेशोयःपूर्व्वं सोनकेशान्प्रवापयेत । द्वितीये द्वितीयेह्निपञ्चमेसप्तमेपिवा ॥ यावच्छ्राद्धंप्रदीयेत तावदित्यपरंमतमितिमा धवीयेमदनरत्नेचबौधायनोक्तेः ॥ मदनपारिजातेतुदशमेप्रथमेचसमुच्चयउक्तः ( यत्तु ) दशमंपिण्डमुत्सृज्य रात्रिशेषेशुचिर्भवेदिति ॥ तदेकादशाहश्राद्धा गविप्रनिमंत्रणार्थंज्ञेयम् (अथैकादशाहःमनुः ) विप्रःशुध्यत्यपःस्पृष्ट्वाक्षत्रियो वाहनायुधैः । वैश्यःप्रतोदंरश्मीन्वायष्टिंशूद्रःकृतक्रियः ( शुद्धितत्त्वेदेवलः ) आद्याहःशुनिवृत्तेषु सुस्नाताःकृतमंगलाः । आशौचान्तद्विजमुच्यन्तेब्राह्मणा न्स्वस्तिवाच्यच ( याज्ञवल्क्यः) आद्यमेकादशेहनिक्षत्रियाद्यैराशौचेप्येकाद शेह्निश्राद्धंकार्य्यम् ॥ आद्यंश्राद्धमशुद्धोपि कुर्य्यादेकादशेहनि ॥ कर्तुस्तात्का लिकीशुद्धिरशुद्धिःपुनरेवसइति हेमाद्रौशंखोक्तेः ( पैठीनसिः ) एकादशेह्नि यच्छ्राद्धंतत्सामान्यमुदाहृतम् । चतुर्णामपिवर्णानांसूतकंतुपृथक्पृथक् ( यत्तु मरीचिः ) आशौचांतेततःसम्यक् पिण्डदानंसमाप्यते । ततःश्राद्धंप्रदातव्यंस र्व्ववर्णेष्वयंविधिरिति ॥ तत्सर्व्ववर्णानांदशाहाशौचपरम् ( यत्तुविष्णुः ) अ थाशौचापगमइति ( यच्चगौडग्रंथेहारीतः) श्वोभूतेएकोद्दिष्टंकुर्य्यात (यच्चवै जवापः) ऊर्ध्वंदशम्याअपरेद्युरितितद्द्विप्रविषयम् ॥ एतेनदशमपिंडापकर्षपक्षे अवयवपिंडासमाप्तौकथमेकादशाहेश्राद्धमितिमूर्खोक्तिःपरास्ता ॥ वचनादा शौचमध्येइवतत्रअप्यविरोधात ( भविष्ये) एकादशभ्यो विप्रेभ्योदद्यादेकादशे हनि । भोजनंतत्रवैकस्मैब्राह्मणायमहात्मने ( यत्तुमात्स्ये ) एकादशेहनितथा विप्रानेकादशैवतु । क्षत्रादिःसूतकांतेतुभोजयेदयुजोद्विजानिति ॥ तदुद्गणश्रा द्धपरमितिमदनपारिजातः ॥ गौडास्त्वस्माद्वचनात्क्षत्रियादीनामाशौचान्तए वेत्याहुः (रामायणेपि ) समतीतेदशाहेतु कृतशौचोयथाविधि । चक्रेद्वादशा कंश्राद्धंत्रयोदशकमेवच । द्वादशकंद्वादशाहेन निवर्त्यत्रयोदशाहश्राद्धंत्रयोद शकंत्वतुर्दशाहविधेयंसपिण्डनपाथेयादि ॥ क्षत्रियाणांद्वादशाहाशौचेत्रयोद

शेमहैकोद्दिष्टंचतुर्दशेसपिण्डनम् ॥ द्विविधवाक्यादेकादशाहाशौचांतयोर्विकल्पइत्येके ॥ सद्यःशौचादौयुद्धहतादेरेकादशाहः ॥ अन्येषांत्वाशौचांतइति वयम् ( कौर्म्मे ) एकादशेह्निकुर्व्वीतप्रेतमुद्दिश्यभावतः । द्वादशेवाह्निकर्तव्यमनिंद्येप्यथवाहनि ॥ निंद्यंप्रेतक्रियाकालयुक्तम् ॥ एकादशेतुनतिषेधइत्युक्तं प्राक् ( बृहस्पतिः ) वस्त्रालंकारशय्यादिपितुर्यद्वाहनादिकम् ॥ गंधमाल्यैःसमभ्यर्च्यश्राद्धभोक्त्रे तदर्पयेत् ॥ श्रोत्रियाभोजनीयास्तुनवसप्तत्रयोदश । ज्ञातयोबांधवानिःस्वास्तथाचातिथयोपरे ( देवयाज्ञिकनिबन्धे ) एकादशसुविप्रेषुप्रेतमावाह्यभोजयेत् ॥ तत्राद्यायचशय्यादिदद्यादाद्यमितिस्मृतम्(विष्णुः)एकवन्मंत्रानूहेनैकोद्दिष्टेबहुवचनांतानेकवचनांतान्वदेदित्यर्थः॥ एतद्दृष्टार्थत्वे(अस्यविघ्नेगौणकालमाहहेमाद्रौबौधायनः) एकोद्दिष्टंश्वएवस्याद्द्वादशेहनिवापुनः ॥ अतऊर्ध्वंमयुग्मेषुकुर्वीताहःस्वशक्तितः ॥ अर्धमासेथवामासिऋतौसंवत्सरेपिवेति ( तत्रैवलघुहारीतः ) एकोद्दिष्टंतुकुर्वीतपाकेनैवसदास्वयम् । अभावेपाकपात्राणांतदहःसमुपोषणम्(गोभिलः) ब्राह्मणंभोजयेदाद्येहोतव्यमनलेथवा । पुनश्चभोजयेदेकंद्विरावृत्तिर्भवेदिति ॥ एतदाद्यमासिकाद्याब्दिकयोःसिद्ध्यर्थमितिभट्टाः । तेनमहैकोद्दिष्टंषोडशश्राद्धांगत्वमेव ॥ अतएवाद्यंसर्वैकोद्दिष्टप्रकृतिभूतमेकादशाहइतिविज्ञानेश्वरः ॥ अन्येत्वाद्यमासिकाब्दिकयोराद्यमेकादशेहनीतिनियमादभेदमाहुः ॥ द्वयोस्तंत्रत्वबाधार्थंगालवीयमित्यन्ये ( युद्धहतादौतुहेमाद्रौपृथ्वी चंद्रोदयेपैठीनसिः) सद्यःशौचेपिदातव्यंप्रेतस्यैकादशेहनि । सएवदिवसस्तस्यश्राद्धशय्यासनादिषु ॥ एवमेकादशाहादौ ॥ अतोत्रद्वितीयेह्न्येकादशाहंवदन्गौडःशूलपाणिःस्मार्तगौडश्चपरास्तः ॥ एतेनाद्यमेकादशेहनीत्याशौचानंतरदिनपरमितिविष्णूक्तेः ॥ प्रागुक्तशंखादिवचनानांचानाकरत्वादितिवदंतःकल्पतरुवाचस्पतिप्रमुखाः सर्वमहानिबंधविरोधादुपेक्ष्याः (उशनाः)त्र्यहाशौचेपिकर्तव्यमाद्यमेकादशेहनि । अतीतविषयेसद्यस्त्र्यहोर्ध्वंवातदिष्यते (याज्ञवल्क्यः) एकोद्दिष्टंदैवहीनमेकार्घ्यैकपवित्रकम् । आवाहनाग्नौकरणरहितंत्वपसव्यवत् ॥ उपतिष्ठतामित्यक्षय्यस्थाने विप्रविसर्जनेअभि

रक्ष्यतामितिवदेयुस्तेभिरताःस्महेइति। अग्नौकरणनिषेधोन्यपरः॥ बह्वृचा
नांसर्वैकोद्दिष्टेषुतद्भवत्येवेत्युक्तंप्राक्॥ स्वदितमितितृप्तिप्रश्नइतिकात्यायनः॥
प्रथमेपात्रेसंस्रवान्नित्यस्य तृतीयेनापिधानस्यच बाधान्नपात्रन्युब्जतेतिशूलपा
णिः(प्रचेताः)नात्रपात्रालंभोनाशिषःप्रार्थयेत्(अत्रविशेषोहेमाद्रौवाराहे) श्म
श्रुकर्मतुकर्तव्यंनखच्छेदस्तथैवच। स्नपनाभ्यंजनंदद्याद्विप्रायविधिपूर्वकम्॥
(तथा) उपवेश्यासनेभद्रे छत्रंतत्रप्रकल्पयेत्। पश्चादुपानहौदद्यात्सर्वाण्याभर
णानिच (विष्णुः) दक्षिणांतंश्राद्धमुक्त्वादत्ताक्षय्योदकेषुचतुरंगुलपृथ्वीस्ता
वदंतरालस्तावदधःखाताविितस्त्यायतास्तिस्रःकर्षूःकुर्यात्॥ कर्षूणांसमीपेऽग्नि
माधायपरिस्तीर्यैकैकस्मिन्नाहुतित्रयंजुहुयात्॥ सोमायपितृमतेस्वधानमोऽग्न
येकव्यवाहनाययमायां गिरस्वतेइति।स्थानत्रयेप्राग्वत्पिंडनिर्वपणंदधिमधुघृ
तमांसैःकर्षूत्रयंपूरयित्वैतत्तइतिजपेत्॥ शेषंनवश्राद्धवत्॥ अत्रसाग्नेरप्यंतेवै
श्वदेवइत्युक्तंप्राक्॥ इदंदशाहकर्तृपुत्रेणवाकार्यमित्युक्तंक्रियानिबंधे (गृह्य
कारिकायां) तिलोसिप्रेतदेवत्यःप्रेतंलोकान्हिनोंतकम्। मंत्रमुक्त्वातिलाने
वंप्रक्षिपेदर्घ्यपात्रतः॥ दक्षिणामुदकुंभंचसान्नंदत्वातथैवगाम्। तस्मैदद्याद्भुक्त
शेषंतद्भाण्डान्यपिभाजनम्॥ विप्राभावेग्नावेकोद्दिष्टम्॥ अग्नौपायसंश्रपयि
त्वाज्यभागांतेतदग्रे श्राद्धप्रयोगंकृत्वाग्नौप्रेतमावाह्यगंधाद्यैः संपूज्यपृथिवीते
पात्रमित्यादिनान्नं संकल्प्योदीरतामवरइत्यष्टाभिश्चतुरावृत्ताभिर्द्वात्रिंशदाहु
तीर्हुत्वापिंडदानादिश्राद्धंसमापयेदिति (याज्ञवल्क्यः) एतत्सपिंडीकरणमे
कोद्दिष्टंस्त्रियाअपि (अथवृषोत्सर्गः) सचनित्यःकाम्यः॥ नकरोतिवृषोत्स
र्गंसुतीर्थेवाजलांजलिम्॥ नददातिसुतोयस्तुपितुरुच्चारएवसः॥ उच्चारःपुरीषं॥
एष्टव्याबहवःपुत्रायद्येकोपिगयांव्रजेत्। यजेतवाश्वमेधेननीलंवावृषमुत्सृजेदि
तिमत्स्यकौर्मोक्तेः॥ एकादशेह्निप्रेतस्ययस्यनोत्सृज्यतेवृषः। प्रेतत्वंसुस्थिरं
तस्यदत्तैःश्राद्धशतैरपीतिषट्त्रिंशन्मतेनिंदाश्रुतेः॥ एवंकृत्वाह्यमाप्नोतिफलं
वाजिमखोदितम्। यमुद्दिश्योत्सृजेन्नीलंसलभेत्परांगतिम्॥ वृषोत्सृष्टःपुना
त्यैवदशातीतान्दशापरानितिदेवीपुराणे भविष्यादौफलश्रुतेश्च(अयंद्वादशाहे

उक्तोभविष्ये) चैत्र्यांवापितृतीयायांवैशाख्यांद्वादशेह्निवेति॥ विष्णुधर्मेतुमृताहे प्युक्तः ॥ विषुवद्दितयेचैवमृताहेबांधवस्यचेति ॥ अयंगृहेनकार्यः॥ नगृहेमोचये न्नीलंकामयन्पुष्कलंफलमितिकालिकापुराणात् (कामधेनौ)वत्सराभ्यंतरेपि वोर्ष्य स्योत्सर्गकर्मणि । वृद्धिश्राद्धंनकुर्वीततदन्यत्रसमारभेत् (तल्लक्षणंतुब्रा ह्मे ) लोहितोयस्तुवर्णेनमुखेपुच्छेचपांडुरः । श्वेतःखुरविषाणाभ्यांसनीलोवृ षउच्यते ॥ श्वेतवर्णस्यमुखादीनिश्यामानिश्यामस्यवाश्वेतानियस्यसोपिनी लउक्तोमात्स्यादौ ( देवीपुराणे ) चतस्रोवत्सिकाभद्राद्वेमासंभवतोपिवा ॥ य त्तुपठंति ॥ वृषोत्सर्जनवेलायांवृषाभावःकथंचन । मृद्भिःपिष्टैश्चदर्भैर्वावृषंकृ त्वाविमोचयेत् ॥ नशाक्यतेवृषोत्सर्गोहोमंवातत्रकारयेदितितन्निर्मूलम् ॥ तद्वि धिर्हेमाद्रौभट्टकृतौचज्ञेयः ॥ अत्रदेवयाज्ञिकेनवृषोत्सर्गात्पूर्वंपुरुषसूक्तेनविष्णु रूपिप्रेतोद्देशेनविष्णुतर्पणमुक्तम् ॥ तत्रमूलंचिंत्यम् ( पारस्करः ) सव्येनपाणि नापुच्छंसमालंब्यवृषस्यतु । दक्षिणेनापआदायसतिलाःसकुशास्ततः ॥ प्रेतगोत्रं समुच्चार्यअमुकस्मैइतिब्रुवन् । वृषएवमयादत्तस्तंतारयतुसर्वदा ॥ सहेमसतिलंभू मावित्युच्चार्यविनिक्षिपेत् ( तथा ) विधारयेन्नतंकश्चिच्चनचकश्चनवाहयेत् । नदोहयेच्चताधेनूर्नचकश्चनबंधयेत् ( स्त्रीषुविशेषःसंग्रहे ) पतिपुत्रवतीनारी भ र्तुरग्रेमृतायदि । वृषोत्सर्गंनकुर्वीतगांदद्याच्चपयस्विनीम् ॥ पतिपुत्रयोःसाहित्यं विवक्षितम् ॥ अन्वारोहणेपिगोदानमेवेत्युक्तंप्राक् ॥ आशौचांतरेपिवृषोत्स र्गाद्यमासिकशय्यादिदद्यादेवेत्युक्तम् ( क्रियानिबंधेस्मृत्यंतरे ) सूतकेमृतकेचै व द्वितीयंमृतकंयदि । पिंडदानंप्रकुर्वीतवृषोत्सर्गंतथैवच॥ नहन्यात्सूतकेकर्मद्वा दशैकादशाहिकम् शुद्धोवाप्यशुद्धोवाकुर्यादेवाविचारयन्निति ( अत्रपददान मुक्तंदेवजानीयेगारुडे । एकादशाहंप्रक्रम्य) तदाह्निदीयतेसर्वेद्वादशाहेविशेषतः पदानिसर्ववस्तूनिवरिष्ठानित्रयोदश॥ योददातिमृतस्येहजीवतोप्यात्महेतवे । सु खीभूत्वामहामार्गे वैनतेयसगच्छति (तथा) आसनोपानहौछत्रंमुद्रिकाचकमंड लुः । भाजनंभाजनाधारोवस्त्राण्यष्टविधंपदम् (तथा) भाजनासनदानेनमुद्रिका भोजनेनच । आज्ययज्ञोपवीतेनपदंसंपूर्णतांव्रजेत् ॥ महिषीरथगोदानात्सुखीभ

वर्तिनिषिचितम् । सर्वोपस्करयुक्तानिपदान्यत्रत्रयोदश ॥ योददातिमृतस्येहजीव न्नप्यात्महेतवे । सगच्छतिपरंस्थानंमहाकष्टविवर्जितः ॥ त्रयोदशपदानीत्थंप्रेता यैकादशेहनि । दातव्यानियथाशक्तितेनाशौप्रीणितोभवेत् ॥ अन्नंचैवोदकंचैवो पानहौचकमंडलुः । छत्रंवस्त्रंतथायष्टिंलोहदंडंतथासनम् ॥ अग्नीष्टिकांचदीपंच तिलांस्तांबूलमेवच । चंदनंपुटपदानंचोपदानानिचतुर्दश ॥ योप्यवंरथंगजंवापिब्रा ह्मणोप्रतिपादयेत् । स्वमहिम्नोनुसारेणतत्तत्सुखमवाप्नुयादिति ॥ अत्रमूलंचिं त्यम् (अथशय्यादानम् ॥ हेमाद्रौभविष्ये) तस्माच्छय्यांसमासाद्यसारदारुमयीं दृढाम् । दंतपत्रचितांरम्यांहेमपट्टैरलंकृताम् ॥ हंसतूलीप्रतिच्छन्नांशुभदंडोपधा निकाम् ॥ प्रच्छादनपटीयुक्तां गन्धधूपादिवासिताम् । तस्यांसंस्थापयेद्धेमंहरिं लक्ष्म्यासमन्वितम् ॥ अत्रहरिस्थानेप्रेतम् ॥ उच्छीर्षकेघृतभृतंकलशंपरिकल्प येत् ॥ ताम्बूलंकुंकुमक्षोद कर्पूरागरुचन्दनम् ॥ दीपिकोपानहौछत्रंचामरासन भाजनम् । पार्श्वेषुस्थापयेद्भक्त्या सप्तधान्यानिचैवहि ॥ शयनस्थस्यभवति य दन्यदुपकारकम् । भृङ्गारकरकाद्यंतु पंचवर्णवितानकम् (मंत्रस्तु) यथानकृष्ण शयनं शून्यंसागरजातया ॥ शय्याममाप्यशून्यास्तुतथाजन्मनिजन्मनि ॥ य स्माद शून्यंशयनंकेशवस्यशिवस्यच । अर्धतदेव ॥ दत्त्वैवंतस्यसकलं प्रणिपत्य विसर्जयेत् । एकादशाहेपितथा विधिरेषःप्रकीर्तितः ॥ विशेषंचात्रराजेन्द्र क थ्यमानंनिशामय । तेनोपभुक्तंयत्किंचिद्वस्त्रवाहनभाजनम् ॥ यद्यदिष्टंचतस्या सीत्तत्सर्वंपरिकल्पयेत् । तमेवपुरुषंहैमं तस्यांसंस्थापयेत्तदा ॥ पूजयित्वाप्रदा तव्या मृतशय्यायथोदिता (पाद्मे) मृतकांतेद्वितीयेह्निशय्यांदद्यात्सलक्षणाम् ॥ कांचनंपुरुषंतद्वत्फलवस्त्रसमन्वितम् । संपूज्यद्विजदांपत्यंनानाभरणविभूषितम् उपवेश्यतुशय्यायां मधुपर्कंततोवदेत् ॥ रजतस्यतुपात्रेण दधिदुग्धसमन्वितम् । अस्थिललाटिकंगृह्यसूक्ष्मंकृत्वासपायसम् ॥ भोजयेद्द्विजदांपत्यं विधिरेषःस नातनः ॥ एषएवविधिर्दृष्टः पार्वतीयैर्द्विजोत्तमैः ( एतत्प्रतिगृहेतथैवोक्तम् ) गृहीतायांतुतस्यांवै पुनःसंस्कारमर्हति ॥ (शय्यादानफलंभविष्ये) स्वर्गेपुरन्द रपुरे सूर्यपुत्रालयेतथा । सुखंवसत्यसौजन्तुशय्यादानप्रभावतः ॥ आभूतसंप्लवं

यावत्तिष्ठत्याऽतंकवर्ज्जित इति ( अथोदकुम्भः । हेमाद्रौस्मृतिसमुच्चये ) एकाद
शाहात्प्रभृतिघटस्तोयान्नसंयुतः । दिनेदिनेप्रदातव्यो यावत्संवत्सरंसुतैः ( लौ
गाक्षिः ) यस्यसंवत्सरादर्वाक् सपिण्डीकरणम्भवेत् । मासिकंचोदकुम्भञ्च दे
यंतस्यापिवत्सरम् (उत्तरार्द्धे) तस्याप्यन्नंसोदकुम्भन्दद्यात्संवत्सरंद्विजे इति या
ज्ञवल्क्यपाठः ॥ सपिण्डनापकर्षेऽस्यापकर्षप्राप्तेर्बाधकमिदमिति शूलपाणिः
तन्न ॥ प्रकृतिविकाराभावेनतदन्तन्यायाविषयत्वात् ( मात्स्ये ) यावदब्दञ्चयो
दद्यादुदकुम्भंविमत्सरः । प्रेतायान्नसमायुक्तं सोऽश्वमेधफलंलभेत् ॥ केचित्त्वयो
दशाहमारभ्याहुस्तन्निर्मूलम् ( देवयाज्ञिकः ) सपिण्डनापकर्षेसंवत्सरंयावदुद
कुम्भंअर्वागेवदद्यान्नो ध्वंप्रेतलोकगतस्यान्नंसोदकुम्भं प्रयच्छतेतिगोविन्दराज
धृतविष्णूक्तेः ॥ अन्नंचैवस्वशक्त्यातुसंख्यांकृत्वाब्दिकावधि । दातव्यंब्राह्मणे
भ्यश्च घटादीनिदकयन्तुवा ॥ अपिश्राद्धशतैर्दत्तैरुदकुम्भंविनानराः । दरिद्रा
दुःखिनस्तात भ्रमन्तिचभवार्णवे ॥ तेनापकृष्यदातव्यं प्रेतस्याप्युदकुम्भकमिति
गोभिलभाष्येस्कांदाच्चसपिण्डनात्प्रागेवतस्यविधानादूर्ध्वंनिषेधादित्याह॥तन्न॥
उदकुम्भेपार्वणविधिनानुपपत्तेरेवंव्याख्यायांमानाभावान्मिताक्षरादि विरोधा
च्च ॥ वचनञ्चयदिसमूलंतदाऽऽद्यावपकर्षेविधत्ते ॥ प्रेतश्राद्धानिसर्वाणि सपिंडी
करणान्तथेतिहेमाद्रौशाट्यायनोक्तेः ॥ तस्याप्यन्नंसोदकुम्भमिति याज्ञवल्क्य
विरोधाच्च (मदनरत्ने गौतमः) अर्द्धंवंपार्वणंश्राद्धं सोदकुम्भमधर्मकम् । कुर्यात्प्र
त्याब्दिकाच्छ्राद्धात्संकल्पविधिनान्वहम् ॥ अधर्मकंब्रह्मचर्यादिनियमहीनम्॥
एतन्मासिकवदेकोद्दिष्टंपार्वणंकार्यम्॥ अपरार्कस्तुसपिण्डीकरणोत्तरेपृथक्त्वे
नोपपद्यते । पृथक्त्वेतुकृतेपश्चात्पुनःकार्यासपिण्डनेति(लघुहारीतोक्तावपि)
तस्याप्यन्नंसोदकुम्भं देयंसंवत्सरंद्विजेइति ॥ याज्ञवल्कीयेतस्येत्येकत्वोक्तेःस
पिण्डनोत्तरमप्येकोद्दिष्टमेवेत्याह ॥ अत्रपिण्डदानंकृताकृतम् ॥ अहरहरन्नम
स्मैब्राह्मणायोदकुम्भञ्चदद्यात्पिण्डमप्येकेनिपृणन्तीतिहेमाद्रौपारस्करोक्तेः ॥
श्राद्धाशक्तौपिण्डमात्रमितिगौडाः ॥ तन्न ॥ अपिशब्दबाधापत्तेः ( हारीतः )
मृतेपितरिवैपुत्रः पिण्डमब्दंसमाचरेत् । अन्नंकुम्भंचविप्राय प्रेतनिर्देशधर्मतः

प्रेतशब्दोच्चारणेनेति हलायुधः ॥ यद्वा प्रेतस्य निर्देशो यत्र तदेकोद्दिष्टं तद्धर्म्मकमि
त्यर्थः ॥ अत्राशौचांतदिनाद्यब्दांतं यावद्वत्सरापूर्तेः शौचं नाधिकारो विशेषणात् ॥
तेन मृतदिनमारभ्यैतत्कार्य्यमिति केचित् ॥ तन्न ॥ हेमाद्रिधृतवचोविरोधात् ॥
मध्ये आशौचादिना बाधे तु लोपसवदाशौचवत् ॥ तथा प्रथमाब्दे दीपदानमुक्तम् (देव
जातीये गारुडे) प्रत्यहं दीपको देयो मार्गे तु विषमे नरैः । यावत्संवत्सरं वापि प्रेत
स्य तु सुखलिप्सया ॥ प्राङ्मुखोदङ्मुखं दीपं देवागारे द्विजालये । कुर्याद्याम्यमुखं
पित्र्ये अद्भिः संकल्प्य सुस्थितम् ( अथ मासिकानि ) तानि चकृत्वैव सपिण्डनं
कार्यम् ॥ तथा गोभिललौगाक्षि ॥ श्राद्धानि षोडशादत्वा नैव कुर्य्यात्सपिंडनम् ।
श्राद्धानि षोडशाप्याथ विदधीत सपिण्डनम् ( तानि त्वाह जातूकर्ण्यः ) द्वादश
प्रतिमास्यानि आद्यषाण्मासिकं तथा । त्रैपक्षिकाब्दिके चेति श्राद्धान्येतानि
षोडश ॥ आद्यषाण्मासिकाब्दिकशब्दा ऊनमासिकोनषण्मासोनाब्दिकपराः ॥
हेमाद्रौ तु सपिण्डीकरणं चैव इत्येतच्छ्राद्धषोडशमित्युत्तरार्द्धपाठः ॥ तदाद्यमू
नमासिकं द्वादशाहे ॥ षाण्मासिकं ऊनषण्मासे नाब्दिके इत्यर्थः ॥ कात्यायनस्त्व
न्यथाह ॥ द्वादशप्रतिमास्यानि आद्यषाण्मासिके तथा । सपिण्डीकरणञ्चैव
इत्येतच्छ्राद्धषोडशम् ॥ एकाहेन तु षाण्मासा यदा स्युरपि वा त्रिभिः । न्यूनाः सं
वत्सराश्चैव स्यातां षाण्मासिके तदा ॥ द्विवचनादूनषण्मासोनाब्दिके इत्यर्थमाह पृ
थ्वीचन्द्रः ॥ व्यासस्त्वन्यथाह ॥ द्वादशाहे त्रिपक्षे च षण्मासे मासिकाब्दिके ॥
श्राद्धानि षोडशैतानि संस्मृतानि मनीषिभिः ॥ द्वादशाहपदमूनमासिकपरम् ॥
तस्य द्वादशाहे प्युक्ते रिति कालादर्शः ॥ मदनरत्ने ब्राह्मे त्वन्यथोक्तम् ॥ नृणा
न्तु त्यक्तदेहानां श्राद्धाः षोडश सर्वदा । चतुर्थे पञ्चमे चैव नवमैकादशे तथा ॥
ततो द्वादशभिर्मासैः श्राद्धा द्वादश संख्यया इति ॥ चतुर्थादीनि दिनानि ॥ भविष्ये
त्वन्यथोक्तम् ॥ अस्थिसञ्चयनं श्राद्धं त्रिपक्षे मासिकानि तु । रिक्तयोश्च तथा ति
थ्योः प्रेतश्राद्धानि षोडशेति ॥ रिक्तयोस्तिथ्योरिति न्यूनषण्मासोनाब्दिकपरमि
ति हेमाद्रिः ॥ अत्र देशकुलशाखाभेदाद्व्यवस्थेति सर्व्वनिबन्धाः ( गालवः ) ऊ
नषाण्मासिकं षष्ठे मासे वा न्यूनमासिकम् ॥ त्रैपक्षिकं त्रिपक्षे स्यादूनाब्दं द्वादशे

तथा ( ऊनमासिकेतुगोभिलः ) मरणाद्द्वादशाहेस्यान्मासयूनेचोनमासिकम
( मदनरत्नेकालादर्शेचश्लोकगौतमः ) एकद्वित्रिदिनैरूने त्रिभागेनोनएववा।
श्राद्धान्यूनाब्दिकादीनि कुर्य्यादित्याहगौतमः ( क्रियानिबन्धेक्रतुस्तु) स एक
कादशेमासे सार्द्धवैपञ्चमेतथा । ऊनाब्दमूनषण्मास म्भवेत्तांश्राद्धकर्म्मणि
त्युक्तम ॥ तत्रमूलंचिन्त्यम ( ऊनेषुवर्ज्यान्याहमरीचिः ) द्विपुष्करेचनंदासुसि
नीवाल्यांभृगोर्दिने । चतुर्दश्यांचनोनानिकृत्तिकासुत्रिपुष्करे (ज्योतिषे)त्रिपा
दर्क्षतिथिभंद्राभौमेज्यरविभिःसह । तदात्रिपुष्करोयोगो द्वयोर्योगोद्विपुष्करः
(गालवः)त्रिभिर्वादिवसैरूनेत्वेकेनद्वितयेनवा॥श्राद्धादिषुचमासेषुकुर्यादूना
ब्दिकादिकम ॥ एकन्यूनपक्षेपंचम्यांमृतस्यतृतीयायांत्रिभिन्यूनेप्रतिपदिद्व्यूने
द्वितीयायामितिकेचित (माधवस्तु) षाण्मासिकाब्दिकेश्राद्धेस्यातांपूर्वेद्युरेव
ते। मासिकानिस्वकीयेतुदिवसेद्वादशेपिचेतिपैठीनसिवाक्येऊनषण्मासिकं स
प्तममासगतमृताहात्पूर्वेद्युःकार्यम॥ ऊनाब्दिकंतुद्वितीयाब्देमृताहदिनात्पूर्वेद्युः
कार्यमित्यर्थमाह॥ मासिकानिस्वकीयेतुदिवसेइत्युक्तेः ॥ इदमेवयुक्तम॥ म
दनरत्नेप्येवम (याज्ञवल्क्यः) मृतेहनितुकर्तव्यं प्रतिमासंतुवत्सरम। प्रतिसंवत्स
रंचैवमाद्यमेकादशेहनि ॥ अत्राद्यमासिकमाब्दिकंचैकादशेह्नीतिनिर्णयामृता
दयः॥ ब्राह्मणंभोजयेदाद्येहोतव्यमनलेथवा ॥ पुनश्चभोजयेद्विप्रंद्विरावृत्ति
र्भवेदितीतिगोभिलीयंचतद्विषयमाहुः ॥ अन्येतुमासपक्षतिथिस्पृष्टेइत्यादिवि
रोधादाब्दिकंवर्णितमेव ॥ मासिकंतुमासादौ॥ द्विरावृत्तिस्तुएकादशाहिकाद्य
मासिकपरा॥ देवयाज्ञिकोप्येवमाह (लौगाक्षिरपि) मासादौमासिकंका
र्यमाब्दिकंवत्सरेगते ॥ आद्यमेकादशेकार्यमधिकेत्वधिकंभवेत (दीपिकायांतु)
आद्यंरुद्रमितेर्कसंमितदिनेवास्यादित्युक्तम ॥ गौडास्तुमृततिथ्यर्वाक्एकादि
नाधिकेमाससंवत्सरपदंगौणं॥ पूर्णेब्देइतिद्वयदसमासपरत्वमितिशूलपाणिः॥
तेनद्वितीय मासादावाद्यमासिकादीनितमौरव्यंकृतं (अशक्तौतुहारीतः)मुख्यं
श्राद्धंमासिमासिअपर्याप्तावृतुंप्रति। द्वादशाहेनवाभोज्याएकाहेद्वादशापिवा॥
ऋतुंप्रतिद्विद्वेइत्यर्थः ॥ यदापितुर्मरणात्त्रयोविंशतितमेदिनेदर्शोवृद्धिर्वास्यात्त

दाहादेकादशदिनेषुद्वादशमासिकानिकार्याणीत्यर्थः ॥ त्रैपक्षिकंतुत्रिपक्षेऽतीतेमृता हेकार्यम् ॥ त्रैपक्षिकंभवेद्वृत्तेत्रिपक्षेतदनंतर मितिभविष्योक्तेरितिमदनरत्नेउ क्तम् (पृथ्वीचन्द्रकालादर्शनिर्णयामृतादयस्तु) ऊनान्यूनेषुमासेषु विषमाहेस मेपिवा । त्रैपक्षिकंत्रिपक्षेस्या न्मृताहेत्वितराणित्विति काष्र्णाजि निस्मृतेः ॥ पूर्वत्रवृत्तेप्रवृत्तेइत्यर्थमाहुस्तेतदनन्तरशब्दविरोधात् त्रैपक्षिकद्वितीयमासिक योःसंकरापत्तेश्चैवंव्याख्यायांमानाभावाच्चोपेक्ष्याः ॥ त्रिपक्षसपिण्डनेत्वेवंश ब्दाभावादधिकरणत्वमेवज्ञेयम् (यत्तु-- क्रियानिबंधेगारुडे) त्रैपक्षिकंत्रिपक्षेतु प्रवृत्ते विषमेदिने । मासिकान्यपिचोनानिअष्टाविंशतिमेदिनेइतितन्निर्मूलम् (स्मृतिरत्नावल्याम्) द्वादशाहेयदाकुर्या त्पितुःपुत्रःसपिण्डनम् । एकादशेह्नि कुर्वीतप्रेतश्राद्धानिषोडश (पैठीनसिः) सपिण्डीकरणादर्वाक् कुर्वन्श्राद्धानि षोडश । एकोद्दिष्टविधानेनकुर्वीतसर्वाणितानितु ॥ सपिण्डीकरणादूर्ध्वं यदा कुर्यात्तदापुनः । प्रत्यब्दंयोयथाकुर्यात्तथाकुर्यात्सतान्यपि (मदनरत्नेकात्याय नः) श्राद्धमग्निमतःकार्यंदाहादेकादशेहनि । ध्रुवाणितुप्रकुर्वीत प्रमीताहनि सर्वदा ॥ ध्रुवाणित्रैपक्षिकादूर्ध्वानि (क्रियानिबंधेगारुडे) त्रिपक्षात्पूर्वतःसाग्ने र्भवेत्संस्कारवासरे । ऊर्ध्वंमृतदिनेऽनग्नेःसर्वाण्येवमृताहतः ॥ एतानिचयदास पिण्डनात्पूर्वंयुगपत्कुर्यात्तदादेशकालकर्त्रैक्यतंत्रत्वादेकःपाकइतिकेचित् ॥ पा कभेदइतिभट्टचरणाः ॥ अत्रकेचिदाहुः ॥ देशकालदैवतैक्येतंत्रत्वात्श्राद्धका लातिक्रमापत्तेः ॥ द्वादशाहेथसर्वाणिसंक्षेपेणसमापयेत् । तान्येवतुपुनःकुर्या त्प्रेतशब्दंनकारयेदितिकात्यायनोक्तेः ॥ नैवश्राद्धद्वयंकुर्यात्समानेहनिकुत्रचि दत्यस्यदैवतैक्यपरत्वेप्यत्रतत्सत्वात् ॥ श्राद्धंकृत्वातुतस्यैवपुनःश्राद्धंनकारयेदि तिजाबाल्युक्तेः ॥ षोडशसंख्यायाप्रत्यवाजपेयेप्राजापत्ययागसप्तदशत्ववत्सा न्नाय्ययागादित्ववच्च दर्शपातसंक्रांतिश्राद्धवद्युगपदनुष्ठाने प्युपपत्ते राद्यमासि का द्यूनाब्दिकांतेषुषोडश श्राद्धेषुचक्षणःक्रियतामित्येवंप्रयोगेएकोविप्रःपिं डोर्घश्चेति ॥ विरुद्धविधिविध्वंसेप्येवंतन्मंदम् ॥ द्वादशाहेनवाभोज्यमेकाहे द्वादशानिपवेतिहेमाद्रौहारीतवचोविरोधात्तेन विप्रभेदात्पिण्डाद्यर्घ्यपिभिन्न

मितिसिद्धम् ॥ कृतानिद्वादशाहादौसपिण्डना त्पूर्वंकृतान्यपिवृद्धिंविनापकर्षे पुनःस्वकालेकार्याणि ॥ यस्यसंवत्सरादर्वाक्सपिण्डीकरणंकृतम् । मासिकं चोदकुंभंचदेयंतस्यापिवत्सरमितिमदनरत्नेगिरसोक्तेः ॥ नचेदंमासिकानामप कर्षंविधत्ते किन्तुसपिण्डनोर्ध्वंस्वकालेनुष्ठानमेवेतिवाच्यम् ॥ श्राद्धानिषोडशा दत्वानतुकुर्यात्सपिण्डतामितिविरोधात् ॥ यस्यसंवत्सरादर्वाग्विहितातुसपि ण्डता । विधिवत्तानिकुर्वीतपुनःश्राद्धानिषोडशेतिमाधवीयेगोभिलोक्तेश्च ॥ अर्वाक्संवत्सराद्यस्यसपिण्डीकरणंकृतम् । षोडशानांद्विरावृत्तिं कुर्यादित्याह गौतमइतितत्रैवगालवोक्तेः ॥ षोडशत्वचैकादशाहसपिंडनपक्षे ॥ तत्राद्यमा सिकस्यकालसत्त्वादन्यपक्षेषुयथासंभवंज्ञेयम् ( यत्तुदीपिकायाम् ) अनुमासि कानितुचरेत्तान्येवसपिंड्यतःपश्चात् । द्वादशेत्युक्तेरूनानांनपुनःकृतिरित्युक्तं तदेतद्विरोधाच्चिंत्यम् (यत्तु गौडाः) सपिंडीकरणांतातु ज्ञेयाप्रेतक्रियाबुधै रि तिशातातपोक्तेर्मासिकानांप्रेतत्वविमोक्षार्थत्वात्सपिंडनापकर्षे तदंतन्यायेन तेषामपकर्षान्मासिकानांनपुनःकृति ॥ यत्तुमासिकंचोदकुंभंचेतिलौगाक्ष्यादि वचनंतन्निर्मूलम् ॥ समूलत्वेपिदार्शपरंचेत्याहुः ॥ तेउक्तवक्ष्यमाणवचोनिबंध विरोधान्मूर्खाइत्युपेक्ष्याः ॥ यत्तु मिताक्षरायांसपिंडनोर्ध्वं स्वकालेएवकार्या णिअपकर्षस्त्वनुकल्पइत्युक्तं तदपिपूर्वविरोधाच्चिंत्यम् ॥ तेनवृद्धिंविनापकर्षे पुनःकृतिः । अर्वाक्संवत्सराद्यस्यसपिंडीकरणंभवेत् ॥ प्रेतत्वमिहतस्यापिज्ञेयं संवत्सरंनृपेत्यग्निपुराणात् ॥ वृद्धिनिमित्तापकर्षेत्वस्त्येवतन्निवृत्तिः ॥ अन्यथा वृद्धावसंभवादितिशूलपाणिः (काष्र्णाजिनिः) सपिंडीकरणादर्वागपकृष्यकृ तान्यपि । पुनरप्यपकृष्यंतेवृद्ध्युत्तरनिषेधनात् ( निषेधंचाहकात्यायनः) नि र्वर्त्यवृद्धितंत्रंतुमासिकानिनतंत्रयेत् ॥ अयातयामंमरणंनभवेत्पुनरस्यत्विति ॥ द्विरनुष्ठानंचोत्तरेषामेवनपूर्वेषांस्वस्वकालकृतानाम् ( तदाहमाधवीयेकार्ष्णाजि निः) अर्वागब्दाद्यत्रयत्रसपिंडीकरणंकृतम् । तदूर्ध्वंमासिकानांस्याद्यथाकाल मनुष्ठितिः (हेमाद्रौशाट्यायनिः ) प्रेतश्राद्धानिशिष्टानि सपिण्डीकरणंतथा । अपकृष्यापिकुर्वीतकर्तुंनांदीमुखंद्विजः (वृद्धिंविनापकर्षेदोषमाहोशनाः) वृद्धि

श्राद्धविहीनस्तु प्रेतश्राद्धानियश्चरेत् सश्राद्धीनरकेघोरे पितृभिःसहमज्जतीति (आधानेपक्वर्यमाहहेमाद्रावुशनाः) पितुःसपिण्डीकरणं वार्षिकेमृतिवासरे । आधानाद्युपसंप्राप्ता वेतत्प्रागपिवत्सरात् (विशेषस्तूक्तोविवाहनिर्णयेकरावः) नवश्राद्धंमासिकंचयद्यदंतरितंभवेत् ॥ तत्तदुत्तरसातंत्र्या दनुष्ठेयंप्रचक्षते( गारुडेपि) आपदाद्यकृतंयत्तुकुर्य्यादूर्ध्वंमृताहनि ॥ अथसपिण्डीकरणम् ( माधवीयेहारीतः) यातुपूर्व्वममावास्या मृताहाद्दशमीभवेत् ॥ सपिण्डीकरणंतस्यां कुर्य्यादेवसुतोऽग्निमान् ॥ मृताहादूर्ध्वंदशमीएकादशीत्यर्थः ॥ सपिण्डीकरणं कुर्य्यात्पूर्व्ववच्चाग्निमान्सुतः । परतोदशरात्राच्चेत्कुहूरब्देपरेतर इति कार्ष्णाजिनिस्मृतेः ॥ आहिताग्नेस्तेनविनाश्रौतपिंडपितृयज्ञासिद्धेः ( तदाहगालवः ) सपिंडीकरणात्प्रेते पैतृकंपदमास्थिते । आहिताग्नेःसिनीवाल्यांपितृयज्ञःप्रवर्तते (मदनरत्नेप्रजापतिः) नासपिंड्याग्निमान्पुत्रः पितृयज्ञंसमाचरेत् (अपरार्केकात्यायनः)एकादशाहंनिर्वर्त्य पूर्वंदर्शाद्यथाविधि । प्रकुर्वीताग्निमान्विप्रो मातापित्रोःसपिंडताम् । आशौचांतप्रथमदर्शयोर्मध्येकस्मिंश्चिदह्नीत्यर्थः ॥ पित्रादीनांसपत्नीकानांदेवतात्वेनमातुरपिप्राग्दर्शात्सपिंडनंयुक्तमित्यपरार्कः ॥ एवंपितामहादेरपिसपिंडनंप्राक्दर्शात्कार्यम् ॥ तेनविनापार्वणायोगात्द्वादशाहेवाकार्यम् ॥ साग्निकस्तुयदाकर्ताप्रेतश्चानग्निमान्भवेत् । द्वादशाहेभवेत्कार्यंसपिंडीकरणंसुतैरितिगोभिलोक्तेः ॥ साग्नेःप्रेतस्यतुत्रिपक्षे ॥ प्रेतश्चेदाहिताग्निःस्यात्कर्तानग्निर्यदाभवेत् । सपिंडीकरणंतस्यकुर्यात्पक्षेतृतीयकइतिसुमंतूक्तेः (मदनरत्नेलघुहारीतोपि) अनग्निस्तुयदावीर भवेत्कुर्य्यात्तदागृही ॥ प्रेतश्चेदग्निमांस्तुस्यात्त्रिपक्षेवैसपिण्डनम् ॥ द्वयोःसाग्नित्वेद्वादशाहएवसाग्निकस्तुयदाकर्ताप्रेतोवाप्यग्निमान्भवेत् ॥ द्वादशाहेतदाकार्यंसपिंडीकरणंपितुरिति तेनैवोक्तेः ( द्वयोरनग्नित्वेतुभविष्ये ) सपिंडीकरणंकुर्याद्यजमानस्त्वनग्निमान् ॥ अनाहिताग्नेःप्रेतस्यपूर्णेब्देभरतर्षभ ॥ द्वादशाहेषण्मासेत्रिपक्षेवात्रिमासिवा ॥ एकादशेपिवामासिमंगलस्याप्युपस्थितौ(कात्यायनगोभिलौ) यदहर्वावृद्धिरापद्यतेतिवाचस्पतिः ॥ तन्न ॥ प्रातर्वृद्धिनिमित्तकर्मेतिनियमात्

सपिंडनस्यचापराह्णकालीनत्वेनपूर्वत्वबाधापत्तेः ॥ वृद्धिदिनेतत्पूर्वदिनेचेति श्रीदत्तः (स्मार्तगौडास्तु) वृद्धिपूर्वावर्षांत्यपूर्वक्षणाः सपिंडनस्यप्रेतत्वनाशेसह कारी ॥ तेनपरेद्युर्विघ्नाद्वृद्ध्यभावेपित त्कर्तव्यतानिश्चयसहितमेवकालांतर क्रियमाणवृद्धिपूर्वक्षणासहकृतंप्रेतत्वनाशकमित्याह॥तन्न॥ अकालेकृतस्यफला जनकत्वात्॥ एतेननिमित्तनिश्चयवतएवाधिकाराद्वृद्ध्यभावेपिनक्षतिरितिमि श्रोक्तिःपरास्ता ॥ वृद्धिपूर्वदिनस्यचकालस्यांगत्वेननिमित्तत्वाभावात्तेनपुनः कार्यमित्यन्ये (मदनरत्नेपुलस्त्यः) निरग्निकःसपिंडत्वंपितुर्मातुश्चधर्मतः ॥ पूर्णेसंवत्सरेकुर्याद्वृद्धिर्वायदहर्भवेत् (चतुर्विंशतिमते) सपिण्डीकरणं चाब्देसंपूर्णेभ्युदयेपिवा । द्वादशाहेतुकेषांचिन्मतंचैकादशेतथा (पृथ्वीच न्द्रोदयेबौधायनः) अथसपिण्डीकरणंत्रिपक्षेवा तृतीयेवामासिषष्ठेचैकादशे वाद्वादशेवा द्वादशाहेचेति (एतत्प्रक्रमेविष्णुः) मासिकार्थंद्वादशाहं श्राद्धं कृत्वात्रयोदशेह्निवाकुर्या न्मंत्रवर्ज्यंहिशूद्राणां ॥ द्वादशेह्निसंवत्सराभ्यंतरेय द्यधिमासोभवेत्तदा मासिकार्थंदिनमेकंवर्धयेदिति ॥ आशौचोत्तरंद्वादश स्वहस्सुमासिकानितेष्वेवाद्य षष्ठद्वादशदिनेषुमासिकादीनिकृत्वात्रयोदशेह्निस पिण्डनंकुर्यात् ॥ अधिमासेतुचतुर्दशेह्निकुर्यात् ॥ शूद्रस्त्रयोदशेद्वादशेह्नित्य स्यमासिकांत्यदिनपरत्वादितिपृथ्वीचन्द्रः (पैठीनसिः) संवत्सरांतेसंसर्जनं नवमेमासीत्येके ॥ अत्रसाग्नेरनग्नेर्वोक्तकालाभावेत्रिपक्षादिसंवत्सरांतासनुक ल्पाज्ञेयाः ॥ कल्पतरुस्त्वग्रेवृद्धिनिश्चयएवसर्वेपकर्षेप्रकाराइत्याह॥ तन्न॥ यदहर्वेतिस्वातंत्र्यश्रुतेः ॥ यद्यपिवृद्धिर्निमित्तोप कर्षोनिरग्नेरेवोक्तस्तथापि साग्नेरपिज्ञेयः ॥ उक्तकालासंभवेवर्षांतादिगौणकालवद्वृद्धेरपिप्राप्तेः ॥ व क्ष्यमाणगोभिलवचनात् ॥ अयातयामंमरणंनभवेत्पुनरस्योत्विंतिदोषश्रुत्यविशे षाच ॥ अपरार्कपृथ्वीचंद्रादिस्वरसोप्येवम् ॥ अत्रवृद्धिपदंचूडोपनयनविवाह मात्रपरम् ॥ सीमंतादौतुवृद्धिश्राद्धलोपएवेत्याचार्यचूडामणिः ॥ पुंसवनाद्यन्न प्राशनांतेष्वावश्यकेष्वपकर्षइतिश्राद्धविवेकः (श्रुतिसागरेपिबृहस्पतिः) प्र त्यवायोभवेद्यस्मिन्नकृतेवृद्धिकर्मणि । तन्निमित्तंसमाकृष्यपित्रोःकुर्यात्सपिंड

नम् ॥ गर्भाधानस्यत्वंतरेपिसंभवात् ॥ अन्यश्राद्धंपरान्नंचगंधमाल्यंचमैथुनमि
तिदेवलेनप्रथमाब्देमैथुननिषेधाच्चनतत्रापकर्षइतिश्राद्धकौमुद्यादयस्तन्न ॥ ऋ
तुस्नातांतुयोभार्यांमितिनिषेधाद्ब्रह्मचार्येवपर्वाणयाद्यश्चतत्सृष्च वर्जयेदिति
मैथुनेदोषाभावाच्चपितामहमरणेपौत्रस्यवृद्धौनापकर्षः ॥ तस्यमहागुरुत्वाभावा
त् ॥ तत्रतदूर्ध्वेभ्योवृद्धिश्राद्धमितिश्राद्धचंद्रिका ॥ तन्न ॥ भ्राताचेत्यादौतदभावे
प्यपकर्षोक्तेः ॥ तेननिर्देशोप्युपलक्षणम् (व्याघ्रः) आनंत्यात्कुलधर्माणांपुं
सांचैवायुषःक्षयात् । अस्थितेश्चशरीरस्यद्वादशाहःप्रशस्यते ॥ एतदशौचांतो
पलक्षणम् ॥ सर्वेषामेववर्णानामाशौचांतेसंपिंडनमितिनिर्णयामृतेकात्यायनो
क्तेः ॥ सर्वेषामितित्रैवर्णिकपरम् ॥ शूद्राणांत्वाशौचमध्ये ॥ संत्रवर्ज्यंहिशूद्रा
णांद्वादशेहनिकीर्तितमितिविष्णूक्तेः ॥ एतद्दर्शश्राद्धकारिशूद्रविषयमित्य
परार्केकल्पतरौच (वृद्धमनुः) द्वादशेहनिविप्राणामाशौचांतेतुभूभुजाम् । वै
श्यानांतुत्रिपक्षादावथवास्यात्सपिण्डनम् (निर्णयामृतेगोभिलः) द्वादशाहा
दिकालेषु प्रमादादननुष्ठितम् । सपिण्डीकरणंकुर्यात् कालेषूत्तरभाविषु ॥ इदं
साग्नेरक्तकालासम्भवेगौणकालाविधानार्थमितिमदनपारिजातः ॥ मदनरत्ने
प्येवम् (ऋष्यशृङ्गः) सपिण्डीकरणंश्राद्ध मुक्तकालेनचेत्कृतम् । रौद्रे हस्तेचरो
हिण्यां मैत्रभेवासमाचरेत् (कालादर्शेपि) एकादशेद्वादशेह्नि त्रिपक्षेवात्रिमा
सिवा । षष्ठेचैकादशेवाब्दे सम्पूर्णेवाशुभागमे ॥ सपिण्डीकरणस्येत्थमष्टौका
लाःप्रकीर्तिताः । साग्नौकर्तर्युभावाद्यौ प्रेतेसाग्नौतृतीयकः ॥ अनग्नेस्तुद्विती
याद्यः सप्तकालामुनीरिताः । रोहिणीरौद्रहस्तेषु मैत्रमेवापितच्चरेत् (नारदसं
हितायांतु) सपिण्डीकरणंकार्यं वत्सरेवार्धवत्सरे । त्रिमासेवात्रिपक्षेवा मासि
वाद्वादशेह्निवेत्युक्तम् ॥ वत्सरेतीतेपिज्ञेयम् ॥ ततःसपिण्डीकरणंवत्सरात्पर
तःस्थितमितिभविष्योक्तेः ॥ पितुःसपिण्डीकरणंवत्सरादूर्ध्वंततःस्थितमितिना
गरखण्डोक्तेः ॥ पितुःसपिण्डीकरणंवार्षिकेमृतवासरेइत्युशनसोक्तेश्च ॥
पूर्णेसंवत्सरेपिण्डः षोडशःपरिकीर्तितः । तेनैवचसपिण्डत्वं तेनैवाब्दिकमि
ष्यतइतिहेमाद्रौवचनाच्च ॥ अस्यानाकरत्वोक्तिर्मूर्खोक्तिरेव (यत्तु) पूर्णेसंवत्सरे

कुर्यात् सपिण्डीकरणं सुतः । एकोद्दिष्टं च तत्रैव मृताहनि समापयेदिति धवलनिबन्धे जाबाल्युक्तेः ॥ पुत्रः सपिण्डनं कृत्वा कुर्यात्स्नानं सचैलकम् । एकोद्दिष्टं ततः कुर्यात् कृतं पुनर्विचारयेदिति स्वल्पमात्स्योक्तेः प्रत्याब्दिकं तद्दिने पुनः कार्य्यमिति केचित् ॥ ते निर्मूलत्वाद्धेमाद्रिविरोधाच्चोपेक्ष्याः ॥ षोडशत्वञ्च सपिण्डनस्य षोडशश्राद्धान्तर्भावपक्षे ॥ स्मृत्यर्थसारे तु वर्षान्त्यदिने संवत्सरविमोकश्राद्धं सपिण्डनं च कृत्वा परेद्युर्मृताहे वार्षिकं कार्यमित्युक्तम् ॥ गौडा अप्येवमाहुः ॥ तत्पूर्वविरोधाच्चिन्त्यम् ॥ तच्च पुत्रे सति नान्यः कुर्यात् ॥ श्राद्धानि षोडशादत्त्वा न तु कुर्यात्सपिण्डताम् । प्रोषितावसिते पुत्रः कालादपि चिरादपीति वायवीयोक्तेः ॥ षोडशश्राद्धानां वर्षादूर्ध्वं कालाभावेऽपि तान्यदत्त्वा न कुर्यात् ॥ किन्तु दत्त्वैव ॥ [illegible]नि यदि कनिष्ठभ्रात्रादिना कृतानि तदा सपिण्डनमेव कुर्यादित्यपरार्कः ॥ सपिण्डने तु कनिष्ठानां नैवाधिकार इत्यर्थः ( तत्रैव ) अज्ञानादथवा मोहान्न कृता चेत्सपिण्डता । तत्रापि विधिवत्कार्या कालादपि चिरादपि ॥ तत्रापि ज्येष्ठस्यैवाधिकारः ॥ ज्येष्ठेन जातमात्रेण पुत्री भवति मानव इति मनूक्तेः (अपरार्के प्रचेता अपि) एकादशाद्याः क्रमशो ज्येष्ठस्तु विधिवत्क्रियाः । कुर्युर्नैकैकशः श्राद्धमाब्दिकं तु पृथक्पृथक् (मरीचिः) सर्वेषां तु मतं कृत्वा ज्येष्ठेनैव तु यत्कृतम् । द्रव्येणाविभक्तेन सर्वैरेव कृतं भवेत् ॥ यत्तु वाचस्पतिशूलपाणिभ्यामुक्तं द्रव्यदानानुमत्यभावे कनिष्ठैः पृथक्कार्य्यमिति ॥ तन्न ॥ एवकारस्य तदभावेऽपि पृथक्करणाभावार्थत्वात् ॥ अन्धादेरिव ज्येष्ठे सति कनिष्ठानामनधिकाराच्च ॥ अतस्तेषां प्रत्यवायमात्रम् ॥ आहिताग्निः कनिष्ठस्तु कुर्य्यादेव ॥ अन्यथा पितृयज्ञासिद्धेः ॥ एवमावश्यकवृद्धावपि कनिष्ठोऽन्यः सपिण्डो वा कुर्यात् ॥ भ्राता वा भ्रातृपुत्रो वा सपिण्डः शिष्य एव च ॥ सहपिण्डक्रियां कृत्वा कुर्यादभ्युदयं ततः । तथैव काम्यं यत्कर्म वत्सरात्प्रथमादृते इति मदनरत्ने लघुहारीतवचनात् ॥ वृद्ध्यनन्तरं प्रथमाब्दमध्येऽपि काम्यं कुर्यात् ॥ वृद्ध्यभावे तु प्रथमाब्दादूर्ध्वमेवेत्यर्थः ॥ काम्योक्तेरनावश्यके इष्टापूर्तादौ नापकर्षः ॥ एतद्भ्रातृपुत्रादिसंस्कारे प्राप्ताधिकारस्य नान्दीश्राद्धाधिकारार्थम् ॥ अभ्युदयपदं च नान्दीश्राद्धनिमित्तकर्म्ममात्रपरमिति हे

मादिः ॥ तेनज्येष्ठेदेशांतरस्थेकनिष्ठःसपिण्डनंविनैववृद्धिंकृत्वापुत्रसंस्कारंकुर्यादितिश्रीदत्तोक्तिःपरास्ता ॥ भ्रातृशिष्याद्युक्तेर्नान्दीश्राद्धेज्यदेवतामात्रपरापकर्षइत्यपास्तम् ॥ अस्यक्रममात्रपरत्वाद्वृद्धिकर्मैवसपिण्डनंकुर्यादितिननियमइतिगौडाः ॥ अतएवकन्यायामातृमरणेश्राद्धेसपिण्डनेकृतेपितुर्नाधिकारः (शूल पाणिस्तु ) महागुरौप्रेतभूतेवृद्धिकर्मनयुज्यतइतिनिषेधात् ॥ मृतस्यभ्रात्रादिःसपिण्डनंकृत्वातत्पुत्रकन्यादेरभ्युदयंकुर्य्यान्नतुस्वपुत्रसंस्कारेसंस्कार्यपितुःसपिण्डनंविनावृद्धौदेवतात्वाभावादित्याह ॥ तन्न॥ विदेशस्थेनज्येष्ठेनपुनःकार्यम् ॥ यवीयसाकृतंकर्म प्रेतशब्दंविहायतु । तज्ज्यायसापिकर्तव्यंसपिण्डीकरणं पुनरितिस्मृतेः ॥ ज्येष्ठेनवाकनिष्ठेन सपिण्डीकरणेकृते । आद्यपादेमातापित्रोःकनिष्ठेनेतिवापाठः ॥ देशान्तरगतानांचपुत्राणांतुकथम्भवेत् । श्रुत्वातुवपनंकार्य्यं दशाहांतंतिलोदकम् ॥ ततःसपिण्डीकरणं कुर्यादेकादशेऽहनि । द्वादशाहेनकर्तव्य मितिशातातपोब्रवीदितिवचनाच्चेतिभट्टाः ॥ सिंगाभट्टीयेप्येवम् ॥ एवंवचनेत्रचमूलंचिन्त्यम् ॥ स्मृत्यर्थसारेतुविभक्ताश्चेद्वृद्धिकामाश्चेत्पुत्राःपृथक्सपिण्डीकरणंकुर्य्युरित्युक्तम् ॥ अत्रदत्तकस्यतत्पुत्रादीनांविशेषःप्रागुक्तः ॥ केचित्तु वृद्धिं विनापिकनिष्ठस्यसपिण्डनमाहुः ॥ मातापित्रोर्मृतेकाले ज्येष्ठेदेशांतरस्थिते । कनिष्ठेनप्रकर्तव्यं सपिण्डीकरणंतथेतिकार्ष्णाजिनिस्मृतेः ॥ गतेवारोगितेज्येष्ठे पित्रावाप्रेषितेसति । षण्मासान्नानिवर्तेत तदाकार्यंकनीयसा ( संवर्तः ) पुनःसपिण्डीकरणं श्राद्धंपार्वणवच्चरेत् । अर्घ्यसंयोजनंनैवपिण्डसंयोजनंनचेति ॥ तेषांवचसांनिर्मूलत्वात् ॥ प्रोषितावसितेपुत्र इत्यादिविरोधाच्चोपेक्ष्याः (व्युत्क्रममृतौतुहेमाद्रौब्राह्मे)मृतेपितरियस्याथविद्यन्तेचपितामहाः । तेनदेयास्त्रयःपिण्डाः प्रपितामहपूर्वकाः ॥ तेभ्यश्चपैतृकःपिण्डो नियोक्तव्यस्तुपूर्ववत् । मातर्यथमृतायांच विद्यतेचपितामही ॥ प्रपितामहीपूर्वस्तुकार्यस्तत्राप्ययंविधिः ॥ एवंप्रपितामहजीवनेतत्पित्रादिभिर्ज्ञेयम् (तदाहसुमन्तुः) त्रयाणामपिपिण्डाना मेकेनापिसपिण्डने । पितृत्वमश्नुतेप्रेतइतिधर्मोव्यवस्थितः (यत्तु)व्युत्क्रमात्तुप्रमीतानां नैवकार्यासपिंडतेतितन्मातापित्र

भर्तृ भिन्नविषयम् ॥ व्युत्क्रमेणमृतानांनसपिंडीकृतिरिष्यते । यदिमातायदि पिताभर्तानैषविधिः स्मृत इतिमाधवीयेस्कांदोक्तेः ॥ मदनरत्नादौचैवम् ॥ अत्रप्रपितामहादिभिः पितुःसपिंडनेकृतेपितामहेमृतेतत्सपिंडनेसतिपुनस्तेनसहपितुःसपिंडनंकार्यमितिहेमाद्रिमतमाह ॥ अन्येनैवतन्मन्यंते ॥ तत्त्वंतुपितुःसपिंडनाभावेपितामहेनसहपुनःकार्यंनतत्सत्त्वे॥ त्रयाणामपिपिंडानामेकेनापिसपिंडने । पितृत्वमश्नुतेप्रेतइतिधर्मोव्यवस्थितइतिविष्णुधर्मोक्तेः ॥ पितामहेप्रपितामहेवापुत्रांतरैरसंस्कृतेप्यसंस्कृताभ्यामेवपितुःसपिंडनंकुर्यात् ॥ असंस्कृतौनसंस्कार्यौपूर्वौपौत्रप्रपौत्रकौ ॥ पितरंतत्रसंस्कुर्यादितिकात्यायनोब्रवीदितिछंदोगपरिशिष्टात् ॥ असंस्कृतौदाहाद्यैरितिकेचित्॥ असपिंडीकृताविति तु तत्त्वं ॥ अतएवोक्तंतत्रैव ॥ पापिष्ठमपिशुद्धेनशुद्धंपापकृतापिवा । पितामहेन पितरंसंस्कुर्यादितिनिश्चयः ॥ पापिष्ठमकृतसपिंडनंनतुपतितादि । अभिशस्त पतितभ्रूणघ्न । स्त्रियश्चातिचारिणीर्नसंसृजेदितिबैजवापोक्तेः ॥ पापकर्मिणोनसंसृजेरन्नितिगौतमोक्तेश्चेत्युक्तंनिर्णयामृते ॥ पूर्वयोःपुत्रभावेतुपौत्रःकुर्यादेव ॥ पितामहःपितुःपश्चात्पंचत्वंयदिगच्छति । पौत्रेणैकादशाहादिकर्तव्यंश्राद्धषोडशम् ॥ नैतत्पौत्रेणकर्तव्यंपुत्रवांश्चेत्पितामहः । पितुःसपिण्डतां कृत्वाकुर्यान्मासानुमासिकमितिकात्यायनोक्तेः ॥ अपरार्केशूलपाणौचैवम् ॥ तेनसपिण्डनस्यानित्यत्वादकृत सपिण्डनयोरेवपार्वणानुप्रवेशइतिसर्वोक्तिः प रास्ता ॥ कृतेसपिण्डीकरणेप्रेतःपार्वणभाग्भवेदितिहारीतविरोधाच्च ॥ केचित्पुत्रांतराभावेपितामहवार्षिकमप्याहुस्तन्न ॥ श्राद्धषोडशमितिनियमात् ॥ इच्छयाभवत्येव ॥ पितामहस्यचेदद्यादे कोद्दिष्टंनपार्वणमितिवाचस्पतिधृतगार्ग्योक्तेः ॥ त्रयाणांयौगपद्येतुप्राधान्यात्पितुःसपिण्डनंकृत्वापूर्वयोःकुर्यात् ॥ पितामहेमृतेदशाहांतःपितुर्मृतौपितुःसंस्कारंकृत्वापितामहस्यपुनःसर्वमावर्तयेत् । वृत्तेदशाहेनैव ॥ अशक्त्यापित्रानुज्ञातेनपौत्रेणपितामह श्राद्धेप्रक्रांतेपितृमृतौत दाशौचंवहन्नेवपौत्रःपितामहकर्मकुर्यात्प्रक्रांतत्वादितिमदनपारिजातपृथ्वीचंद्रौ (यत्तु)उत्तरात्रितयरौद्ररोहिणीयाम्यसर्पपितृभेषुचाग्निभे । प्रमृगुक्रमंसक

लंचवर्जयेत्प्रेतकार्यमपिबुद्धिमान्नरइति सपिण्डनप्रकरणोपाठान्मुख्यकालेनि षिद्धसपिण्डनापकर्षः ॥ सर्वकालेषुतद्वत्त्वेतद्वर्ज्यान्येव ॥ पूर्वोक्तब्राह्मोक्तानिषोडशश्राद्धानिकार्याणीतिवाचस्पतिमिश्रास्तन्न ॥ अस्यपरिभाषात्वेनवाक्यात्सावकाशकर्मपरत्वात् ॥ अस्यप्रेतमात्रदैवत्यभावाच्च (अथस्त्रीषूच्यते । हेमाद्रौबृहस्पतिः) भर्तृगोत्रेणनाम्नाचमातुःकुर्यात्सपिण्डनम् (यत्तुभविष्ये) पितृगोत्रंसमुत्सृज्यनकुर्याद्भर्तृगोत्रतइतितदासुरादिविवाहोढापरम् ॥ आसुरादिविवाहेषुपितृगोत्रेणधर्मविदितिवृद्धशातातपोक्तेः ॥ तचानेकवचनेषुपितामह्यापत्यामातामहेनवासहोक्तम् (तत्रव्यवस्थोक्ताभविष्ये) जीवत्पितरिपितामह्यामातुःकुर्यात्सपिण्डनम् । प्रमीतपितृकःपित्रातत्पत्न्यापुत्रिकासुतः ॥ तत्पत्न्यामातुःपित्रा (लौगाक्षिः) पितामह्यादिभिःसार्द्धमातरंतुसपिण्डयेत् । पितरिध्रियमाणेतुतेनैवोपरतेसति (शंखः) मातुःसपिण्डीकरणंकथंकार्यंभवेत्सतैः । पितामह्यादिभिःसार्द्धसपिण्डीकरणंस्मृतमयेनकेनापिमातुःसपिण्डयेत् ॥ यत्रान्वष्टकादौमातुःश्राद्धंपृथगुक्तंतत्रपितामह्यासहकार्यम् ॥ नांदीमुखेऽष्टकाश्राद्धेगयायांचमृतेऽहनि ॥ पितामह्यादिभिःसार्द्धमातुःश्राद्धंसमाचरेदितिशातातपोक्तेः (अपुत्रायांतुपैठीनसिः) अपुत्रायांमृतायांतुपतिःकुर्यात्सपिण्डनम् । श्वश्र्वादिभिःसहैवास्याःसपिण्डीकरणंभवेत् (यत्तुलघुहारीतः) पुत्रेणैवतुकर्तव्यंसपिण्डीकरणंस्त्रियाः । पुत्रस्यपुनरत्वन्येभ्रातृपुत्रादयोपिये इति (यच्चमार्कंडेयपुराणे) सपिण्डीकरणंस्त्रीणांपुत्राभावेनविद्यतइति ॥ तत्पुत्रपत्न्यभावेज्ञेयम् ॥ अत्रसपत्नीपुत्रोपिज्ञेयः ॥ बह्वीनामेकपत्नीनामेकाचेत्पुत्रिणीभवेत् । सर्वास्तास्तेनपुत्रेणप्राहपुत्रवतीर्मनुरितिमनूक्तेरेतत्परत्वात् (यत्तु शातातपः) मृतेपितरिमातुस्तुनकार्यासहपिंडता । पितुरेवसपिंडत्वेतस्याअपिकृतंभवेदितितदशक्तपरम् ॥ केषांचिद्वामतमितिहेमाद्रिः ॥ अन्वारोहणेतुभर्त्रैवसापिंड्यम् ॥ मृतायानुगतानाथंसातेनसहपिंडताम् । अर्हतिस्वर्गवासंचयावदाभूतसंप्लवमितिशातातपोक्तेः ॥ पत्याचैकेनकर्तव्यंसपिंडीकरणंस्त्रियाः । सामृतापिहितेनैक्यंगतामंत्राहुतिव्रतैरितियमोक्तेश्च ॥ अत्रैकशब्दःपितामह्यादिपक्षनिवृत्त्यर्थः ॥ पतिपदंवर्गपरम् ॥

सपिंडनस्यपार्वणैकोद्दिष्टरूपत्वादितिमाधवकल्पतरुमदनरत्नादयः ॥ अन्येतु भर्त्रैवैकेनाहुः ॥ स्वेनभर्त्रासहैवास्याःसपिंडीकरणंभवेदित्येवकारश्रवणात ॥ पृथ्वीचंद्रोदयेपिविकल्पउक्तः ॥ इदंतुतत्त्वम ॥ यदाहेमाद्र्यादिमतेद्वयोरेकःपिंडस्तदावर्गेणसहः ॥ यदामाधवपृथ्वीचंद्रादिमतेपृथक्पिंडस्तदैकेनपत्यैकवचनाच्चैकेनापि ॥ अतोमातृपिंडमसपिंडीकृतेनैवपतिपिंडेनसंयोज्यैकीकृतं पिंडद्वयंतत्पित्रादिभिः संयोजयेत ॥ अंत्यपक्षएवयुक्तः (स्मृत्यर्थसारेतु) अन्वारोहणेनैकदिनमरणेस्त्रियाःपृथक्सपिंडनंनास्ति ॥ भर्तुःकृतेस्त्रियाअपिकृतंभवतीत्युक्तम ॥ तन्मतांतरमस्तु ॥ इदंब्राह्मादिविवाहेषुज्ञेयम (आसुरादिषुतुशातातपः) तन्मात्रात्पितामह्यात्तच्छ्वश्र्वाःसपिंडनम । आसुरादिविवाहेषुविन्नानांयोषितां भवेत ॥ मातामह्यामातुः पितामह्यातत्प्रपितामह्याचेत्यर्थः ( सुमंतुः ) पितापितामहेयोज्यःपूर्णेसंवत्सरेसुतैः । मातामातामहेतद्वदित्याहभगवान्भृगुः ॥ इदमासुरादिपरं पुत्रिकापुत्रपरंचोक्तंप्राक् ॥ हेमाद्रिस्तुब्राह्मादिष्वपिसर्वत्रदेशभेदाद्विकल्पमाह । अतोगुर्जरेषुकौकिलमतानुसारिणांमातृमातामहप्रमातामहाइतिश्राद्धप्रयोगःसपिंडनंचदृश्यते ( हेमाद्रावापस्तंबोपि ) कौकिलस्ययथापुत्राअन्यसंचयजीविनः । पुत्रास्तेस्वकुलंयांतिएवंनारीमृतासती ॥ यदपिविज्ञानेश्वरोमातामहेनमातुःसापिंड्येनपितृश्राद्धवन्मातृश्राद्धंनित्यमित्याह (यच्चवृद्धिश्राद्धेछंदोगपरिशिष्टम) षड्भ्यःपितृभ्यस्तदनुश्राद्धदानमुपक्रमेदितितदेतद्विषयमेव ॥ मातुःपृथक्श्राद्धाभावात (अतएवहेमाद्रौभविष्ये ॥ मातुःसपिंडनंप्रक्रम्य) उदितेनुदितेचैव होमभेदोयथाभवेत । तथाकुलक्रमायातमाचारंचचरेद्बुधइत्युक्तम ॥ अस्यवृद्धावपवादमाहतत्रैवव्याघ्रपात ॥ कुर्यान्मातामहश्राद्धंसर्वदामातृपूर्वकम । विधिज्ञोविधिमास्थायवृद्धौमातामहादिवत ॥ केचिदेतत्पुत्रिकापुत्रपरमाहुः (पत्युःसापिंड्यमाहलौगाक्षिः) सर्वाभावेस्वयंपत्न्यःस्वभर्तॄणाममंत्रकम । सपिंडीकरणंकुर्युस्ततःपार्वणमेवचेति(यत्तुवचनं) अपुत्रस्यपरेतस्यनैवकुर्यात्सपिंडतामिति ( यच्चापस्तंबः ) अपुत्रायेमृताकेचित्पुरुषावास्त्रियोपिवा । तेषांसपिंडनाभावादेकोद्दिष्टंनपार्वणमिति ॥ तत्पुत्रोत्पादनविधिप्र

ग्रंसार्थमितिमाधवः ॥ सपिंडीकरणादूर्ध्वमेकोद्दिष्टंविधीयते । अपुत्राणांचस
र्वेषामपत्नीनांतथैवचेतिहेमाद्रौप्रचेतसोक्तेश्च ॥ अन्येतुद्विविधवाक्यदर्शना
द्विकल्पमाहुः ( स्मृत्यर्थसारेपि ) ब्रह्मचारिणामनपत्यानांचसपिंडनंनास्तितते
षांसदैकोद्दिष्टमेव ॥ व्युत्क्रममृतानांसापिंड्यंकार्यंनवा॥केचित्सर्वत्रसपिंडनमाहु
रिति ॥ अपुत्रेव्युत्क्रममृतेविशेषोरेणुकारिकायाम् ॥ भ्राताबाभ्रातृपुत्रोवास
पिंडःशिष्यएववा ॥ सपिंडीकरणंकुर्यात्पुत्रहीनेमृतेसति ॥ सर्वबंधुविहीनस्यप
त्नीकुर्यात्सपिंडताम् ॥ ऋत्विजंकारयेद्वापिपुरोहितमथापिवा । वसुरुद्रादिति
सुतैःकार्यातेषांसपिंडता । व्युत्क्रमाच्चप्रमीतायेतद्विनाप्रेततांध्रुवम् ॥ पुत्रःसपिं
डनंतेषांकुर्यात्प्रेतेपितामहइति ॥ अत्रमूलंमृग्यम् ॥ यतीनांसपिंडनंनास्तिकिंत्वे
कादशेह्निपार्वणंकार्यम् ॥ तदपित्रिदंडिनः ॥ एकदंड्यादीनांतदपिनेत्युक्तंप्राक्
दंडग्रहणात्पूर्वंमृतेतुदाहादिसपिंडनांतंसर्वंकार्यमितिभट्टचरणाः ( सपिंडनवि
धिमाहवैजवापः ) समाप्तेसंवत्सरेचत्वार्युदपात्राणिप्रयुनक्त्येकंप्रेतायत्रीणिपि
तृभ्यःप्रेतपात्रंपितृपात्रेष्वासिंचतियेसमानाइति ॥ द्वाभ्यामेवंपिंडोथाभिमृश
ति ॥ एषवोनुगतःप्रेतःपितरस्तंददामिवः । शिवंभवतुशेषाणांजायंतांचिरजी
विनः ॥ समानीवःसंगच्छध्वंसंवदध्वमिति ( यद्यपि ) तत्रापिदेवरहितमेका
र्घ्यैकपवित्रकम् । नैवाग्नौकरणंतत्रतच्चावाहनवर्जितमितिमार्कंडेयेनोक्तंतथा
पिसपिंडीकरणंश्राद्धंदैवपूर्वंनियोजयेदित्यादिविरोधाद्विकल्पःप्रेतांशेवाज्ञेयं ॥
अन्नकामकालोवैश्वदेवावपीत्युक्तंप्राक् ( मैत्रायणीयपरिशिष्टे ) पित्र्यविप्र
करेहोमः साग्नेरपिभवेदिह (यत्तुगोभिलः) अनुक्तकालेष्वपि तुव्युत्क्रमेणामृ
तावपि । आमेनवापिसापिंड्यं हेम्नावापिप्रकल्पयेदिति तदार्यादिमाता
पित्रभिन्नपरम् ॥ आपन्नोपिनकुर्वीतश्राद्धमामेनकर्हिचिदितितेनैवोक्तेः ॥
( शुद्धितत्त्वकाम धेनौचलघुहारीतः) सपिण्डीकरणं यावत्प्रेतश्राद्धंतुषो
डशम् । पक्वान्नेनैवकर्तव्यं सामिषेणाद्विजातिभिः (विप्रवप्रकाशे) प्रेतःसपि
ण्डनादूर्ध्वंपितृलोकेनुगच्छति । कुर्यात्तस्यतुपाथेयं द्वितीयेह्निसपिण्डनात् ॥
स्मृत्यर्थसारेप्येवम् ॥ ततोवृद्धिश्राद्धंकुर्यात् ॥ एतन्मलमासेपिकार्यम् ॥ अधि

मासेनकर्तव्यंश्राद्धमाभ्युदयंतथातथैवकाम्यंयत्कर्मसंवत्सरात्प्रथमादृतइतिहेमाद्रौहारीतोक्तेः ॥

इति भट्टकमलाकरकृतेनिर्णयसिंधौसपिंडीकरणम् ॥

(अथप्रथमाब्देनिर्णयिद्धानिहेमाद्रौ) स्नानंचैवमहादानंस्वाध्यायंचाग्नितर्पणम । प्रथमेब्देनकुर्वीतमहागुरुनिपातने ॥ अग्नितर्पणंलक्षहोमादि ॥ नत्वाधानम ॥ तत्तुप्रथमाब्देभवत्येव ( तदाहहेमाद्रावुशनाः ) पितुःसपिंडीकरणंवार्षिकेमृतवासरे । आधानाद्युपसंप्राप्तावेतत्प्रागपिवत्सरात ॥ अन्यतर्पणमितिशुद्धितत्त्वेपाठः ॥ आदिपदंवृद्धिनिमित्तनित्यकर्मपरम ( दिवोदासीये ) महातीर्थस्यगमनमुपवासव्रतानिच ।संवत्सरनकुर्वीतमहागुरुनिपातने ॥ इदंश्राद्धकौमुद्यांदेवीपुराणस्थमुक्तम ( गौडनिबंधेमात्स्ये) सपिण्डीकरणादूर्ध्वंप्रेतःपार्व्वणभुग्भवेत । वृद्धीष्टापूर्तयोरयप्रचगृहस्थप्रचसदाभवेत ॥ वर्षांतसपिंडनाभावेनाधिकारीत्यर्थः ॥गृहस्थःसपिंडोपीत्यर्थःअतएवप्रेतकर्माणायनिर्वर्त्यचरेन्नाभ्युदयांक्रियाम । आचतुर्थंततःपुंसिपञ्चमेशुभदंभवेदितिज्योतिषेउक्तम ( माधवीयेदेवलः ) प्रमीतौपितरौयस्यदेहस्तस्याशुचिर्भवेत । नदैवंनापिवापित्र्यंयावत्पूर्णोनवत्सरः ॥ इदंवर्षांतसपिंडनपरम ॥ तथैवकाम्यंयत्कर्मसंवत्सरात्प्रथमादृतइतिघुहारीताद्येकवाक्यत्वात ॥ वृद्धिनिमित्तापकर्षेतुकाम्यादिभवत्येवेतिगौडाः ॥ पित्र्यंसपिंडनम ( अतएवलौगाक्षिः ) अन्येषांप्रेतकार्याणि महागुरुनिपातने । कुर्यात्संवत्सरादर्व्वाक्श्राद्धमेकंतुवर्जयेत । दाहाद्येकादशाहांतंकार्यमतआशौचांतरस्याप्रतिबंधकत्वात ॥ आद्यंश्राद्धमशुद्धोपि कुर्यादेकादशेहनीत्युक्तेश्च । एकंसपिण्डनम (पत्न्यादौत्वपवादमाहमाधवीयेऋष्यशृङ्गः) पत्न्याःपुत्रस्यतत्पुत्र भ्रात्रोस्तत्तनयेषुच । स्नुषायांस्वस्रोश्चपित्रोश्च संघातमरणादि ॥ अर्वागब्दान्मार्द्धपित्पूर्वंसापिंड्यमाचरेत (लौगाक्षिः) पत्नीपुत्रस्तथापौत्रोभ्रातातत्पुत्रकाअपि । पितरौचयदैकस्मिन्म्रियेरन्वासरेतदा ॥ आद्यमेकादशेकुर्यादन्त्रपक्षेतुसपिण्डनम (धवलनिबंधे) महागुरुनिपातेतुप्रेतकार्यंयथाविधि ।

कुर्यात्संवत्सरादर्वागेकोद्दिष्टंनपार्वणम् ( भृगुः ) माताचैवतथाभ्राताभार्यापुत्र स्तथास्नुषा । सर्वांमृतौचरेच्छ्राद्धमन्यस्यनपुनः पितुः ॥ एतदपिसपिंडनपरम् पितुर्मृ तावन्यस्यश्राद्धंनचरेदित्यर्थः ( शुद्धितत्त्वेदेवलः ) अन्यश्राद्धंपरान्नंच गंधमाल्यंचमैथुनम् । वर्जयेद्गुरुपातेतुयावत्पूर्णोनवत्सरः (पारस्करभाष्येबृह स्पतिः ) पितर्युपरतेपुत्रोमातुःश्राद्धान्निवर्तते । मातर्यपिचवृत्तायांपितृश्राद्धा दृतेसमम् ॥ समंपितरंविनान्यश्राद्धंनेत्यर्थः ( शुद्धितत्त्वेदेवलः ) महागुरुनिपा तेतुकार्य्यंकिंचिन्नचाचरेत् । आर्त्विज्यंब्रह्मचर्यंचश्राद्धंदेवक्रियांतथा ॥ एतत्स पिंडनात्प्रागितिकेचित् ॥ तदुत्तरमपीत्यन्ये ( श्राद्धकौमुद्यांकालिकापुराणेपू र्वार्धे ) विशेषतःशिवपूजांप्रमीतपितृकोनरः । यावद्वत्सरपर्यंतंमनसापिनचा चरेत् ( केचित्तु ) पित्रोरब्दमशौचंस्यात्षण्मासंमातुरेवच । त्रैमासिकंतुभा र्यायास्तदर्धंभ्रातृपुत्रयोरितिस्मृतेः॥सपत्नमातुरब्दार्धमाहुः ( श्राद्धकौमुदीकार स्तु ) इयोरेवमहागुर्वोरब्दमेकमशौचकम् । नान्येषामधिकाशौचंस्वजातिवि हितात्कलेतिसमूलजातूकर्णविरोधान्निर्मूलमाह ( हेमाद्रौभविष्ये ) गयाश्रा द्धंमृतानांतुपूर्णेत्वब्देप्रशस्यते ( त्रिस्थलीसेतौगारुडे ) तीर्थश्राद्धंगयाश्राद्धंश्राद्ध मन्यच्चपैतृकम् । अब्दमध्येनकुर्वीतमहागुरुविपत्तिषु ॥ इदंबृद्ध्यर्थसपिंडनाभा वे ॥ वृद्धौसपिंडनापकर्षेऽब्दमध्येपिदर्शादिकार्यमेव ॥ पितुःसपिंडनांकृत्वा कुर्यान्मासानुमासिकमितिछंदोगपरिशिष्टात् ॥ सपिंडीकरणादूर्ध्वंप्रेतःपार्व णभुग्भवेदितिमात्स्यात् ॥ ततःप्रभृतिवैप्रेतःपितृसामान्यमश्नुते । विंदतेपितृ लोकंचततःश्राद्धंप्रवर्ततेइतिहारीताच्चेतिशूलपाणिः ( शत्तुकातीयं ) सपिंडी करणादूर्ध्वंनदद्यात्प्रतिमासिकम् । एकोद्दिष्टविधानेनदद्यादित्याहशौनकइति तत्रैकोद्दिष्टविधिनानदद्यादित्यन्वयः ॥ तुर्यप्रादेशपार्वणोविकल्पउक्तः ( ब्रह्म वैवर्त्ते ) उद्वाहश्चोपनयनंप्रथमेऽब्देमहीपते । कृतेसपिंडनेप्यूर्ध्वमरघ्नांचोडस्ता त्यजेत् ॥ तथापिकर्तुमिच्छंतिवीथिंचैतानिवैसुताः । मासिकान्यपिशिष्टानिचा पकृष्यचरेत्पुनः ॥ अत्रेदंतत्त्वम् ॥ वृद्धिविनार्वागपिसपिंडनापकर्षेपितृत्वप्राप्ति र्नपतिपद्यते ॥ कृतेसपिंडीकरणेनरःसंवत्सरात्परं प्रेतदेहंपरित्यज्यभोगदेहंप्रपद्यत

इतिविष्णुधर्मोक्तेः ॥ अर्वाक्संवत्सराद्यस्यसपिंडीकरणंभवेत् । प्रेतत्वमपितस्यापिविज्ञेयंवत्सरंनृपेत्यग्निपुराणाच्च ॥ तेनतत्सत्त्वेपिवृद्धिदैवपित्र्येष्वनधिकारः ॥ वृद्धिनिमित्तेत्वनंतरमेव ॥ अर्वाक्संवत्सराद्वृद्धौपूर्णेसंवत्सरेपिवा । येसपिंडीकृताःप्रेतानतेषांतुपृथक्क्रियेतिशातातपोक्तेः ॥ तथैवक्काम्यमितिहेमाद्रिधृतहारीतादिवचनाच्चैवमिति ( तथा ) अस्थिक्षेपंगयाश्राद्धंश्राद्धंचापरपक्षिकम् । प्रथमेब्देनकुर्वीतयदिस्याद्भक्तिमान्सुतः ॥ अत्रयावच्चंश्राद्धंतद्धानितिमदनपारिजातादयः ॥ अन्येयथाश्रुतमाहुः ( तत्त्वंतु ) यदीदंसमलंतदावृद्धिंविनापकर्षेपूर्वंतद्दर्थतुपरमितियोज्यम ( पतितानांगयायांविशेषोब्राह्मे ) क्रियतेपतितानांचगतेसंवत्सरेक्वचित् । देशधर्मप्रमाणत्वाद्गयाश्राद्धंस्वबंधुभिः ॥ अथविधानानि ( तत्रपंचकमृतेमदनरत्नेगारुडे ) आदौकृत्वाधनिष्ठार्धमेतन्नक्षत्रपंचकम् । रेवत्यंतंसदादूष्यमशुभंदाहकर्मणि ॥ शवस्यतुसमीपेतुक्षेप्तव्याःपुत्तलास्तदा । दर्भमय्यास्तुचत्वारऋक्षमंत्राभिमंत्रिताः ॥ ततोदाहःप्रकर्त्तव्यस्तैश्चपुत्तलकैःसह । सूतकांतेततःपुत्रैःकार्यंशांतिकपौष्टिकम् । पंचकेषुमृतोयोवैनगतिंलभतेनरः ॥ तिलांश्चैवहिरण्यंच तमुद्दिश्यघृतंदहेत् (क्रियानिबंधे) भाजनोपानहौछत्रंहेममुद्रांचवाससी । दक्षिणादीयतेविप्रेसर्वपातकमोचनी ( मदनरत्नेगार्ग्यः ) यदिभद्रातिथीनांस्याद्वारानुभौमशनैश्चरैः । त्रिपादर्क्षेणचसंयोगोद्वयोर्योगेद्विपुष्करः ॥ द्वित्रिपुष्करयोगेतुमृतिर्मृत्यंतरावहा । दहनेमरणेचैवत्रिगुणंस्यात्त्रिपुष्करे ॥ खननेप्येवमेवस्यादेतद्दोषोपशांतये । तिलपिष्टैर्यवैर्वापिशरीरंकारयेत्ततः ॥ शूर्पेनिधायालंकृत्य दाहयेत्पैत्रकोपरि ( तद्दाहेसंत्रमाहबौधायनः ) अस्मात्त्वमितिसंत्रेण तिलपिष्टंप्रदाहयेत् । द्वित्रिपुष्करयोर्दोषस्त्विभिःकृच्छ्रैर्व्यपोहति ॥ वासवेमरणंचेत्स्यात्तगृहेवापिपुनर्मृतिः । सुवर्णंदक्षिणांदद्यात्कृष्णांवत्ससंयुतांपिवा ॥ वासवंधनिष्ठा ( ब्राह्मे ) कुंभमीनस्थितेचंद्रेमरणंयस्यजायते । नतस्योर्ध्वगतिर्दृष्टासंततौनशुभंभवेत् ॥ नतस्यदाहःकर्तव्योविनाशांतिंपुजंतुषु । अथवातद्दिनेकार्योदाहस्तुविधिपूर्वकम् ॥ धनिष्ठापंचकेजीवोमृतोयदिकथंचन । त्रिपुष्करेवाम्यभवाकुलजान्मारयेत्ध्रुवम् ॥ तत्रानि

ष्टविनाशार्थं विधानंसमुदीर्यते । दर्भाणांप्रतिमाःकार्याःपंचोर्णासूत्रवेष्टिताः ॥ यवपिष्टेनानुलिप्तास्ताभिःसहशवंदहेत् ॥ प्रेतवाहःप्रेतसखःप्रेतपःप्रेतभूमिपः । प्रेतहर्तापंचमस्तुनामान्येतानिचक्रमात् ॥ अत्रप्रतिमागंधपुष्पैःपूजयित्वा ॥ प्रथमांशिरसि । द्वितीयांनेत्रयोः । तृतीयांवामकुक्षौ । चतुर्थीं नाभौ । पंचमींपादयोर्न्यस्यतदुपरिनामभिघृ तंहुत्वा । यमायसोमंत्र्यंबकमितिमंत्राभ्यांप्रत्येकंताभ्यां ज्यंहुनेदितिभट्टाः ॥सूतकांतेततःपुत्रःकुर्याच्छांतिकपौष्टिकम् । कांस्यपात्रस्थतंतैलंवीक्ष्यादद्याद्द्विजन्मने॥ब्रह्मविष्णुमहेशेंद्रवरुणप्रीतयेततः । माषमुद्गयवव्रीहिप्रियंग्वादिप्रयच्छति ॥ स्वर्णदानंरुद्रजाप्यंलक्षहोमोद्विजार्चनम् । गोभूदानंषडंशेनकुर्याद्दोषोपशांतये(अपरार्के)धनिष्ठापंचकमृतेपंचरत्नानितन्मुखे । प्रक्षिप्याहुतित्रयंतत्रहुनेद्व्रह्वपामिति । ततोनिर्हरणंकुर्याद्दोषसाग्नेर्विधिःस्मृतः । इतरंनिखनेदेवजलेवाप्रतिपादयेत् ॥ त्रिपादर्क्षमृतेतद्वद्धिरण्यशकलंमुखे । तस्यापिष्टमयंकुर्यात्पुरुषत्रितयंततः । होमःप्रतिमुखंकुर्यात्तथावहवपामिति ॥ कार्पासयहंचकार्पासंकुसुंभंप्रतिपाद्यच । निर्यात्यसाग्निंसंस्कुर्याद्बुल्यग्ननीवान्यमुत्सृजेत् (तत्रैव) कनकंहीरकंनीलंपद्मरागंचमौक्तिकम् । पंचरत्नमिदंप्रोक्तमृषिभिःपूर्वदर्शिभिः ॥ रत्नानांचाप्यभावेतुस्वर्णंकर्षार्धमेवच । सुवर्णस्याप्यभावेतुआज्यंज्ञेयंविचक्षणैः ॥ मदनरत्नेप्येवम् (तथा) एकाशीतिपलंकांस्यंतदर्धंवातदर्धकम् । नवषट्त्रिपलंवापिदद्याद्विप्रायशक्तितः (तथान्यत्र) स्वगृह्योक्तविधानेनकृत्वाग्नेःस्थापनंततः । अन्वाधानंनिर्वपणंदेवतानांतथाहुतिःयमायधर्मराजायमृत्यवेचांतकायच । वैवस्वतायकालायसर्वभूतक्षयायच॥ औदुंबरायदध्नायनीलायपरमेष्ठिने । वृकोदरायचित्रायचित्रगुप्तायवैक्रमात् ॥ विधिनाश्रपणांकृत्वाएकैकामाहुतिंहुनेत् । कृष्णांगांकृष्णवस्त्रांचहैमनिष्ठकसमन्विताम्॥दद्याद्विप्रायशांतायप्रीतोभवतुमेयमः ॥ त्रिपादर्क्षेप्येतदेव (अपरार्के) पुनर्वसूत्तराषाढाकृत्तिकोत्तरफाल्गुनी।पूर्वाभाद्राविशाखाचज्ञेयमेतत्त्रिपादभं(मयूरचित्रगर्गाः) मृतःस्मशानंयोनीतउपजीवतिमानवः । गृहेयस्यप्रविष्टोसौतिष्ठेदथकदाचन॥ अचिरान्मृत्युमाप्नोतिहृतदारपरिग्रहः। तत्रशांतिप्रवक्ष्यामिधर्मराज

मतंयथा ॥ सक्षीराणांघृताक्ताना मग्नेर्हुत्वाशुचेबुधः ॥ औदुम्बरीणांविधिवत् ततःशांतिकृताभवेत् ॥ सावित्र्याष्टसहस्रेणक्षीरशांतिचकारयेत् । कपिलांतिल कांस्यञ्च हुतान्तेभूरिदक्षिणेति ( अथब्रह्मचारिमृतौशौनकः) ब्रह्मचारिमृतौ रीतिं कथयामिसमासतः । तत्रावकीर्णदोषस्य प्रायश्चित्तप्रशान्तये ॥ द्वाद शाब्दंषडब्दंवा त्र्यब्दंशक्त्याथवाचरेत् । स्नातकोब्रह्मचारीच निधनंप्राप्नुयाद्य दि ॥ संयोज्यचार्कविधिना संयोज्यौतौततःपरम् ॥ देशकालौस्मृत्वाऽमुकगो त्राऽमुकनाम्नोमृतस्यब्रह्मचारिणोब्रतविसर्गंकरिष्य इत्युक्त्वाहेम्नानांदीश्राद्धं कृत्वाऽग्निंप्रतिष्ठाप्याघारान्तेचतस्रभिर्व्याहृति भिरग्नयेव्रतपतयेव्रतानुष्ठानस म्पादनाय विश्वेभ्योदेवेभ्यश्चाज्यंहुत्वा स्विष्टकृदादिसमाप्यपुनर्देशकालौस्मृ त्वार्कविवाहंकरिष्यइत्युक्त्वाहेम्नानान्दीश्राद्धंकृत्वार्कशाखांशवञ्चहरिद्रयालि प्त्वापीतसूत्रेणवस्त्र युग्मेनचावेष्ट्याग्निंप्रतिष्ठाप्याघारांतेग्नयेबृहस्पतयेविवा हविधियोजकायच यस्मैत्वंकामंकामायेतिकामायव्याहृतिभिश्चाज्यंहुत्वा स्विष्टकृदादिसमाप्यार्कशाखांशवंचदहेत् (विधानमालायाम्) येषांकुलेब्रह्म चारीनिधनंप्राप्नुयाद्यदि । तत्कुलंक्षयमाप्नोतिसोपिदुर्गतिमाप्नुयात् । मृतस्य म्रियमाणस्यषडब्दंव्रतमादिशेत् ॥ त्रिंशद्भ्योब्रह्मचारिभ्योदद्यात्कौपीनकान्न वान् हस्तमात्राःकर्णमात्रादद्यात्कृष्णाजिनानिच । पादुकाछत्रमाल्यानिगोपी चंदनमेवच ॥ मणिप्रवालमालाश्चभूषणादिसमर्पयेत् । एवंकृतेविधानेचविघ्नः कोपिनजायते ॥ अत्रमूलंमृग्यम् (कुष्टिमृतौतुयमः) मृतस्यकुष्टिनोदेहंनिखने दुर्गमभूमिषु । वासरत्रितयंपश्चादुत्धृत्यान्यत्रतंदहेत् ॥ नगंगाप्लवनंकार्यंनिक्षेपे विधिरुच्यते । षडब्दव्रतपूर्णेनविधिनांत्यंकृतंचरेत् ॥ ततोस्थिसंचयंतस्यगंगा यांप्रक्षिपेत्सुधीः । मासिमासिततःकुर्यान्मासिश्राद्धानिपार्वणात् ॥ इत्येतत्कुष्टि मरणेकथितंशास्त्रकोविदैः (शुद्धितत्त्वेभविष्ये) शृणुकुष्टगणांविप्रउत्तरोत्तरतो गुरुम् । विचर्चिकातुदुश्चर्माचर्चरीयस्तृतीयकः । विकर्चूर्व्रणताम्रौचकृष्णाश्वे तेतथाष्टकमित्युक्त्वामृतेतुप्रापयेत्तीर्थमथवातरूमूलकम् । नपिंडंनोदकंकार्यं नचदानक्रियांचरेत् ॥ षण्मासीयत्रिमासीयमृतःकुष्टीकदाचन । यदिस्नेहाच्चरे

द्वाहंयतिश्चांद्रायणंचरत् ॥ अन्नतप्रायश्चित्तकुष्ठ्यादिदाहेइदंप्रायश्चित्तम् ॥ अतएवकुनख्यादिवत्कुष्ठिनोपिद्वादशरात्रंशूलपाणिनोक्तम् ॥ अतएवान्यदीयं कुष्ठिनोमरणांतमाशौचमुक्तं (कौर्मे) क्रियाहीनस्यमूर्खस्यमहारोगिणएवच । यथेष्टाचरणस्याहुर्मरणांतमशौचकम् (महारोगास्तु) वातव्याध्यश्मरीकुष्ठमेहोदरभगंदराः ॥ अर्शांसिग्रहणीत्यष्टौमहारोगाःप्रकीर्तिताइति (रजस्वलायास्तुवृद्धशातातपः) रजस्वलायाःप्रेतायाःसंस्कारादीन्निनाचरेत् । ऊर्ध्वंत्रिरात्रात्स्नातांतांशववधर्मेणदाहयेत्॥अतःप्रक्षाल्यकाष्ठवदश्च्व,त्र्यहेनदहेत् (संकटेतुमदनरत्नेस्मृत्यंतरे) उदक्यासूतिकावापिमृतास्याद्यदितांतदा । आशौचेत्वनतिक्रांतेदाहयेदंतरायदि ॥ उद्धृतेनतुतोयेनस्नापयित्वातुमंत्रतः । आपोहिष्ठेतितिसृभिर्हिरण्यवर्णाश्चतसृभिः ॥ पवमानानुवाकेनयदंतीतिचसप्तभिः । ततोयन्नपवित्रेणगोसूत्रेणाथतेद्विजाः ॥ स्नापयित्वान्यवसनेनाच्छाद्यशववधर्मतः । दाहादिकंततःकुर्यात्प्रजापतिवचोयथा ॥ यन्नपवित्रमापो अस्मानितिमिताक्षरायाम ॥ पंचभिःस्नापयित्वातुगव्यैःप्रेतांरजस्वलां । वस्त्रांतरावृतंकृत्वादाहयेद्विधिपूर्वकम् (गृह्यकारिकायां) अंतरिक्षमृतायेचवह्नावप्सुप्रमादतः ॥ उदक्यासूतिकानारीचरेच्चांद्रायणत्रयम् ॥ ततोयवपिष्टेनानुलिप्याष्टोत्तरशतंशूर्पोदकैः संस्नाप्यभस्मगोमयमृत्कुशोदकपंचगव्यशुद्धोदकैरापोहिष्ठापावमानीभिःसंस्नाप्यान्यवस्त्रेधृतेदहेदितिभट्टाः (अत्रप्रायश्चित्तमाहबौधायनः) उदक्यासूतिकामृत्यौचरेच्चांद्रायणत्रयमिति (सूतिकायास्तुमिताक्षरायाम) सूतिकायांमृतायांतुकथंकुर्वंतियाज्ञिकाः । कुंभेसलिलमादायपंचगव्यंक्षिपेत्ततः ॥ पुण्याभिरभिमंत्र्याथोवाचाशुद्धिंलभेत्ततः ॥ तेनैवस्नापयित्वातुदाहंकुर्याद्यथाविधि॥ अब्लिंगाभिर्मंत्रिताभिर्वारुदेव्याभिरेवच ॥ अन्यैश्चवारुणैर्मंत्रैःसंस्नाप्यविधिनादहेत (गृह्यकारिकायाम) सूतिकामरणेप्राप्ते सर्वौषध्यनुलेपनम् । असूतकीतुसंस्पृष्टाशूर्पाणांतुशतंक्षिपेत् (प्रायश्चित्तेविशेषस्तत्रैव) सूतिकातुयदासाध्वीविस्नातामरणंगता । त्रिवर्षपूर्णपर्यंतंशुद्ध्येत्कृच्छ्रेणसर्वदा ॥ इदंचाद्यब्दे ॥ सूतिकातुयदानारीरजसातुपरिप्लुता । म्रियेतचेत्तु सानारीद्विवर्षंकृच्छ्रमाचरेत् ॥ इ

दंद्वितीयेऽह्नि ॥ सूतिकातुयदासाध्वीविस्नातामरणंगता । अब्दकृच्छ्रेणशु
द्ध्येत्व्यासस्यवचनंयथा ॥ इदंतृतीयेऽह्नि (अत्राशक्तौपक्षांतरमुक्तंतत्रैव) सूति
कातुयदानारीविस्नातामरणंगता । त्रिपणावदिनादर्वागेकाब्देनविशुद्ध्यति(ऊ
र्ध्वंतु) सूतिकातुयदानारीप्राणांश्चैवपरित्यजेत् । मासमेकावधिंयावत्त्रिभिःकृ
च्छ्रैर्विशुद्ध्यति (गर्भिणीमृतौतुमदनरत्नेशौनकः) गर्भिण्युदक्यासंस्कारंशशु
संस्कारमेवच । प्रवक्ष्यामिसमासेनशौनकोहंद्विजन्मनाम् ॥ गर्भिणीमरणेप्राप्ते
गोमूत्रेणजलैःसह । आपोहिष्ठादिभिर्मंत्रैःप्रोक्ष्यभर्तासमास्थितः ॥ प्रेतंश्मशाने
नीत्वाथो लिख्यसव्येोदरन्ततः । पुत्रमादायजीवंचेत्स्तनंदत्त्वासुतायतु ॥ य
स्तेस्तनःशशयइत्यृचाग्रामेनिधायच । उदरंचाव्रणंकुर्यात्पृषदाज्येनपूर्यच ॥ मृ
द्भस्मकुशगोमूत्रैरापोहिष्ठादिभिस्त्रिभिः । स्नाप्यचाच्छाद्यवासोभिः शवधर्मेण
दाहयेत् ॥ तत्रैवषडशीतिमतेशाद्यानि ॥ गर्भिण्यांमृतायांदक्षिणांशिरसंनिधा
यतस्यानाभिरंध्रात्सव्यमुदरंचतुरंगुलंहिरण्यगर्भः समवर्ततेतिछित्वा गर्भश्चेद
प्राणस्तंप्रक्षाल्यनिखनेत्सयदिजीवन् जीवत्वंममपुत्रकेत्युक्त्वाक्षेत्रियेत्वेतिपंच
भिः स्नापयित्वाहिरण्यमंतर्धाय भूमौनिधायव्याहृतिभिरभिमंत्र्ययस्तेस्तनः
शशयइतिस्तनंपाययित्वाशिशुंग्रासंप्रापयेत् ॥ गर्भछेदस्थलेशतायुत्रायेतिपंचाहु
तीर्हुत्वाप्राणायस्वाहापूष्णेस्वाहेत्यनुवाकाभ्यांव्याहृत्याचाज्यंहुत्वाभिन्नमुदरं
सूत्रेणसंग्रथ्यघृतेनानुलिप्यब्राह्मणायतिलान् गांभूमिंसुवर्णंदद्यादथयथोक्तेन
कल्पनेनदहेत्बौधायनेनतुशतायुधायेतिपंचहोमानंतरं प्रयासायायासायवियासायसंयासायोद्यासायशुचेशोकायतप्यतेतपत्यै ब्रह्महत्यायैसर्वस्मैइतिस्वाहां
तैराहुतयोप्यधिकाउक्ताः(गृह्यकारिकायाम्)यदागर्भवतीनारीसशल्यासंस्थिताभवेत् । कुक्षिंभित्वाततःशल्यंनिर्हरेद्यदिजीवति ॥ प्रमीतंनिखनेत्तंतुप्रायश्चि
त्तमतःपरम् । सात्र्यस्त्रिंशताकृच्छ्रैःशुध्यतेशल्यदोषतः ॥ सगर्भदहनेतस्याव
र्णजंवधपातकं ।प्रायश्चित्तंचरित्वातुशुद्ध्यंतिपापकारिणः॥ दग्ध्वातुगर्भसंयु
क्तांत्रिरब्दंकृच्छ्रमाचरेत् ।अथान्वारोहणंस्त्रीणामात्मनोभर्तुरेवच॥ सर्वपापक्षय
करंनिरयोत्तारणायच।अनेकस्वर्गफलदंमुक्तिदंचतथैवच॥ जन्मांतरेचसौभाग्य

धनपुत्रादिवृद्धिदम् ॥ देशकालौस्मृत्वाऽरुंधतीसमाचरत्वस्वर्गलोकमहीयमान
त्वमनुष्यलोमसंख्याब्दावच्छिन्नस्वर्गवासभर्तृसहितचतुर्दशेंद्रा वच्छिन्नकालि
ककीडमानत्वमातृपितृश्वशुरकुलत्रयपूतत्वब्रह्मघ्नमित्रघ्नकृतघ्न पतिपूतत्वप
त्यविरयोगकामाभर्तृज्वलच्चितारोहणंकरिष्ये॥अनुगमनेतुफलमुल्लिख्यान्वारो
हणंकरिष्यइत्युक्त्वाहरिद्राकुंकुमांजना दियुतशूर्पाणिसुवासिनीभ्योदद्यात्(मं
त्रस्तु) लक्ष्मीनारायणोदेवोबलसत्त्वगुणाश्रयः। गाढंसत्त्वंचमेदेयाद्वायनैःपरि
तोषितः॥ सोपस्कराणिशूर्पाणि वायनैःसंयुतानिच। लक्ष्मीनारायणप्रीत्यै
सत्त्वकामाददाम्यहम्॥ अग्नेःसमीपमागत्यपंचरत्नानिपल्लवे। नीलांजनंतथा
बद्ध्वामुखेमुक्ताफलंन्यसेत् ॥ ततोग्निप्रार्थनंकृत्वामंत्रेणानेनमिश्रितम्। स्वाहा
संश्लेषनिर्विरणासर्वगोत्रहुताशन॥ सत्त्वंमार्गप्रदानेननयमांभर्तुरंतिकम्॥ ततो
ग्नावाज्येनाग्नयेतेजोधिपतयेविष्णवेसत्त्वाधिपतयेकालायधर्माधिपतयेपृथिव्यै
लोकाधिपतयेद्भ्योरसाधिष्ठात्रीभ्यः। वायवेबलाधिपतयेआकाशायसर्वाधि
पतयेकालायधर्माधिष्ठात्रेभ्यःसर्वसाक्षिणीभ्यः। ब्रह्मणेवेदाधिपतयेरुद्रायश्म
शानाधिपतयेचहुत्वाग्निंप्रदक्षिणी कृत्यद्रव्यमुपलांचसंपूज्यपुष्पांजलिंगृहीत्वा
ग्निंप्रार्थयेत्॥ त्वमग्नेसर्वभूतानामंतश्चरसिसाक्षिवत्। त्वमेवदेवजानीषेनवि
दुर्यानिमानुषाः॥ अनुगच्छामिभर्तारंवैधव्यभयपीडिता। सत्त्वमार्गप्रदानेन
नयमांभर्तुरंतिकम्॥ मंत्रमुच्चार्यशनकैःप्रविशेच्चहुताशनम् (गौडास्तु) इमाना
रीरविधवाइति॥ ओंइमाःपतिव्रतापरायाःस्त्रियोयायाःसुशोभनाः। सहभर्तुः
शरीरेणसंविसंतुविभावसुमितिचविप्रःपठेदित्याहुः (कातरांतु) प्रेतोत्तरेसुप्तां
देवरःशिष्योवाउदीर्ष्वेतिद्वाभ्यामुत्थापयेत्॥ एतन्महिमामिताक्षरादौज्ञेयः
(पृथ्वीचंद्रोदयेस्कांदे) अनुव्रजंतिभर्तारंगृहात्पितृवनंमुदा। पदेपदेश्वमेधस्य
फलंप्राप्नोत्यनुत्तमम् (यस्त्वंगिराः) यास्त्रीब्राह्मणजातीयामृतंपतिमनुव्रजेत्।
सास्वर्गमात्मघातेननात्मानंनपतिंनयेदिति (व्याघ्रपात्) नम्रियेतसमंभर्त्रा
ब्राह्मणीशोककर्शिता। नब्रह्मगतिमाप्नोतिमरणादात्मघातिनीतिपृथक्चि
तिपरम्॥ पृथक्चितिंसमारुह्यनविप्रागंतुमर्हति। अन्यासांचैवनारीणांस्त्री

धर्मार्थं परः स्मृत इत्युशनसोक्तेः ॥ पृथक्चितिस्तु क्षत्रियादिपरा (तद्विविप्राह्ये)
देशांतरे मृते पत्यौ साध्वी तत्पादुकाद्वयम् । निधायोरसि संशुद्धा प्रविशेज्जातवेद
सम् ॥ ऋग्वेदवादात्साध्वी स्त्री न भवेदात्मघातिनी । त्र्यहाशौचे निवृत्ते तु श्राद्धं प्रा
प्नोति शास्त्रवत् ॥ इमानारीरविधवा इति ऋग्वेदवादः ॥ त्र्यहाशौचमन्वारोहण
परमिति स्मार्ताः ॥ निषेधवाक्यानि प्रायश्चित्तार्थं मृतेन पतितेन वा सहमरणनिषे
धपराणीत्यप्याहुः ॥ अस्थिदाहे पलाशदाहे वा न पृथक्चितिदोषः ॥ अंगत्वेनस्था
नापत्त्या वा शरीरतुल्यत्वात् (यत्तु) ब्रह्मघ्नो वा कृतघ्नो वा मित्रघ्नो वा भवेत्पतिः ।
पुनात्यविधवा नारी तमादाय मृता तु येति हारीतीयं तत्पतितदाहादिनिषेधेन सहग
मनस्य दूरतोपास्तत्वादर्थवादमात्रमिति पृथ्वीचंद्रः ॥ जन्मांतरीयपापवता सह
मरणेनोद्धार इति स्मार्तगौडाः (शुद्धितत्त्वे व्यासः) दिनैकगम्यदेशस्था साध्वी चे
त्कृतनिश्चया । न दहेत्स्वामिनं तस्या यावदागमनं भवेत् (तत्रैव भविष्ये) तृतीये ह्नि
उदक्यायां मृते भर्तरि वै द्विजाः । तस्यानुमरणार्थाय स्थापयेदेकरात्रकम् ॥ एकां
चितां समासाद्य भर्तारं यानुगच्छति । तद्भर्तुर्यः क्रियाकर्ता स तस्याश्च क्रियां चरेत् ॥
स तद्गाहांतरम् ॥ यश्चाग्निदाता प्रेतस्य पिंडं दद्यात्स एव हीति वायवीयोक्तेः
(आपस्तंबः) चितिभ्रष्टा तु या नारी मोहाद्विचलिता भवेत् ॥ प्राजापत्येन शुध्येत्त
स्माद्वै पापकर्मणः (तथा) अन्वारोहे तु नारीणां पत्युश्चैकोदकक्रिया । पिंडदान
क्रिया तद्वच्छ्राद्धं प्रत्याब्दिकं तथा ॥ अन्वारोहे कृते पत्न्याः पृथक्पिंडांस्तिलांजली
न् । पृथक्शीलेन कुर्वीत दद्यादेकशीले तथा ॥ अन्यत्प्रागुक्तम् । इदं गर्भिणीबालाप
त्यासूतिकारजस्वलाव्यभिचारिणीभिर्न कार्यं ॥ स्वैरिणीनां गर्भिणीनां पतिता
नां च योषिताम् । नास्ति पत्याग्निसंवेशः पतितौ हि तथा उभाविति मदनरत्ने स्मृति
संग्रहोक्तेः (मदनरत्ने बृहस्पतिः) बालसंवर्धनं मुक्त्वा बालापत्या न गच्छति । व्र
तोपवासनियता रक्षेद्गर्भं च गर्भिणी ॥ तृतीयपादे रजस्वला सूतिका चेति पृथिवी
चंद्रोदये गौडीयशुद्धितत्त्वे च पाठः (तत्रैव बृहन्नारदीयेपि) बालापत्याश्च गर्भिण्यो
ह्यदृष्टऋतवस्तथा । रजस्वला राजसुते नारोहंति चितां शुताइति (अत्र) पतिव्रतासा
संदीप्तं प्रविशेद्या हुताशनमिति भारताद्दृग्वेदवादात्साध्वी स्त्रीति ब्राह्माच ॥ पतिव्र

तानामेवाधिकारोनदुर्वृत्तानाम् (यत्तु) अवमत्यचयाःपूर्वंपतिंदुष्टेनचेतसा । वर्ततेयाश्चसततंभर्तृणांप्रतिकूलतः ॥ तत्रानुमरणंकालेयाःकुर्वंतितथाविधाः। कामात्क्रोधाद्भयान्मोहात्सर्वाःपूताभवंत्युतेतिभारतं ॥ ततकैमुतिकन्यायेनस्तावकमितिपृथ्वीचंद्रः ॥ ब्राह्मणयाएकचितिरेवनपृथक्चितिः ॥ क्षत्रियादीनांपृथगेकावेतिकल्पतरुरत्नाकरमदनपारिजातादयः ॥ शुद्धिचिंतामणौचैवम् ॥ तत्रान्वारोहणेभर्तृशौचमध्ये ॥ तदूर्ध्वंवाकृतेत्रिरात्रमध्येएवदशपिंडाः ॥ सहगमनेतुभर्तुराशौचतुल्यमाशौचंपिंडदानंच ॥ अन्वितायाःप्रदातव्यादशपिण्डास्त्र्यहेणतु । स्वाम्याशौचेव्यतीतेतु तस्याःश्राद्धंप्रदीयतइतिशुद्धितत्त्वेशूलपाणौचपैठीनसिस्मृतेः ॥ संस्थितंपतिमालिंग्य प्रविशेद्याहुताशनम् । तस्यापिण्डादिकंदेयं क्रमशःपतिपिण्डवदिति शूलपाणिशुद्धितत्त्वधृतव्यासोक्तेः ॥ अन्यत्प्रागुक्तम् ॥ यदातुरजस्वलापिपत्नी मृतेपत्यौदेशकालवशात्तदैवानुगच्छतिनशुद्धिंप्रतीक्षतेतत्रविधिः ( रैवयाज्ञिकनिबन्धे ) यदास्त्रियामुदक्यायांपतिःप्राणान्समुत्सृजेत् । द्रोणमेकंतण्डुलानामवहन्याद्विशुद्धये। मुसलाघातैस्तदस्वक्स्रवतेयोनिमण्डलात् । विरजस्कामन्यमानास्त्वेचित्तेतदसृक्क्षयम् ॥ द्वात्रशौचंप्रकुर्वीतपंचमृत्तिकयापृथक् । त्रिंशद्विंशतिर्दशचगवांदत्वात्र्यहःक्रमात् ॥ विप्राणांवचनाच्छुद्धासमारोहेद्हुताशनम् । नारीणांसरजस्काणामियंशुद्धिरुदाहृता ॥ अत्रश्राद्धादौनिर्णयःपूर्वमुक्तः ॥

इतिश्रीभट्टकमलाकरकृतेनिर्णयसिंधावंत्यकर्मनिर्णयः ॥

( अग्निप्रवेशाशक्तौतुविष्णुः ) मृतेभर्तरिब्रह्मचर्यंतदन्वारोहणंचेति ( ब्रह्मवैवर्ते ) सहानुगमनंशस्तंवैधव्यस्याथपालनम् (यत्तुतत्रैव) कलौनान्यागतिःस्त्रीणांसहानुगमनाद्दृतइतिब्रह्मचर्याशक्यत्वपरम् ( तथाचमनुः ) ब्रह्मचर्यंचरेद्वापिप्रविशेद्वाहुताशनम् ( काशीखण्डेपि ) पत्यौमृतेपियायोषिद्वैधव्यंपालयेत्क्वचित् । सापुनःप्राप्यभर्तारंस्वर्गलोकंसमश्नुते ॥ अनुयातिनभर्तारंयदिदैवात्कथंचन । तत्रापिशीलंसंरक्षेच्छीलभंगात्पतत्यधः ॥ तद्वैगुण्यादपिस्वर्गा

त्पतिःपततिनान्यथा । तस्याःपिताचमाताच भ्रातृवर्गस्तथैवच ( अथविधवाधर्माः मदनरत्नेस्कांदे ) विधवाकबरीबन्धोभर्तृबन्धायजायते । शिरसोवपनंतस्मात्कार्यंविधवयासदा ॥ एकाहारःसदाकार्योनद्वितीयःकदाचन । मासोपवासंवाकुर्याच्चांद्रायणमथापिवा ॥ पर्यंकशायिनीनारीविधवापातयेत्पतिम् । नैवांगोद्वर्तनंकार्यंस्त्रियाविधवयाक्वचित् ॥ गन्धद्रव्यस्यसंभोगोनैवकार्यस्तया पुनः । तर्पणंप्रत्यहंकार्यंभर्तुस्तिलकुशोदकैः ॥ तत्पितुस्तत्पितुश्चापिनामगोत्रादि पूर्वकम् ॥ इदमपुत्रापरमितिमदनपारिजातः ॥ नाधिरोहेदनड्वाहंप्राणैःकंठगतैरपि । कंचुकंनपरीदध्याद्वासोनविकृतंवसेत् ॥ वैशाखेकार्तिकेमाघेविशेषनियमंचरेत् ( प्रचेताः ) तांबूलाभ्यंजनंचैवकांस्यपात्रेचभोजनम् । यतिश्चब्रह्मचारीचविधवाचविवर्जयेत् (श्राद्धादौतुविशेषःप्रागुक्तः । यत्तुबौधायनः ) संवत्सरंप्रेतपत्नीमधुमांसंविवर्जयेत् । अधःशायीतषण्मासानितिमौद्गल्यभाषितमितितदसवर्णापरमित्यपरार्कः(अथसंन्यासः । याज्ञवल्क्यः) वनाद्गृहाद्वाकृत्वेष्टिंसार्ववेदसदक्षिणां । प्राजापत्यांतदंतेतानग्नीनारोप्यचात्मनि ॥ अधीतवेदोजपकृत्पुत्रवानन्नदोग्निमान् । शक्त्याचयज्ञकृन्मोक्षेमनःकुर्यात्तुनान्यथा ॥ एतदाश्रमसमुच्चयपक्षे ॥ जाबालश्रुतौत्वन्येपिपक्षाउक्ताः ॥ यदिचेतरथाब्रह्मचर्यादेवप्रव्रजेद्गृहाद्वनाद्वा ॥ अथपुनरव्रतीवास्नातकोवास्नातकोवोत्सन्नाग्निकोवायदहरेवविरजेत्तदहरेवप्रव्रजेदिति ( अंगिराः) प्रव्रजेद्ब्रह्मचर्याद्वाप्रव्रजेद्वागृहादपि । वनाद्वाप्रव्रजेद्विद्वानातुरोवाथदुःखितः ॥ आतुरोमुमूर्षुः ॥ दुःखितश्चौरव्याघ्रादिभीतः ( भारते ) आतुराणांचसंन्यासे नविधिर्नैवच क्रिया । प्रैषमात्रंसमुच्चार्यसंन्यासंतत्रपूरयेत् ( जाबालश्रुतावपि ) यद्यातुरःस्यान्मनसावाचावासंन्यसेदिति ॥ अत्रविप्रस्यैवाधिकारः ॥ ब्राह्मणाःप्रव्रजंतीतिजाबालश्रुतेः ॥ आत्मन्यग्नीन्समारोप्यब्राह्मणःप्रव्रजेद्गृहादितिमनूक्तेश्चेतिविज्ञानेश्वरादयः ( वृद्धयाज्ञवल्क्योपि ) चत्वारोब्राह्मणस्योक्ताआश्रमाःश्रुतिचोदिताः । क्षत्रियस्यत्रयःप्रोक्ताद्वावेकोवैश्यशूद्रयोरिति ( माधवस्तु) ब्राह्मणःक्षत्रियोवाथवैश्योवाप्रव्रजेद्गृहा दितिकौर्म्माद्युक्तेर्वर्णत्रयस्या

प्यधिकारः ॥ पूर्ववाक्यंतुकाषायदण्डादिनिषेधार्थं ॥ सुखजानासयंधर्मोय
द्विषोर्लिंगधारणम् । राजन्यवैश्ययोर्नेतिदत्तात्रेयमुनेर्वचइतिबौधायनोक्तेरि
तिपक्षांतरमाह ॥ तत्त्वंतुकुटीचकादिपरमेतदिति ॥ योपिसंन्यासंपलपैतक
मितिकलौनिषेधःसोपित्रिदण्डादिपरइत्युक्तंप्राक् ॥ सचसंन्यासश्चतुर्धेत्याह
( हारीतः ) कुटीचकोबहूदकोहंसश्चैवतृतीयकः । चतुर्थःपरमोहंसोयोयः
पश्चात्सउत्तमः ॥ आद्यःपुत्रादिनाकुटींकारयित्वातत्रगृहेवावसन्काषायवा
साःशिखोपवीतत्रिदण्डवान्बन्धुषुस्वगृहेवाभुंजानआत्मज्ञोभवेत् ॥ एतदत्यंता
शक्तपरम् ॥ द्वितीयस्तुबन्धून्हित्वासप्तागाराणिभैक्षंचरन्पूर्वोक्तवेषःस्यात् ॥
हंसस्तुपूर्वोक्तवेषोप्येवदण्डः ॥ एकन्तुवैणवंदण्डंधारयेन्नित्यमादरादितिस्कां
दात्( विष्णुरपि ) यज्ञोपवीतंदण्डंच वस्त्रंजन्तुनिवारणम् । तावान्परिग्रहः
प्रोक्तोनान्योहंसपरिग्रहः (चतुर्थोपिस्कांदे) परहंसस्त्रिदंडंचरज्जुंगोवालनिर्मि
ताम् । शिखांयज्ञोपवीतंचनित्यंकर्मपरित्यजेत् ॥ अयमप्येकदंडएव ॥ येतुशि
खोपवीतादित्यागनिषेधास्तेकुटीचकादिपराः (यत्तुमेधातिथिः) यावन्नस्युस्त्र
योदंडास्तावदेकेनवर्तयेदिति ॥ तदपितत्परमेव (यच्चात्रिः) चतुर्धाभिक्षवःप्रो
क्ताःसर्वेचैवत्रिदंडिनइति ॥ तद्दृढगंडादिपरम् ॥ नयाष्टिपरम् ॥ वाग्दंडोथम
नोदंडःकर्मदंडस्तथैवच । यस्यैतेनियतादंडाःसत्रिदंडीतिचोच्यतेइतिमनूक्तेः ॥
तस्मात्परमहंसस्यैकदंडएव ॥ सोप्यविदुषः ॥ विदुषस्तुसोपिनास्ति ॥ नदंडंन
शिखांनाच्छादनंचरतिपरमहंसइतिमहोपनिषदुक्तेः ॥ ज्ञानमेवास्यदंडइतिवा
कयोश्च (यत्तुयमः) काष्ठदंडोधृतोयेनसर्वाशीज्ञानवर्जितः । सयातिनरकान्
घोरान्महारौरवसंज्ञितानितितद्वैराग्यंविनाजीवनार्थसंन्यासपरम् ॥ एकदंडं
समाश्रित्यजीवंतिबहवोनराः । नरकेरौरवेघोरेकर्मत्यागात्पतंतितइतिस्मृतेः
(यच्चाश्वमेधिके) एकदंडीत्रिदंडीवाशिखामुंडितएववा । काषायमात्रसारोपि
यतिःपूज्योयुधिष्ठिरेतितस्यापिपूर्वोक्तव्यवस्थाज्ञेया (अथतद्विधिःबौधायनः)
कृत्वाश्राद्धानिसर्वाणिपित्रादिभ्योष्टकंपृथक् ॥ वापयित्वाचकेशादीन्मार्जये
न्मातृकामाः ॥ सर्वाणीतिस्वस्यनवश्राद्धषोडशश्राद्धादिकृत्वेत्यर्थः ( स्मृत्यर्थ

सारेपि) एकोद्दिष्टविधानेनकुर्याच्छ्राद्धानिषोडश । अग्निमान्पार्वणेनैवविधि
नाग्निव्पेत्स्वयमिति (कात्यायनः) कृच्छ्रांस्तुचतुरःकृत्वापावनार्थमनाश्रमी
आश्रमीचेत्तप्तकृच्छ्रं तेनासौयोग्यतांव्रजेत् (बौधायनः) सदैवमार्षिकंदिव्यंपि
त्र्यंमातृकमानुषे । भौतिकंचात्मनश्चांतेअष्टौश्राद्धानिनिर्वपेत् (अत्रक्रममाह
हेमाद्रौशौनकः) देवश्राद्धेब्रह्मविष्णुमहेश्वरादेवताः ॥ आर्षेदेवर्षिब्रह्मर्षिक्षत्र
र्षयः ॥ देवर्षिक्षत्रर्षिमनुष्यर्षयोवा ॥ मरीच्यादिऋषयइतिसंन्यासपद्धतौत
च्चिंत्यम् ॥ दिव्येवसुरुद्रादित्याः ॥ मानुषेसनकसनंदनसनातनाः ॥ भूतश्राद्धेपृथि
व्यादिभूतानिचक्षुरादिकरणानिचतुर्विधोभूतग्रामश्चेतितिस्रः ॥ पित्र्येपित्रा
दित्रयोमातामहाश्च ॥ मातृकेमात्रादयस्तिस्रः ॥ आत्मश्राद्धेआत्मपितृपिता
महादेवताः ॥ आत्मश्राद्धंपरमात्मदैवत्यमितिसंन्यासपद्धतौतच्चिंत्यम् ॥ सर्व
त्रनांदीमुखस्थंविशेषणंज्ञेयम् ॥ सर्वत्रपिंडदानम् ॥ युग्माविप्राः ॥ दक्षक्रतूसत्य
वसूवाविश्वेदेवौ ॥ अन्यन्नांदीश्राद्धवदितिहेमाद्रिः (स्मृत्यर्थसारे) केशश्मश्रु
लोमनखंवापयित्वोपकल्पयेत् । दंडंजलंपवित्रंचशिक्यंपात्रंकमंडलुम् ॥ आस
नंकौपीनमाच्छादनंकंथांपादुकेइतिदशपंचवा ॥ एतच्चपूर्वेद्युर्नांदीमुखंकृत्वापरे
द्युःपुण्याहवाचनंकृत्वाकार्यमितिशौनकः (बौधायनः) त्रीन्दंडानंगुलीस्थूला
न्वैणवान्मूर्धसंमितान् । एकादशनवद्वित्रिचतुःसप्तान्यपर्वकान् । वेष्टिता कृष्ण
गोवालरज्ज्वातुचतुरंगुलान् । एकोवाताद्दृशोदंडोगोवालसदृशोभवेत् ॥ अ
नग्निरग्निमुत्पाद्यनित्येनविधिनाततः । इष्ट्योर्दर्विविधानेनेत्यर्थः ॥ स्वाग्नावे
वाग्निमान्कुर्यादपवर्गात्क्रमादितः । आज्यंपयोदधीत्येतत्त्रिवृद्वाजलमेववा ॥
ओंभूरित्यादिनाप्राश्यरात्रिंचोपवसेत्ततः । अथादित्यास्तमयात्पूर्वमग्नीन्विहृ
त्यसः ॥ आज्यमग्नौगार्हपत्येसंस्कृत्यैतेनचस्रुचा ॥ पूर्णयाहवनीयेतुजुहुया
त्प्रणवेनतत् । ब्रह्मान्वाधानमेतस्यादग्निहोत्रंहुनेत्ततः ॥ संस्तीर्यगार्हपत्यस्या
दर्भानुत्तरतोबहु । पात्राण्यासाद्यदर्भेषुब्रह्मायतनएवतु ॥ जागृयाद्रात्रिमेतांतु
यावद्ब्राह्मोमुहूर्तकः । अग्निहोत्रंस्वकालेतुहुत्वाप्रातस्तनंततः ॥ इष्टिंवैश्वा
नरींकुर्यात्प्राजापत्यमथापिवा (जाबालश्रुतौ) तद्धैकेप्राजापत्यमेवेष्टिंकुर्वंतित

दुतथानकुर्यादाग्नेयीमेवकुर्यात्पश्चात्तैवातवीयामेवकुर्यादित्युक्तम्॥ तेनात्रवि
कल्पः(अत्राहुः)अेताग्नेःप्राजापत्यातद्वाक्यशेषआग्नेयीर्नितबहुत्वश्रुतेः॥ अकाग्ने
स्त्वाग्नेयीति ॥ अनाहिताग्नेरिष्टिस्थानेवैश्वानरआग्नेयोवाचरुरितिमाधवः
(कात्यायनः)आत्मन्यग्नीन्समारोप्यवेदिमध्येस्थितोहरिम् । ध्यात्वाहृदित्वनु
ज्ञातोगुरुणाप्रैषमीरयेत् (कपिलः) विधिवत्प्रैषमुक्त्वाथत्रिरुपांशुत्रिरुच्चकैः ।
अभयंसर्वभूतेभ्योमत्तःस्वाहेत्यथोभुवि ॥ निनीयदंडशिक्यादिगृहीत्वाथबहिर्व्र
जेत् ( बौधायनः ) सखेमेत्यादिनादण्डयेनदेवाःपवित्रकम् । यदस्यपारेशिक्यं
तुपात्रंव्याहृतिभिस्तथा ॥ युवासुवासाःकौपीनंगृहीत्वाबांधवांस्त्यजेत् ( अथ
क्रमः ) तत्रसंन्यासेधिकारसिद्धयर्थस्वस्यनवश्राद्धषोडशश्राद्धसपिण्डनानिसा
ग्निःपार्वणान्यनग्निस्त्वेकोद्दिष्टविधिना कृत्वाऽनाश्रमी चेत्कृच्छ्रचतुष्टयमन्य
स्तुतप्तकृच्छ्रं कृत्वोदगयनेएकादश्यांद्वादश्यांवा साग्निरमावास्यायांपौर्णमा
स्यांचतुर्दश्यांवायथापर्वणिप्राजापत्यंस्यात् । तत्रदेशकालौस्मृत्वा परमहंसादि
संन्यासग्रहणाधिकारिस्थ्यर्थं इति संकल्प्यगणेशंसंपूज्यपुण्याहंवाचयित्वामातृकापू
जांवृद्धिश्राद्धंच कृत्वाऽस्तमयात्प्रागौपासनं समिध्याहिताग्निस्तुगार्हपत्ये ॥
विधुरोग्निहोत्रीतुशिक्याण्डमण्डनोक्तादिशाकुशपत्न्यासह पवमानेष्टयन्तंपूर्णा
हुत्यंतंवाधानंकुर्यात् ॥ ब्रह्मचारीचेल्लौकिकेविधुरश्चेद्व्याहृतिभिःप्रणवेनचा
ग्निमादायाग्नेअग्निरूपसामित्यानीयपृष्टोदिवीति निधायतेनैवसमिधश्चतत्सवितु
स्तांसवितुर्विश्वानिनइतितिस्रःसमिधोभ्यादध्यात् ॥ एवमग्नौसिद्धेकृष्णोपस्थव
र्ज्यवपनं कृत्वापयोदधियुतमाज्यमपोवा ॥ ओंभूःसावित्रींप्रविशामितत्सवितु
र्वरेण्यमितिप्राश्याचम्यपुनरादाय ॥ ओम् भुवः सावित्रींप्रविशामिभर्गोदेव
स्यधीमहीतिद्वितीयम् ॥ ओम् स्वः सावित्रींप्रविशामिधियोयोनःप्रचोदयादि
तितृतीयं ॥ समस्तयाचतुर्थं ॥ ओम् भूर्भुवःस्वः सावित्रींप्रविशामि०तत्सवितु०
यात्इति ॥ संन्यासपद्धतौतुत्रिवृदसीतिप्रथमं प्रवृदसीतिद्वितीयं विवृदसीतितृ
तीयंप्राश्यापःपुनंत्वितिजलंप्राश्यसावित्रीप्रवेशउक्तः॥ ततआहवनीयंविहृत्यब्र
ह्माणमुपवेश्याज्यंसंस्कृत्यचतुर्ह्रदिशावागृहीत्वासमित्पूर्वांशोंस्वाहापरमात्मन

इदंमितिहुत्वोपवसेत् ॥ ततःसायंहोमंवैश्वदेवंचकृत्वाग्नेरुदक्कुशानास्तीर्यदंडा दीनिदशपंदवासाद्यब्रह्मासनेकृष्णाजिनोपविष्टोरात्रौजागरंकृत्वाप्रातर्होमानंत रंप्राजापत्यांवैश्वानरींवाकृत्वा ऋत्विग्भ्यः सर्वस्वंब्रह्मणेचमधुपर्कांतैजसपात्रंद त्वादारुपात्राण्याहवनीयेप्रसमृन्मयान्यप्सुजलेक्षिपेत् ॥ कृष्णाजिनंत्वाददीत ॥ अनाहिताग्निस्तुवैश्वानरमाग्नेयंवाचरुंहुत्वापात्राण्यग्नौक्षिप्त्वा भूर्भुवःस्वरि त्यपःस्पृष्ट्वातरत्समंदीतिजप्त्वाविप्रान्संभोज्यपुण्याहंवाचयित्वाअन्वावपनंकृ त्वाहेमरूप्यकुंभजलैःस्नात्वापुरुषायचरुंकृत्वाप्राणायस्वाहेतिपंचाहुतीर्हुत्वा पुरुषसूक्तेनप्रत्यृचमाज्यंचरुंचजुहुयात् ॥ अत्रविरजाहोमंकेचिदाहुः (यथोक्तं शिवगीतासु)जुहुयाद्विरजामंत्रैःप्राणापानादिभिस्ततः । अनुवाकांतमेकाग्नःस मिदाज्यचरून्पृथक् ॥ आत्मन्यग्नीन्समारोप्ययातेअग्नेतिमन्त्रतः । भस्मादा याग्निरित्याद्यैर्विमृज्यांगानिसंस्पृशेत् ॥ पापैर्विमुच्यतेसत्यंमुच्यतेनात्रसंशयः (तथा)प्राणापानव्यानोदानसमानामेशुध्यंताम् ॥ ज्योतिरहंविरजाविपाप्माभू यासंस्वाहा ॥ सर्वत्रलिंगोक्तदेवताभ्यइदंमितित्यागः ॥वाङ्मनश्चक्षुश्रोत्रजिह्वा घ्राणरेतोबुध्याकूतिःसंकल्पामेशुध्यंताम्॥ ज्योतिर० त्वक्चर्ममांसरुधिरमेदो मज्जास्नायवोस्थीनिमेशुध्यंताम्॥ ज्योति०शिरःपाणिपादपार्श्वपृष्ठोरूदरजंघ शिश्नोपस्थपायवामेशुध्यंताम् ॥ ज्योतिरहं० उत्तिष्ठपुरुषहरितपिङ्गललोहि ताक्षिदेहिदेहिददापइतामेशुध्यंताम् ॥ पृथिव्यापस्तेजोवायुराकाशंमेशुध्यंता म् ॥ ज्योतिरहं० शब्दस्पर्शरूपरसगंधामेशुध्यंताम् ॥ ज्योति०मनोवाक्कायक र्माणिमेशुध्यंतांज्योतिःअव्यक्तभावैरहंकारैर्ज्योतिः ॥ आत्मामेशुध्यंताम् ॥ क्षुधेस्वाहा । क्षुत्पिपासायस्वाहा विविट्यैस्वाहा । ऋग्विधानायस्वाहा । क षोत्कायस्वाहा ॥ क्षुत्पिपासामलंज्येष्ठामलक्ष्मीर्नाशयाम्यहम् । अभूतिमसमृ द्धिंचसर्वान्निर्णुदमेपाप्मानस्वंस्वाहा ॥ अन्नमयप्राणमयमनोमयविज्ञानमयान न्दमयमात्मामेशुध्यंताम् ॥ ज्योति० ॥ ततःस्विष्टकृदादिहुत्वाब्रह्मणेहिरण्य माज्यपात्रंधेनुंचदत्वासमासिंचर्त्विग्युपतिष्ठेत् ॥ अत्रकेचिदनग्नेःसावित्रीप्रवेशं पूर्णाहुतिंचाहुः ॥ ततोयातेअग्नेयज्ञियातनूरितित्रिस्त्रिभिरेकैकांजिघ्रन्नात्मन्य

त्नीन्समारोप्यगुरवेसर्व्वस्वंदत्त्वा ॥ योब्रह्माणंविदधातिपूर्व्वं योवैवेदांश्चप्र
हिणोतितस्मैतंहदेवमात्मबुद्धिप्रकाशं मुमुक्षुर्व्वैशरणमहं प्रपद्यइत्युपस्थाय ॥
दक्षिणंजान्वाच्यपादावुपसंगृह्याधीहिभगवोब्रह्मेतिवदेत ॥ ततोगुरुरात्मानं
ब्रह्मरूपंध्यात्वाशंखंद्वादशप्रणवैरभिमंत्र्यतेनशिष्यमभिषिंच्य शन्नोमित्रइति
शांतिंपठित्वातच्छिरसिहस्तंदत्त्वापुरुषसूक्तंजप्त्वा ॥ ममव्रतेहृदयंतेदधामी
तिचजप्त्वोदङ्मुखःप्रणवार्थमनुसंदधद्दक्षिणेकर्णे प्रणवमुपदिश्यतदर्थंचपंची
करणाद्यवबोध्यअयमात्माब्रह्मतत्त्वमसिप्रज्ञानंब्रह्मेत्याद्युपदिशेत ॥ तदर्थंचव
देत ॥ ततोनामदद्यात । ततःशिष्यस्तेनोपदिष्टोहरिंस्मरन्नूर्ध्वबाहुस्तिष्ठन्देवा
न्प्रदक्षिणःकृत्वा ॥ ओंभूर्भुवः स्वःसन्न्यस्तंमयेतित्रिरुपांशुत्रिरुच्चैस्त्रिरत्युच्चै
श्चोक्त्वावाजलसमीपंगत्वास्नात्वा । अभयंसर्वभूतेभ्योमत्तःस्वाहेतित्रिरंजली
न्क्षिप्त्वा युवासुवासाइतिकाषायंकौपीनंवासश्चपरिधायसखामेगोपायेतिमु
ख्यवैणवंपालाशंबैल्वमौदुंबरंवादंडंगृह्णीयात ॥ अत्रपुत्रकामोगृहस्थःशंखेन
पुरुषसूक्तेनदंडमभिषिच्यदद्यादित्याचारः ॥ ततःशिखामुत्पाट्य ॥ ओंभूः
स्वाहेत्यग्नौजलेवाहुत्वातथैवोपवीतंहुत्वा ॥ येनदेवाःपवित्रेणेतिजलेपवित्रंयदा
स्यपारइतिशिक्यंसावित्र्याकमंडलुं सप्तव्याहृतिभिर्भाजनपात्रमिदंविष्णुरित्या
सनंबृसींवागृहीत्वा ॥ ओंभूस्तर्पयामीति व्यस्तसमस्ताभिर्महर्नमइतितर्पयि
त्वा ॥ भूःस्वधोंभुवःस्वधोंस्वःस्वधोंभूर्भुवःस्वर्महर्नमःस्वधेतिपितॄंस्तर्पयि
त्वोदुत्यंचित्रं तच्चक्षुर्हंसः शुचिषन्नमोमित्रस्येति स्नात्वाहुरभिमतीभिरापोहि
ष्ठेतिहिरण्यवर्णाभिःपावमानीभिर्व्याहृतिभिश्च मार्जयित्वाष्टोत्तरशतवारम
घमर्षणंप्राणायामांश्चकृत्वा ॥ ओंभूर्भुवःसुवरितिचपठित्वा ॥ नमःसवित्र
इतिसूर्यंचोपस्थायपुनःस्नात्वाजंघेक्षालयित्वा ॥ ओमितिब्रह्मोमितीदंसर्वमो
मितिब्रह्मवा सयज्ञयोतिर्यएषवेदोयस्यतपतिवेद्यमेवैतद्यएषवेदोयदवनमस्ती
तिजपित्वाष्टसहस्रंगायत्रींजपेदिति ( अथयतिधर्माः ) प्रातरुत्थायब्रह्मणस्प
तेइतिजपित्वादंडादीन्मृदंचनिधाय मूत्रपुरीषयोर्गृहस्थचतुर्गुणंशौचंकृत्वा
८चन्यपर्वद्वादशीवर्ज्यंप्रणवेनदंतधावनंकृत्वा तेनैवमृदाबहिःकटिंप्रक्षाल्यजल

तर्पणावर्ज्यंस्नात्वापुनर्जंघेप्रक्षाल्यवस्त्रादीनिगृहीत्वामार्जनांतंकृत्वा केशवादिन
मोंतनामभिस्तर्पयित्वा ॥ ॐ भूस्तर्पयामीत्यादिव्यस्तसमस्तव्याहृतिभिर्महर्ज
नस्तर्पयामीतितर्पयेत् ॥ ॐ भूःस्वाहेतिस्वाहाशब्दांतैःस्वधाशब्दांतैश्चैभिरेव
पुनस्तर्पयेदितिकेचित् ॥ ततआचम्यांजलिनाप्रणवेनजलमादायव्याहृतिभिरु
क्त्वगायत्र्यात्रिःक्षिप्त्वागायत्रींजपेत ॥ उदितेसूर्य्येप्रणवेनव्याहृतिभिर्वार्घ्यं
दत्वामित्रस्यचर्षणीत्याद्यैःपूर्व्वोक्त सौरीभिर्विष्णुस्त्वदेवोब्रह्मजज्ञानमि
तिचोपस्थायसर्वभूतेभ्योनमइतिप्रदक्षिणमावर्तते ॥ ततोनत्वा ॥ आदित्याय
विद्महेसहस्राक्षायधीमहि ॥ तन्नःसूर्य्यःप्रचोदयादितित्रिर्जपेत ॥ एवंत्रिकालं
विष्णुपूजांब्रह्मयज्ञंचकुर्यात ( अथभिक्षा ) विधूमेसन्नमुसले व्यंगारेभुक्तवर्ज्ज
ने । कालेपराह्णेभूयिष्ठेनित्यंभिक्षांयतिश्चरेदित्युक्तकाले ॥ उद्वयमितिचत
सृभिरादित्यमुपस्थायतेनैक्यंध्यात्वा ॥ आकृष्णेनेतिप्रदक्षिणंकृत्वायेतेपंथान
इतिजप्त्वा ॥ योसौविष्णवाख्यआदित्ये पुरुषोंतर्हृदिस्थितः । सोहंनाराय
णोदेवइतिध्यात्वाप्रणम्यतम ॥ त्रिदण्डंदक्षिणेस्कंधेततःसंधायबाहुना ॥ पात्रं
वामकरेक्षिप्त्वाप्रलेपयेद्दक्षिणेनस्त्विति बौधायनोक्तदिशात्रीपंचसप्तवागृहान्
गत्वाभवत्पूर्वांभिक्षांयाचित्वा ॥ पूर्णमसिपूर्णमेभूयाइत्यागत्यशुचिस्थलंप्रोक्ष्य।
ॐभूःस्वधानमइत्यादिव्यस्तसमस्तव्याहृतिभिःसूर्यादिदेवेभ्यो भूतेभ्यश्चभूमौ
क्षिप्त्वाभुक्त्वाप्रणवेनषोडशप्राणायामान्कुर्यादितिसंक्षेपः ( गौतमव्याख्या
यांभृगुः ) यतिहस्तेजलंदत्वाभैक्ष्यंदद्यात्पुनर्ज्जलम । भैक्षंपर्व्वतमात्रंस्यात्तज्जलं
सागरोपमम ॥ अत्रसर्वत्रमूलंमाधवापरार्कमदनरत्नस्मृत्यर्थसारादौज्ञेयम ( क
ण्वः ) एकरात्रंवसेद्ग्रामे नगरेपंचरात्रकम । वर्षाभ्योन्यत्रवर्षासु मासांस्तुचतु
रोवसेत ( जाबालश्रुतौ ) शून्यागारेदेवगृहतृणकुटीवल्मीकवृक्षमूलकुलाल
शालाग्निहोत्रगृहनदीपुलिनगिरिकुहरनिर्झर स्थंडिलेष्वनिकेतनइति ( मा
त्स्ये ) अष्टौमासान्विहारःस्या द्यतीनांसंयतात्मनाम । एकत्रचतुरोमासान्वा
र्षिकान्निवसेत्पुनः ॥ अविमुक्तप्रविष्टानांविहारस्तुनविद्यते ( अत्रिः ) भिक्षा
टनंजपस्नानंध्यानंशौचंसुरार्चनम । कर्तव्यानिषडेतानि सर्व्वथानृपदण्डवत ॥

मंचकंशुक्लवस्त्रंचस्त्रीकथांलौल्यमेवच । दिवास्वापंचयानंचयतीनांपतनानि षट् ॥ आसनंपात्रलोभश्चसंचयःशिष्यसंग्रहः । दिवास्वापोवृथाजल्पोयतेर्बंधकराणिषट् (दक्षः) नाध्येतव्यंनवक्तव्यंनश्रोतव्यंकथंचन । यतिपात्राणिमृद्वेणुदार्वलाबुमयानिच (मदनरत्नेअत्रिः) पित्रर्थंकल्पितंपूर्वमन्नंदेवादिकारणात् । वर्जयेत्तादृशींभिक्षां परबाधाकरीन्तथा (बृहस्पतिः) नतीर्थवासीनित्यंस्यान्नोपवासपरोयतिः । नचाध्ययनशीलःस्यान्नव्याख्यानपरोभवेत् ॥ एतद्वेदार्थभिन्नपरम् (अत्रिः) स्नानंसुरार्चनंध्यानंप्राणायामोबलिस्तुतिः । भिक्षाटनंजपःसंध्यात्यागःकर्मफलस्यच ॥ एतेयतिधर्माइत्यर्थः ॥ अन्येपिमाधवमिताक्षरादौज्ञेयाः ( यतिधर्मसमुच्चये ) नस्नानमाचरेद्भिक्षुः पुत्रादिनिधनेश्रुते । नपितृमातृक्षयंश्रुत्वास्नात्वाशुध्यतिसांबरः ( अथयतिसंस्कारः । स्मृत्यर्थसारे ) सर्वसंगनिवृत्तस्य ध्यानयोगरतस्यच । नतस्यदहनंकार्यं माशौचंनोदकक्रिया ( तथा ) कुटीचकंतुप्रदहेत्पूरयेत्तुबहूदकम् । हंसोजलेतुनिक्षेप्यःपरहंसंप्रपूरयेत् ॥ पालाशमूलेनदीतीरेन्यत्रवागन्धपुष्पालंकृतंशवंवाद्यघोषेणानीत्वादण्ड मात्रंव्याहृतिभिःस्नात्वासप्तव्याहृतिभिस्त्रिः प्रोक्ष्यदर्भानास्तीर्यनवघटेपंचरत्नोदकं क्षिप्त्वानारायणःपरंब्रह्मेत्यभिमंत्र्य तेनैवसंस्नाप्याष्टाक्षरेण वस्त्र गन्ध पुष्प धूपदीपादीन्दत्वा विष्णोहव्यं रक्षस्वेतिशवंगर्तेनिधायेदंविष्णुरितिदक्षिणे हस्तेदण्डंयदस्यपारे इतिसव्येशिक्यंयेनदेवाःपवित्रेणेतिमुखेजलपवित्रं सावित्र्योदरे पात्रंभूमिः भूमिंइतिगुह्येकमण्डलुंनिधायचित्तिःस्रुगितिदशाहोत्राभिर्मंत्रयेदितिविश्वादर्शटीकायांस्मृत्यर्थसारेच ( बृहच्छौनकस्तु ) यतिंपुरुषसूक्तेनस्नापयित्वावटंततः । प्रणवेनाष्टवारंतंप्रोक्षयेदथसर्वतः ॥ विष्णोहव्यंरक्षस्वेतियजुषाप्रणवेनच । गर्तेप्रेतंविनिक्षिप्यचेदंविष्णुर्विचक्रमे ॥ इतिमंत्रेणदंडंतुदद्याद्दक्षिणहस्तकोमूर्धानंभूर्भुवःस्वश्चेत्युक्त्वाशंखेनभेदयेत् ॥ गर्तंपुरुषसूक्तेनलवणेनप्रपूरयेत् । सृगालश्वादिरक्षार्थंसम्यग्गर्तंप्रपूरयेदिति ॥ कुटीचकस्यतुदाहःकार्यः ॥ यथासर्वंप्राग्वत्कृत्वाग्निंप्रज्वाल्याग्नेर्दक्षिणाकरेउपावरोहेत्यवरोह्यनिर्मथ्यवागर्तेवर्तिंकृत्वाग्निनाग्निः समि

ध्यतइत्यभिनदत्वासाविन्यासप्रणवेनवादहेत॥ ततोष्टशतंप्रणवंनारायणःपरंब्रह्मेति जप्त्वासशिरःप्रणवंव्याहृत्यागायत्र्यातदस्मात्स्थोनितीर्थेक्षिप्त्वास्नानाच्छुचिः नास्त्यन्यदौर्ध्वदेहिकम् ॥ त्रिदण्डग्रहणादेवप्रेतत्वंनैवजायतइतिउशनसःस्मृते एकादशेह्निपार्वणंतदपित्रिदंडिनः॥ हंसपरमहंसादीनांपार्वणादिकमपिनका र्यमितिशूलपाणिः (श्राद्धचिंतामणौदत्तात्रेयः) एकोद्दिष्टंजलंपिंडमाशौचंप्रेत सत्क्रियाम् ॥ नकुर्याद्वार्षिकादन्यद्ब्रह्मीभूतायभिक्षवे॥ प्रेतक्रिययैकोद्दिष्टनि षेधेसिद्धेपुनस्तद्ग्रहणमाब्दिकपरम् ॥ तेनतत्पार्वणमेवंत्रिदंडिनांद्वादशेनाराय णबलिः॥ तद्विधिरन्यश्चविशेषःप्रागुक्तः॥ इत्यलंबहुना॥ एवंनिरूपितमिदंग हनंतुधर्मतत्त्वंविचार्यवचनैश्चनयैश्चसम्यक् । तद्दोषदृष्टिमपहायविवेचनीयं विद्वद्भिरित्यविरतंप्रणतोस्मितेषु॥ १ ॥ मयासहायादहणादितंमंदमतिनाक्रिमे तच्छक्यंवाध्यवसितुमपि स्वल्पमतिना । तदेवंयत्किंचिद्भणितमिहविख्यातम हिमाप्रतापोयंसर्वोविक्रमतिंतुपित्रोश्चरणयोः॥२॥ योभाट्टतंत्रगगनार्णवक र्णधारःशास्त्रांतरेषुनिखिलेष्वपिमर्मभेत्ता । दोत्रश्रमःकिलकृतःकमलाकरेण प्रीतोमुनास्तुसुकृतीबुधरामकृष्णः ॥ ३ ॥ श्रीभट्टरामेश्वरसूरिसूनुश्रीभट्टनारा यणसूरिसूनोः॥ श्रीरामकृष्णस्यसुतःकृतीमंव्यधान्निबंधंकमलाकराख्यः॥ ४ ॥ नानानिर्णयवत्त्वान्निर्णयसिंधुःप्रोच्यतांविबुधाः । निर्णयसरोजवत्त्वान्निर्णय कमलाकरोप्यस्तु ॥ ५ ॥ वसुऋतुऋतुभूमितेगतेब्देनरपतिविक्रमतोथयातिरौ द्रे। तपसिशिववर्तिथौसमापितोयंरघुपतिपादसरोरुहेर्पितश्च ॥ जगतिसकल विद्यासिंधुसुष्टिंधयानांपरभणितिपरीक्षायुज्यतेसज्जनानाम् । तदिहमनिबंधे दूषणंभूषणंवायदिभवतिविदग्धैस्तद्ग्रवश्यंविमृश्यम् ॥

इतिश्रीमत्पदवाक्यप्रमाणपारावारपारीणश्रीमद्रामेश्वरभट्टसूरिसूनु नारायणभट्टसुतविद्वन्मुकुटहीरांकुर श्रीरामकृष्णभट्टात्मजदिनकरभट्टानुजकमलाकरभट्टकृतेनिर्णयसिंधौतृतीयःपरि च्छेदःसमाप्तः॥

इस पुस्तक को पंडित रामबिहारी और पंडित रामेश्वर ने शुद्ध किया है ॥

मुंशीनवलकिशोर प्रेस लखनऊ में छपी अगस्त सन् १८८८ ई० ॥

## मार्कण्डेयपुराण, तर्जुमानागरी और उर्दू सफ़े १६८६ जुज़ १०६ क़ीमत ३॥)

जिसका उल्था श्रीबाबू देवनन्दनसिंह रईस ख़ानदान राजबेतिया और ज़मींदार परगनात ज़िले तिरहुतवचम्पारनने कराया श्लोककेनीचे श्लोकके अनुसार भाषा टीकाहै और उर्दूटीका भी संयुक्तकर दोनों टीकाओंमें श्लोकवारअंक लगाकर सूचित कियाहै पैमाना ११+७½ छपी सन् १८८४ ई० ॥

## दुर्गास्तोत्र मूलसफ़े २६४ जुज़ १६ वर्क़ ८ क़ीमत ।) पुख़्ता

इसकी क़ीमत पहले १) थी अब कम करदीगई जैसा कि लिखीहै इसमें नीचेलिखेहुये स्तोत्र भी संयुक्त हैं कात्यायनी तंत्रोक्त प्रयोग बिधि, शतचण्डी विधान, कवच, कीलक, नवार्ण मंत्रविधि, रात्रि सूक्त, न्यासध्यानयुक्त तेरहों अध्याय, देवीसूक्त, उत्तरन्यास, सप्तशती रहस्यत्रय, और भी कई स्तोत्र संयुक्त हैं काग़ज़ बहुतमोटा गुन्दा अक्षर टैपके बहुतपुष्ट बहुतशुद्ध पैमाना ७+४½छपीहुई सन् १८८१ ई० पत्रानुमा है ॥

## दुर्गापाठ संस्कृत टीकासहित सफ़े १७६ जुज़ ११ क़ीमत ।)-

पैमाना १०+६ छपी सन् १८८१ ई० सनाभिहै ॥

## श्रीविष्णुभागवत सफ़ेबड़े २५१६ जुज़ १५७ वर्क़ २ क़ीमत ७) पुख़्ता

श्रीधरजीकी टीकासहित यह पुस्तक महाराजा पटियाला की आज्ञानुसार धर्म्मभण्डार के निमित्त छापीगई थी बहुत मोटे अक्षर कि बालक और वृद्धभी पढ़सकें पत्थरका छापा और बहुतही शुद्धकीगई पत्रानुमा अर्थात् सनाभि मध्यमें मूल और ऊपर नीचे टीकाहै पैमाना १३+९ छपी सन् १८७६ ई० ॥

## तथा श्रीमद्भागवत दशमस्कन्ध सफ़े६४४ जुज़४० वर्क़२क़ी०४) पुख़्ता

... के सब अलंकारों समेत है अर्थात् उसीका यह दशमस्कन्ध है ॥

## तथाश्रीमद्भागवतदशमस्कंधभाषाटीकासहितसफ़े८१६ जुज़ ५१ क़ी० ४)

इसका उल्था साधारण मनुष्योंके समझनेकेलिये टेठब्रजकी बोलीमेंहै और सनाभि अर्थात् बीच में मूल और ऊपर नीचे अर्थहै श्लोकार्थ जाननेके निमित्त अंकभी लगादिये यहपुस्तक मुख्य करके कथा बांचने और पाठ करनेकेलियेभी बहुत उपयोगी है पैमाना ११+८ छपीहुई सन् १८८५ ई० छापा पत्थर काग़ज़ गुन्दा ॥

## अपराधभंजनस्तोत्र सफ़े ६ वर्क़ ३ क़ीमत ।)।

जिसके पाठहोमात्रसे मनुष्यके सब पाप दूरहोते हैं पैमाना ६+५½ छपाहुआ सन् १८८४ई० छापा मोटेअक्षर टैप ॥

## कायस्थकुलभास्कर सफ़े १०८ जुज़ ६ वर्क़ ६ क़ीमत ≡)

लक्ष्मीनारायण रचित जिसमें सर्वपुराणों और अनेक प्रमाणोंसे कायस्थोंका क्षत्रियत्व प्रति पादन है पैमाना १०+६½ छपीहुई सन् १८७७ ई० ॥